श्रीमज्जगद्गुरुशंकराचार्यकरवीरपीठ—धार्मिकग्रंथावलिः ।

सप्तमं पुष्पम् ।

परमहंसपरिव्राजकाचार्यश्रीमज्जगद्गुरुशंकराचार्यान्वयसंजाताभिनव-
पंचगंगातीरवास—कमलानिकेतन—करवीरपीठाधिष्ठित
—श्रीविद्याशंकरभारतीस्वामिपाद—
( पण्डितमारुलकरोपाह्वनरहरिशास्त्रि )
— प्रणीतो —

# धार्मिकविमर्शसमुच्चयः ।

## द्वितीयो वि[illegible]

प्रथमावृत्तिः ।

शालिवाहनशकाब्दाः १८७० —*— खिस्ताब्दाः १९४८

मूल्यं रूपकपञ्चकम्

# प्रकाशकचे दोन शब्द



श्रीमज्जगद्गुरु शंकराचार्य करवीर पीठाकडून प्रतिवर्षी आचार्योत्सवामध्यें एका नूतन धार्मिक ग्रंथाचें प्रकाशन होऊन जनतेमध्यें स्वधर्मप्रसार करावा व स्वधर्मश्रद्धा दृढ व्हावी या उद्देशानें करवीरपीठाधिष्ठित विद्यमान श्रींनीं धार्मिक ग्रंथावलि सुरू केली. तदनंतर या धार्मिक ग्रंथावली द्वारां चारे पुष्पें प्रकाशित झालीं. त्यास अनुसरून चालू वर्षाच्या आचार्योत्सवप्रसंगीं श्रींनीं केलेला 'धार्मिकविमर्शसमुच्चय' या ग्रंथाचा दुसरा भाग प्रकाशित करताना आम्हास अत्यंत आनंद होत आहे.

सदर ग्रंथाचा पहिला भाग आनंदाश्रम, पुणें या संस्थेतर्फे प्रसिद्ध झाला आहे. या दुसऱ्या भागातील सर्व विमर्श (प्रकरणें) पहिल्या भागाप्रमाणें सप्रमाण लिहिले गेले आहेत. या विमर्शाचे सामान्य स्वरूप पहातां सध्या हिंदु समाजात जे अनेक वादग्रस्त प्रश्न प्रचलित आहेत त्यापैकीं बऱ्याच प्रश्नाची सनातन वैदिकधर्माच्या दृष्टीनें व्यवस्था कशी ठेविली आहे याचे विवेचन प्रमाण व युक्ति या दोहोंच्या सहाय्याने तर्कशुद्ध केलें आहे. वैदिकधर्माच्या दृष्टीने अनेक धार्मिक प्रश्नाचा सागोपाग विचार केलेला असा हा ग्रंथ अतिशय महत्त्वाचा असल्याने तो करवीरपीठाकडून प्रकाशित करताना आम्हाला श्रींनी प्रचलित परिस्थितींत हिंदुजनतेस योग्य मार्गदर्शन केलेबद्दल धन्यता वाटते.

प्रस्तुत भागास पीठाचे आस्थानपंडित वे. शा. सं. श्रीपादशास्त्री जेरे यांनीं भूमिका व येथील राजाराम कॉलेजमधील प्रोफेसर श्री. हुपरीकर यांनीं सुंदर उपोद्घात लिहून या ग्रन्थाचें महत्त्व जनतेच्या निदर्शनास आणलें

याबद्दल आम्ही त्यांचे व मुद्रितें तपासल्याबद्दल वे. शा. सं. सदाशिवशास्त्री माळुलकर यांचे आभारी आहोंत.

चिंतामणी प्रेसच्या व्यवस्थापकानीं सदर ग्रंथाचे मुद्रणकार्य परिश्रमपूर्वक करून दिलेबद्दल त्यांचेही आभार मानणें योग्य आहे.

गोपाळ विठ्ठल कुलकर्णी, माजनाळकर,
कारभारी,
श्रीस्वामीजगद्गुरु शंकराचार्य पीठ करवीर.

श्रीदत्तो विजयते।

# भूमिका

अथेह जगति सर्वेषां प्रज्ञाप्रकर्षशालिनां नानाविधाः किल व्यापारा नयनपथमवतरंति। न हि तत्र सुफलाः सर्वे। यतः केचन विफला विरुद्ध-फलाश्चापि प्रतीयंते। अत एव तत्त्वविदां वचनम्--

"सुखाय कर्माणि करोति लोको न तैः सुखं वान्यदुपारमं वा। विंदेत भूयस्तत एव दुःखमित्यादि।" किं वात्र निदानं स्यादिति जिज्ञासा समुदेति विवेचकचित्तभूमाविति निर्विवादम्। यावद्बुद्धिबलोदयं प्रसक्तायां विचारणाया साधनवैकल्यम्, अनुपायस्योपायत्वेनोपादानात्मकं विपरीतज्ञानं वा समुन्मिषति। नात्र वैमत्यम्। तत्र विपरीतज्ञानमेव समुद्भावयत्यनर्थपरं-पराम्। तदुच्छेत्तुमुपायाना तद्भिन्नानां च यथार्थज्ञानमेव समर्थम्। न हि केवलेन स्वानुभवेन व्यवहारनिपुणोपि पुमास्तदधिगंतुमीष्टे। अतो भवंति पर्यालोचनीयाः समधिकानुभवसंपन्नानां ह्यनुभवाः। समधिकानुभवसंपत्तिश्च यत्र प्रमाणचतुरस्रता, बहुकालवर्तमानता तत्रैव पदं लभते। तद्वयं चैकस्माद-न्यस्मिन् किंचिदधिकं ततोऽप्यन्यस्मिन् किंचिदधिकमिति प्रणाड्या सर्वात्मना-यत्र पर्यवस्यति स एव परमेश्वर इत्यभ्युपगम्यते प्रमाणविद्भिः। तस्यैव सम-धिकानुभवसंपत्तिः। तस्याः पर्यालोचनं वेदाना पर्यालोचनात्संपत्स्यते। तदर्थस्तु परमगहन इति तत्प्रकाशनाय स्मृत्यादीनां प्रवृत्तिः। अथ चैतेषा-मर्थावधारणं पुनर्मीमांसादितंत्राधीनम्। एतावता निश्चीयते श्रुतिस्मृतीतिहासा-दीनामर्थावधारणे विपरीतज्ञानस्य निरासः, उपायज्ञानस्य चाधिगमः सुसंपादो भवतीति। तदर्थावधारणं हि नितरां दुर्घटम्। तथा हि हेतुरत्र ग्रंथाना संपत्। सा द्रव्यसंपत्त्यधीनेति प्रायो नैव सुलभा। कथंचित् ग्रंथसंपल्लाभेऽपि नैव लभ्यते तदवलोकनेऽवसरः। लब्धेऽप्यवसरे सूक्ष्मवस्त्ववधारणपटीयसी सर्वांग-निपुणा सुपरिनिष्ठिता च बुद्धिरुपस्थिता न भवति।

सत्यामपि बुद्धौ साम्राज्यमालस्यादीनामनुवर्तेत इति तत्सर्वथा सुदुर्घटं संपद्यत इत्युक्तिर्नातिशयकोटिमाटीकते। अथास्य सौलभ्ये पदवाक्यप्रमाणज्ञेन विद्योदधिमालोड्यामृतमिव सारं समाकृष्य ग्रंथविरचनमेवाभ्युपायः। तत एव चाल्पप्रज्ञावतामल्पायासेन निस्संदिग्धमुपायाना परिज्ञानम्। येनाभीष्टं निष्प्रत्यूहं सिध्यति। तत्तादृशविधातारमंतरा सारसर्वस्वोद्भासितग्रंथग्रथनं परं भवति गगनकुसुमायमानम्। यत्र वा समुल्लसति बुद्धेर्वैभवं, नैव तत्र प्रीतिभावं समश्नुते शास्त्रपाडित्यं, न वा व्यवहारनैपुण्यं, न वा प्रतिभासौंदर्यादिकम्। यत्र तु विराजते निखिलगुणगणानामभिरामता। तत्तादृशस्तु विरल एव। एतादृशस्य प्रायशो दौर्लभ्यमालक्ष्य उक्तसर्वसाधनसंपत्समन्विताः श्रीशाकरजगद्गुरुकरवीरपीठाधिष्ठितश्रीचरणाः स्वयमेवात्र प्रवृत्ताः सन्त उपन्यभांत्सुर्विभागद्वयोपेतं **धार्मिकविमर्शसमुच्चयाख्यं** प्रबंधरत्नम्। यस्य च प्रथमो भागः पूर्वमेव प्रकाशितः। द्वितीयेऽस्मिन् विभागे सन्निवेशिताः किल भूयांसो विषयाः। तत्र, मानवः प्रायो विपन्नावस्थायामेवालौकिकमुपायमनुसरति। कलयति चालौकिकत्व गणेशोत्सवादिषु। विना विचारं नैव शक्नोति लब्धुं तेषा परिज्ञानम्। तदभावे चोत्सवादिकं विधीयमानमपि न कल्पते फलायेति गणेशोत्सवविमर्शं प्रथम विधाय श्रुतिस्मृतिन्याय चानुरुध्य प्रदर्शितः फलेग्रहिरुपायः। अलौकिकाना ह्युपायाना फलमीश्वराद्भवतीति सिद्धातमालोच्य ईश्वरास्तित्वप्रश्नविमर्शो विहितः। आस्ता तावदीश्वरसद्भावः। स त्वेक एव नानाविधेषु सकटेषु फल विधातुं कथं प्रभुरिति जिज्ञासा ध्रुवप्रह्लादादीनां निदर्शनेनैव शाम्यति। तत्र तेषा रक्षण व्यधाद्भगवान् किल धृत्वैवावतारमित्यतोऽवतारमीमांसाया प्रवृत्तो विमर्शः। न केवलमापन्निरास एव फलमीश्वरससेवनतः। यतः समुज्जृंभते नित्यनिरतिशयसुखरूपपरमपुरुषार्थोऽपि। ज्ञानमेवात्र द्वारम्। तच्चाद्वैतात्मसाक्षात्कारात्मकमिति बाढं विमर्शनीयावद्वैतप्रमाणप्रश्नाक्षेपविमर्शौ। विवेकोऽपि क्रियमाणो वैफल्यमापादयत्यसत्यां चित्तशुद्धौ। सा तु चित्तशुद्धिरशुद्धेरपगमात्। तस्याश्चापगमो विहितानुष्ठितिप्रतिषिद्धपरिहृत्यंतरा

नैव संभवतीति व्यवहरंति गरीयांसो विवेचकवरीयांसः। विहितानुष्ठानप्रतिषिद्ध-परिहारयोः परं कारणभावमुपयाति 'सपरिकरं धर्माधर्मज्ञानम्। तत्र स्वरूप-साधनफलानां विचारे प्राधान्यतः कान्यत्र तत्त्वानीति प्रवृत्तायां जिज्ञासायां वर्णाश्रमव्यवस्था, पूर्वोत्तरजन्म, आत्मनित्यत्वं, संसारदुःखमयतेति चतुर्णां विचारः प्रदर्शितः। प्रतिबंधकसद्भावे विहितप्रतिषिद्धयोः प्रवर्तननिवर्तने धर्मा-धर्मज्ञानतोऽपि नैव निर्वहतः। नैतत्परोक्षं प्रेक्षावताम्। तेषु प्रतिबंधकेषु श्रद्धाराहित्यं, विपद्ग्रस्तता, अर्थाभावश्च प्राधान्यमवगाहते। श्रद्धातदुपचय-विमर्शनेन श्रद्धायाः संपादनं श्रद्धाराहित्यं विघटयति। विहितापत्प्रतीकारः पराकरोति विपत्तिम्। अर्थाभावमपनयति चार्थार्जनोपायः। एवमर्थार्जनकाले तदूर्ध्वं चातिमात्रं सावधानैर्भाव्यम्। यतः किंचिदनवधाने प्रादुर्भवंति भूयांसोऽनर्थाः। उक्तं चाभियुक्तैः। —

**'स्तेयं हिंसाऽनृतं दंभः कामः क्रोधः स्मयो मदः।**
**भेदो वैरमविश्वासः संस्पर्धा व्यसनानि च।**
**एते पंचदशानर्था ह्यर्थमूला मता नृणाम्॥** इति।

यथा चैतेषामनर्थानां परिवर्जनं न्यायतोऽर्थसंपादनं भवेत्तथा यत्नः समास्थेयः। निसर्गो ह्ययं द्रविणस्य यत्प्रायेण त्यागभावनां प्रतिबध्नाति। समुद्भावयति च लोभवृत्तिमिति दानमहत्त्वमनुसंधानेन समुद्दीपिता वितरण-वांछा तनोति स्वभावतः स्वकार्ये पूज्यानामुत्सवेषु। तस्मात्समुदितजिज्ञासस्य स्वयमेव प्रवृत्तिरुपावर्तते वेदविद्विमर्शने। ते तु महात्मान आत्मयज्ञेना-प्यात्मनो जन्म कृतार्थयंतोऽवबोधयंति यन्मनुजां जन्मनः साफल्यसंपादनं नाम प्रमुखं कर्तव्यमिति। प्रवर्तमाने च तस्मिन् किं वास्य जन्मनो महत्त्व-मिति परीक्षणं प्रसज्जते। तत्र च समापतति भारतीयपंचजनोत्पत्तिविमर्शः।

**'भारते लभते जंतुर्मानुष्यं पुण्यसंचयात्'**

इत्यादिवचननिचय उपपत्तिसध्रीचीनो मनुष्यजन्मनः पुण्यहेतुत्वमवगमयति। तथा चात्मजन्मनाऽस्य सदुपयोगाद्वियोजनं दुरुपयोगे नियोजनं वा नार्हतीत्यत्र

न संदेहकणिकापि । तन्मनसीकृत्य साफल्यसंपादने प्रवृत्तानां कथं वा प्राचीनैस्तत्संपादितं पूर्वतः को वावलबितः पंथास्तैरिति सूक्ष्मविचारणायां कालपरिच्छेदविधुरो वैदिकधर्म एवात्र परिस्फुरति । स चेत्थमनुशास्ति—सुख-दुःखादेरुद्भवः साधनसव्यवहारश्चोपतिष्ठति दैवयोगादिति निर्धार्य संस्काराः समनुष्ठीयंतामिति । संस्कारैः संस्कृतेऽतरंगे समुपजायते निवृत्तिः काम्य-कर्मणः, प्रवृत्तिः पावनकर्मणीति सुप्रसिद्धम् । उपस्थितेऽत्र कदाचित्प्र-तिबंधे प्राक्कृतकर्मणः फलमेतदिति विभाव्य तन्निरसनेन चेतसस्तत्रैव संयमो विधेयः । एवं वागादींद्रियाणामपि संयमो वाग्विमर्शे तदनुकूलान्नादेश्च विमर्शं विधाय सुष्ठु संपादनीयः । यतस्तस्मात्परमफललाभः । तथा च शास्त्रम्—

यस्य वाङ्मनसी शुध्दे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदांतोपगतं फलम् । इति ।

अमुमेवार्थं द्रढयति दुराचारपरिणामविमर्शोऽपि । अथात्र ब्राह्मणेन विशेषतः प्रयतनीयम् । यतो ब्राह्मण्यं महत्पुण्यरूपं महतापि प्रयतनेनोप-लब्धुमशक्यमिति विस्पष्टयति विश्वामित्रोपाख्यानम् । 'ब्राह्मणस्य तु देहोयं क्षुद्रकामाय नेष्यते ' इति वचोऽपि तमेवार्थमुपष्टभ्नाति । सर्वतो ब्राह्मण्यविमर्श-नेनेदमेवोपनमति, यत्तेन सदाचारपरिपालनमेव कर्तव्यमिति । तच्च तदैव सम्यगुपपद्यते यदा, धर्मश्रद्धा, सत्यनिष्ठा, महत्त्वाकांक्षा, स्वाभिमानः, परोप-कारः, सौशील्यं, संयमो, धैर्यमौदार्यमित्यादयो गुणाः समुत्कर्षं भजंते । तेषा च समुत्कर्षः कुलोत्कर्षादिना सभाव्यते ।

अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥

इति मनुवचनात्प्रतीयते भार्याधीनः सुपुत्रजननधर्म-कार्यादिव्यंवहारः । स च भार्यायाः सामंजस्ये सामंजस्यमुद्वहति । सा हि सुविवाहात्सुशिक्षणाच्च सामंजस्यमुपेति यतोऽतः समीक्षणीय आर्यस्त्रीणां शिक्षणविवाहयोर्विमर्शः ।

समीचीनव्यवस्थैव सुधारणापदार्थ इति जानता कदाचिदधुना सुधारणा-पदेन व्यवह्रियमाणेषु विषयेषु तादृशी मतिरुद्भवेदिति निरूपणपदमधिगच्छति सुधारणाभासविमर्शः। अन्येभ्योऽपि हेतुभ्यो बुद्धेः संचलनं मा भूदिति मति-भ्रशविमर्शो जागर्ति। प्रथते हि घंटाघोषः शास्त्रतत्त्वविदाम्, 'शुचिना कर्म कर्तव्यम्' इति। तस्मादवर्जनीयो भवत्यस्पृश्यस्पर्शपरिहारविमर्शः। एव-मुपदर्शितविमर्शाः सपरिकरधर्मज्ञानजनने भृशमुपयोगमावहंतः प्रदर्शयन्ति रहस्यमाचारः परमो धर्मः स च समग्रोऽनुष्ठेय इति। समग्राचारपरिपालने सर्वथा परिस्थित्यादेः प्रातिकूल्ये यावच्छक्यं कर्तव्यमेव। यतः किल भगवता महर्षिणा गौतमेन संस्कारैकदेशसद्भावेऽप्यात्मगुणाना संपादनात्कृतार्थता प्रति-पादिता। तत्राप्यवश्योपादेयता पंचमहायज्ञानाम्। प्रसिद्धपंचमहायज्ञानुष्ठानं न सर्वेषा सुलभम्। तत्स्थाने समुपदर्शिताना पित्रोः परिचर्या, पतिशुश्रूषा, सर्वभूतहितदक्षता, कृतज्ञता, ईशभक्तिरिति पचमहामखाना निरूपणाय प्रवर्तते पंचमहायज्ञविमर्शः। ततो ब्रह्मभक्त्युन्मेषे मतिरञ्जसाऽवतरति ब्रह्मात्म-ज्ञाने। येन परमानंदलाभः परमकृतकृत्यता च संपद्यते।

**'अयं हि परमो धर्मो यद्योगेनात्मदर्शनम्'**

इति ब्रह्मज्ञानात्मकः परमधर्मः सवादतदुत्तरात्मकेन रमणीयतरप्रकरणे-नान्ते प्रदर्शितः। तथा च साधकबाधकप्रदर्शनेनाभ्युदयनिःश्रेयसोपायं वैदिक-सिद्धांतसिद्ध सरलामप्यर्थतो गभीरा भाषां सुलभा प्रतिपादनशैलीं शोभनां च युक्तिमाश्रित्य प्रतिपादयति धार्मिकविमर्शसमुच्चय.। ततोऽस्य महत्त्वविषये किमधिकलेखनेन। विलोकनेन विस्पष्टी भविष्यतीति शिवम्।

मिति चैत्र शुद्ध १ शके १८७०
करवीर.

श्रीपादशास्त्री जेरे,
आस्थानपंडित
श्रीमज्जगद्गुरु शंकराचार्य पीठ करवीर.

॥ श्रीः ॥

# उपोद्घातः ।

गोष्पदीकृतसंसारागाधपाथोधिपादुकम् ।
वन्दे श्रीशंकराचार्यं सच्चिदानन्दरूपिणम् ॥

सत्यज्ञानानंतलक्षणमजमपि ब्रह्म स्वकल्पितानिर्वचनीयमायाशक्त्या रज्जुसर्पन्यायेन विवर्तरूपजगतो जन्मस्थितिभंगकारणं भवतीति श्रीभगवत्पूज्यपादैः श्रुतिशिरोरहस्यमुद्भावितम् । तस्मादेव ब्रह्मणः 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' इत्यादिश्रुत्यनुसारेण श्रुतिवाण्या निःश्वासरूपेण संभव इत्यतः श्रुतिवाण्येव तत्स्वरूपाधिगमे प्रमाणभूतेति वैदिकराद्धांतः । पदवाक्यप्रमाणपारावारपारीणैः श्रीभगवत्पूज्यपादैः सुदृढशास्त्र युक्तिबलेन वेदांततात्पर्यं निर्णीय गीर्वाणसारस्वत समृद्धिं प्रापितं, जीवानुद्दिधीर्षुभिश्च तैः श्रुतिरहस्योद्बोधकैर्भाष्यादिग्रंथैर्मोक्षनिःश्रेणी निर्मिता । यद्यपि पदवाक्यप्रमाणानि यथाक्रमं वेदांतार्थनिर्धारणोपायभूतानि, तथापि श्रुत्यनुभवप्रमाणतस्तानि गौणत्वं भजंत इति तेषां सिद्धांतः, यतो ब्रह्मसाक्षात्कारे श्रुत्यनुभवावेव प्रभवतस्तर्कमात्रमपर्याप्तं, तर्केण च श्रुत्यविरोधिना भाव्यम् । इत्थं विज्ञातं स्याद्यद्भगवत्पूज्यपादैर्यावान् तर्काश्रयः कृतो न तावानन्येन केनापि भारतीयतत्त्वविदा । अत एव संप्रतितने काले पाश्चात्यविद्यावतां तर्काश्रयिणां जनानां चित्तानि सर्वथा समाधातुं यथा भगवत्पूज्यपादानामद्वैतसिद्धांतः समर्थस्तथा नान्यः कोऽपि । किंतु मनोबुद्ध्यतीतपरमात्मसाक्षात्कारे पुरुषबुद्ध्याश्रितं तर्कप्रमाणं 'यतो वाचो निवर्तंते' इति श्रुत्यनुसारत एव प्रतिहतं भवति, श्रुतिप्रमाणमेवात्र ज्यायः । एवं भगवत्पूज्यपादैः श्रद्धातर्कयोर्यः समन्वयो विहितः स न केवलमद्यत्वेऽपि तु भावि-

न्यपि काले समुचितमार्गप्रदर्शको, यतो व्यावहारिकसत्ताया कृतार्थस्तर्कः श्रुतिसचिवः सन्नेव जीवं पारमार्थिकीं सत्ता क्रमशो गमयति।

जीवब्रह्मैक्यमेव श्रुतीना तात्पर्यमिति तेषामपरः सिद्धांतः। परमार्थतः परमात्मरूपः सन्नपि जीवः स्वीयानाद्यविद्यावशतो जीवत्वं नामरूपात्मकं जगद्द्वैतं चाद्वयब्रह्माधिष्ठानेऽध्यस्यति। ब्रह्माभिन्नोऽपि सोऽविद्ययाऽऽत्मानं भिन्न मन्यमानो जनिमृतिरूपबधेनाकुलीक्रियमाणश्च कल्पितेऽप्यस्मिन्जगत्प्रपंचेऽध ऊर्ध्वं संसरति। अंततो मानुषी तनुमाश्रित्य विवेकशालिन्या बुध्द्या युक्तः स यदि तीव्रमुमुक्षुः स्यात्, रजस्तमसी निःसार्य यदि विशुद्धसत्त्वः स्यात्तर्हि स तत्त्वज्ञानेनौपाधिकं सकलबंधं विहायानादिसिध्दं सत्यज्ञानानंतलक्षणं स्वीयं ब्रह्मस्वरूपं पुनरधिगंतुं पारयतीति ब्रह्मविदामनुभूतिः। 'न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते' इत्यजातिं ख्यापयता परमगुरूणां श्रीगौडपादाचार्याणामनुभवप्रमाणप्रतिष्ठाया स्थिरीभूता अपि भगवत्पूज्यपादा 'उपायः सोऽवताराय नास्ति भेदः कथंचन' इत्यादिवचनबलेन जगज्जन्मादिप्रतिपादकाना कर्मोपास्तिज्ञानपराणां च श्रुतिवाक्यानां ब्रह्मण्येव समन्वयं विधाय भव्यमद्वैतप्रासादं निर्मितवंतो जीवानां मुक्तिलाभाय। उपक्रमोपसंहारादितात्पर्यलिंगैरुपनिषद्वाक्याना विरोधाभासमपसार्य तेषामेकवाक्यतां च प्रतिष्ठापितवतः। जीवाविद्यानिरासार्थमेव प्रवृत्तानि सर्वाणि शास्त्रादिप्रमाणानि शाखाचंद्रन्यायेनैव स्वप्रकाशसाक्षिणमुपदिशंतीत्यतोऽविद्यानिवर्तकत्वेन तानि व्यावहारिकसत्ताया सर्वथा स्वीकार्याणीति श्रुतिशिरोरहस्यमाविष्कुर्वद्भिर्भगवत्पादाचार्यैः पदवाक्यप्रमाणपुरःसरं शास्त्रसमन्वयः प्रतिष्ठापितः।

उपनिषद्वाक्येषु कानिचित्सृष्टिस्थितिसंहारकर्तृकत्वं ब्रह्मणः कथयंति, कानिचित्तस्य वागाद्यगोचरत्वं निरुपाधिकत्वं च वर्णयंति। एतदुभयविधवाक्यसमन्वयार्थं भगवत्पूज्यपादैर्विवर्तवादं समाश्रित्य जगद्ब्रह्मणो. कार्यकारणभावः कल्पितः, चेतनं ब्रह्म जगतोऽभिन्ननिमित्तोपादानकारणमित्यूर्णनाभिदृष्टान्तेन च स्थापितम्। अतः सत्स्वपि जगज्जन्मादिषु निरुपाधिकं ब्रह्माधिष्ठानं सर्पोत्पत्ति-

कारणभूता रज्जुरिव न कथंचिदपि विपरिणमत इति कल्पितकार्यकारणभाव-पुरस्सरं श्रुतिवाक्यानामविरोधः संसाधितोऽसाधारणप्रज्ञाविभवैस्तैः। अन्यशास्त्रैः स्वीकृतं कार्यकारणयोर्भिन्नत्वं नात्र तत्त्वापादकं, यतः कुत्र कथं वा कारणं कार्यावस्थामापन्नमिति तु न प्रत्यक्षं ज्ञातुं पार्यते, कार्यग्रहणेनैव कारणानुमानं कथमपि संभाव्यते। किंतु व्यावहारिकसत्ताया स्वीकृतं कार्यकारणयोर्भिन्नत्वं पारमार्थिकसत्ताया स्वरूपेणावस्थातुं न शक्नोति। अत एव भगवत्पूज्यपादैर्जगत्कार्यस्यानिर्वचनीयत्वं प्रतिष्ठापितम्। इदमनिर्वचनीयत्वं सप्रतितनपाश्चात्यविज्ञानिभिरपि प्रकारांतरेणाभ्युपगतमिति भाति, यतो जगतोऽन्तिमसत्त्वरूपेण कल्पितयोः ऋणविद्युदणुधनविद्युदण्वोः (Electrons and protons) संबंधोऽनिर्वचनीय एवेति प्रवदंतः पाश्चात्यविज्ञानिनो जडवाद परित्यज्य शनैः शनैः चेतनकारणवादं समवलंबमानाः संप्रति दृश्यते। अनेन सुविज्ञात स्याद्भगवत्पूज्यपादैः प्रतिपादितं जगतोऽनिर्वचनीयत्वमद्यत्वेऽप्यविचल तिष्ठतीति। अन्यशास्त्रैः समुद्भाविताः सर्वेऽपि कारणवादाः, सर्वमपि प्रायोगिकं विज्ञानं, सर्वापि तर्कयुक्तिसरणिः सर्वोऽपि दिक्कालादिप्रपच इत्येतेषा व्यावहारिकदृष्ट्या सापेक्षं सत्त्वं, परमार्थतस्त्वनिर्वचनीयत्वमेव सिध्यति। अतो जगज्जन्मादीना सर्वोपपत्तिषु विवर्तवाद एव समुत्कृष्टोपपत्तिः, सा चाधुनिकेऽपि कालेऽविकंपिता सती प्रभिन्नजनानां मनःसमाधिं विधाय तान् ब्रह्मणस्त्रिकालाबाधितां पारमार्थिकीं सत्ता प्रापयितुं क्षमेति संस्मरणीयं विज्ञैः। एवं विवर्तवादमाश्रित्य मानवैरविद्यानिरासपूर्वकं जीवब्रह्मैक्यं बोध्यं, जाग्रत्स्वप्नसुषुप्त्यादिषु निर्बाधं प्रतीयमाने परमात्मनोऽखंडसाक्षित्वे निश्चयो विधेय इत्येष सर्वेषां परमपुरुषार्थः। अस्मिञ्जीवब्रह्मैक्य एव सर्वेषा मानवाना किमुत स्थावरजंगमानां वस्तूनामैक्यं सिद्ध्यति। किंतु व्यावहारिके भेदे वर्तमाने शरीरसांकर्येण मक्षिकान्यायावलंबिन्या बाह्यसाम्यापत्त्या वा न तत्कदापि सिध्येत्, प्रत्युतानवस्थैवापद्येत। विद्यमानेऽपि प्रायो बाह्यशरीरसाम्ये मानवानां सत्त्वरजस्तमोरूपाः प्रवृत्तयस्तानुचितानुचितकर्मसु नियोजयंतीति संदृश्यमाने प्रभिन्नव्यवहारे कथं

सर्वेषां साम्यमापादनीयम् । व्यवहारगतविविधप्रवृत्तिषु किंचिज्जातिसामान्यमनुसृत्य समष्टिहितायैव वर्णाश्रमव्यवस्था प्रचलिता भवति । अस्मिन्व्यतिकरे सत्त्वसंपन्नैर्जनैः किं रजस्तमसोरंगीकारेण सर्वत्र साम्यं विधेयमाहोस्विद्रजस्तमोभिभूतैः सत्त्वाश्रयेण साम्यप्राप्तौ तदनु स्वात्मबोधे च प्रयतितव्यमिति चिंतायां द्वितीय एव पक्षः श्रेयानिति महाजनसंमतिः । एवं सत्यपि व्यावहारिके भेदे सर्वेषां प्राणिनां पारमार्थिकदृष्ट्याऽभेद एव, पारमार्थिकस्वरूपे ( जीवब्रह्मैक्ये ) सर्वेषामहमहमिका जीवनकलहोऽधरोत्तरभाव इति सकलमपि विलयं यातीत्यद्वैतदर्शनेन प्रोच्चैरुद्घोष्यते । एवं स्थिते 'पराञ्चि खानि व्यतृणत्स्वयंभूः' इति श्रुत्यनुसारतः स्वभावतो बहिर्मुखानां प्रतिपद विषयैराकृष्टानामिन्द्रियाणा परवशा अर्थकामनिष्ठाश्च सतो ये मानवापसदा रजस्तमोगुणविवृद्ध्या पारमार्थिकब्रह्मस्वरूपाच्च्यवन्तेऽन्याश्च च्यावयंति तेषा साम्यमात्महितेच्छुना कथमुररीकर्तव्यम् ।

जीवब्रह्मैक्यावगतावेव सर्वेषामांतरमैक्य बंधनान्मोक्षश्च । स एव पुरुषार्थचतुष्टये मानवानां परमपुरुषार्थः । तस्मिन्नेव मानवैः स्थिरीकृतचित्तैर्भाव्यमिति हेतोः श्रुत्या धर्मोपदेशः कृतः । मोक्षोपायभूतः सत्त्ववृद्धिकरो धर्मो मानवैराश्रयणीयोऽर्थकामौ च धर्ममोक्षाविरोधेनावलंबनीयौ, सनातन चात्मतत्त्वं प्रापयता सनातनधर्मेण वर्तितव्यमिति निःश्रेयसकरो नित्यः पंथा मनुजहितं कामयमानाभ्या श्रुतिस्मृतिभ्यामुपदिष्टः । तं हित्वाऽर्थकामनिष्ठाना पाश्चात्याना साम्यनीतेः समाश्रयो न कदापि भारतीयानां निःश्रेयसकरः स्यात् । 'यतोऽभ्युदयनिःश्रेयससिद्धिर्भवति स धर्मः' इति पुरातनधर्मलक्षणानुसारमभ्युदयोऽवश्यं सर्वैः संपाद्यः, किंतु स तथा संपाद्यो यथा निःश्रेयसाविरोधी स्यात् । अद्वैतदर्शनमभ्युदयं प्रतिरुणद्धीति तु पाश्चात्यबाह्योत्कर्षाभासहतचक्षुषां भारतीयाना प्रलपितमेव, यतो भगवत्पूज्यपादैरुपरितनमुभयविधलक्षणमुपात्तमित्यत्र न कापि संशीतिः । तैरज्ञजनदृष्ट्या व्यावहारिकीं सत्तां पुरस्कृत्य व्यावहारिकोऽभ्युदयोऽङ्गीकृत एव । पाश्चात्यैर्येन भौतिकविज्ञानेनाभ्युदयः सपादितस्तदपर-

विद्यारूपं भौतिकविज्ञानमन्योन्यविनाशार्थं परेषां तेजोबलहृतये वा यदि नोपयुक्तं भवेत्, निःश्रेयसरूपात्परमपुरुषार्थाद्यदि तद्भौतिकविज्ञानं मानवान्न विमुखीकुर्यात्तर्हि तदवश्यमुपादेयमिति श्रुतिसंमताद्वैतदर्शनेन ध्वन्यते। प्रत्युत भौतिकविज्ञानोद्भाविताः सकला अपि भूतभाविन्यो घटनाः प्रकाशरूपपरमात्मनो विस्फुलिंगा एवेत्यभिव्यज्यतेऽद्वैतदर्शनेन। अभ्युदयफलो धर्मो यथाक्रम सम्यक्संपादितश्चेत्सत्त्वसंशुद्धिकरो भूत्वा निःश्रेयसफलाय कल्पत इत्येव श्रुतिस्मृतीनामाशयः। 'आचारः परमो धर्मः' इति धर्मलक्षणमप्यस्मिन्नेवार्थे पर्यवस्यति यत्प्रत्येकं मनुजेनाचारस्तथानुसर्तव्यो यथा तमोरजोनिवृत्त्या सत्त्ववृद्धिर्भवेत्, यया विमलीकृतेऽन्तःकरणे स्वयंप्रकाशः परमात्मा सुविशदमभिव्यंक्तः स्यात्। सदाचारः सत्त्वसंशुद्धये भवति, सत्त्वसंशुद्धिः सद्विचारो वा सदाचाररूपेण परिणमतीति देहमनसोरन्योन्योपकारित्वं पाश्चात्यमनोविज्ञानस्यापि संमतम्।

प्राणिनां सत्त्वरजस्तमोरूपा नैकविधाः प्रवृत्तीरालोक्य श्रुतिजनन्या मंदमध्यमाधिकारिणां स्वान्तशुद्धये कर्मोपास्तिपराणि ब्रह्मज्ञानोपायभूतानि वाक्यान्युपदिष्टानि। कर्मोपासनादिसाध्यो धर्मो यथाक्रमं ब्रह्मज्ञान एव पर्यवस्यतीति संदृश्य भगवत्पूज्यपादैः कर्मोपास्तिज्ञानपराणां श्रुतिवाक्यानां तथा समन्वयः कृतो यथा मुमुक्षुः क्रमशो मोक्षाभिमुखो भवेत्। व्यावहारिक्यपरा विद्या यतः परब्रह्मप्रतिपादिकायाः परस्या विद्यायाः साधनीभूता, ततो यथाधिकारमुभयविद्याङ्गीकारेण जनैः स्वात्मबोधासक्तचित्तैर्भाव्यमिति भगवत्पादाचार्याणामाशय। अत एव तेषां व्यापकेऽद्वैतदर्शने यथाधिकार सिद्धसाधकानां मुक्तमुमुक्षूणां सर्वविधजनानां परिग्रहो भारतवर्षीयान्यदर्शनापेक्षया सर्वजनसंमतत्वं च।

इदमेव श्रुतिसिद्धं सनातनपरमात्मगानपरं सुमधुरमद्वैतदर्शनसंगीतमधुनातनकालविसंवादिकोलाहलेऽप्यखंडितमेकस्वनं च सत् पुंसां समाधिसमुद्धारार्थं निनददास्ते। अनागतेऽपि कालेऽद्वैतदर्शनमेव विश्वधर्मत्वेन

स्थास्यतीति 'डॉयसेन्' प्रभृतिशार्मण्यदेशीयपंडितानां दृढप्रत्ययः । पाश्चात्यदेशेष्वद्वैतमहत्तां ख्यापयितुमेव श्रीरामकृष्णविवेकानंदरामतीर्थारविंदघोषप्रभृतिभिर्भारतीयमहात्मभिरविरतोद्यमः कृतः । एवं सति भगवत्पूज्यपादैर्भारतवर्षे चतुर्दिग्विभागेष्वद्वैताधिष्ठितधर्मप्रचारणाय यानि पुण्यपीठानि संस्थापितानि तेषां संप्रतितनेऽपि काले कियद्गौरवमुपयुक्तता चेत्यस्य विज्ञेभ्यो निवेदनं ज्ञातज्ञापकमेव । किंतु पाश्चात्यविद्याविप्रलब्धमानसैर्जनैरंधपरंपरान्यायेनताननुसरद्भिरज्ञैश्च संकुलेऽस्मिन् भारतवर्षेऽयं पुनरुक्तिप्रयासोऽपि सप्रयोजन एव।

भारते पाश्चात्यविद्याप्रतिष्ठापनं विदधता मायिना मेकॉलेमहोदयेन तदानीं तद्विद्यापरिणामविषये स्वपितरमुद्दिश्य यद्गूढपत्रमांग्लभाषया लिखितमासीत्तद्गत आशयः प्रज्ञावता निपुणं समवधेयः । स इत्थं ब्रूते—

"Our English Schools are flourishing wonderfully .. .. The effect of this education on the Hindus is prodigious. No Hindu who has received an English education ever remains sincerely attached to his religion. Some continue to profess it as a matter of policy, but many profess themselves pure Deists, and some embrace Christianity It is my firm belief that, if our plans of education are followed up, there will not be a single idolator among the respectable classes of Bengal thirty years hence. And this will be effected without any efforts to proselytise; without the smallest interference with religious liberty; merely by the natural operation of knowledge and reflection. I heartily rejoice in this prospect"

"अस्माकमांग्लपाठशालानामाश्चर्योत्पादिनी वृद्धिः । अस्मद्विद्यावितरणस्य हिंदुजनेष्वपूर्वः परिपाकः । अधिगतांग्लविद्यो न कोऽपि हिंदुः श्रद्धापुरस्सरं स्वधर्मासक्तः स्थातुं पारयति । केचिदधीतपाश्चात्यविद्या बाह्यव्यवहारालंबनमात्रेण स्वीयं हिंदुधर्मीयत्व प्रतिजानते । बहवस्तु निराकारैकेश्वर-

वादं पुरस्कुर्वंति, अन्ये च खिस्तमताश्लेषप्रणयिनो जायंते। मदीयो दृढ-प्रत्ययो यदस्मीद्विवादानोपाया अनवरतमनुसृता भवेयुश्चेदूंगप्रांतीयोच्चवर्णेषु नैकोऽपि मूर्तिपूजकास्त्रिंशद्वर्षाभ्यतरेऽवशिष्टः स्यात् । धर्मान्तराभ्यंतरीकरण-प्रयत्नैर्विना, अक्लिष्टं धार्मिकस्वातंत्र्यव्याघातजननं विनापि केवलं नैसर्गि-कैर्ज्ञानार्चितादृयुपायैरेवैतत्सिध्येत् । अनेन भाविदृश्यदृग्विषयीकरणेन प्रमुदिता-तरगोऽहम् ।"

अयं भविष्यद्वादः कियत्परिमाणेन सफलतां गत इत्यस्य निदर्शनं साक्षादुपलभ्यत एवेदानीं भारतवर्षे । नैतावता सकलापि पाश्चात्यविद्याऽ-शुभोदर्केति मिथ्याग्रहः कार्यः, यतः पाश्चात्यविद्याध्यायिनोऽपि केचिन्महात्मा-नस्तौलनिकीं दृष्टिमाश्रित्य भारतीयसंस्कृतेरुन्नततमत्वं प्रख्यापितवंत इति दृष्टपूर्वमेव । किंतु बहवोऽन्येऽदूरदृष्टयो मेकॉलेमहोदयस्य भविष्यद्वादमुपो-द्वलयन्त एवेदानीं तत्र तत्र दृश्यंत इत्यहो व्यामोहो भारतीयानाम् । संपादित-स्वातंत्र्येऽप्यस्मिन् भारते यावदेतादृशी दुरवस्था, एतादृशं मन्दोदास्थं वा परिलक्ष्येत, यावत्स्वातंत्र्यपदं स्वैराचारापरपर्यायं गृह्येत, तावन्न पारमार्थिकं स्वातंत्र्यमस्माभिरासादितं स्यादपि तु स्वातंत्र्याभास एव सः ।

साररूपेणोपर्युपन्यस्त एव विषयोऽत्र **धार्मिकविमर्शसमुच्चय**ग्रंथे विविधोपपत्तिभिर्महताधिकृतत्वेन च प्रपंचितः । सांप्रतिकदुरवस्थाविलोकन-वशाद् दोदूयमानमानसैः, समस्तवेदधर्मीयशिष्यनिःश्रेयसाकांक्षिभिः, पदवाक्य-प्रमाणपारावारपारीणैरत एव करवीरशाकरपीठमन्वर्थतया मंडयमानैः, वय-सोऽष्टमीं दशा गतैरप्यनवरतमध्ययनाध्यापनप्रभाषणलेखनादिनिरतैः परमहंस-परिव्राजकाचार्य**श्रीविद्याशंकरभारतीस्वामिपादै**रय '**धार्मिकविमर्श-समुच्चयः**' अमरभारत्यां द्वितीयभागरूपेण विरचितः । अस्य पूर्वार्धे तावद् द्वैतिना खंडनं न्यायघटितपरिभाषाप्रमाणावलिपुरस्सरमेव महता पाडित्येन विधायाद्वैतस्य प्रामाण्यं संसाधितम् । उत्तरार्धे च वैदिकसनातनधर्ममधि-कृत्य विविधा धार्मिकलौकिकविषयाः प्रसादपूर्णया भाषयोपनिबद्धा येषु

धर्मस्वरूप—वर्णाश्रमव्यवस्था—पूर्वोत्तरजन्म—अवताररहस्य—विभूतिपूजा—दैवयोग—संस्कार—श्रद्धा—सदाचारादिविषयाः संति। तत्रादौ सनातनधर्मस्य त्रिकालाबाध्यत्वं संसाध्य धर्मकल्पना चेतनाधिष्ठितैव सभवति, न तु प्रकृत्यादिजडवस्तुनिष्ठेति प्रतिपाद्य चाभिमतधर्मलक्षणान्युपन्यस्तानि। तदनु नीतिर्विशेषेण लौकिकाहितसाधिका धर्मस्त्वलौकिकाहितसंपादक इति धर्मान्नीतेः पार्थक्यं निर्दिष्टम्। तदनुषंगेणार्थशास्त्रापरपर्याया नीतिः प्रधानभूतस्य धर्मस्यांगम्, अर्थकामौ धर्मोपसर्जनभूतौ, मोक्षश्च परमपुरुषार्थ इति सविशेषं व्याख्यातम्। अनंतरं वर्णाश्रमव्यवस्था जन्मना सिध्यति न गुणकर्ममात्रेणेति विज्ञाप्य शास्त्रीयकार्यकारणभावाश्रयी पुनर्जन्मासिद्धांतः प्रधानतोऽनुमानप्रमाणावष्टंभेन च्छांदोग्यबृहदारण्यकोपनिषद्गतविद्योपन्यासेन च प्रतिष्ठापितः। वर्तमानजन्मन एकतमं कारणमानुवंशिकनाऽन्यच्चाविद्यावशं प्राग्जन्मार्जितं कर्मेत्यतो बीजाकुरन्यायेन जन्मकर्मपरंपराऽनादिरेव; तस्माज्जन्म जीवगताऽविद्यायत्तं न त्वीश्वरायत्तमिति प्रमाणपुरस्सरं स्थापितम्। पश्चात् पूर्वोत्तरजन्म स्वप्रकाशसाक्षिण आत्मनो नित्याधिष्ठान एव विवर्तत्वेन संभवतीत्यनुभवानुमानादिप्रमाणानि पुरो निधायात्मनो नित्यत्वं संसाधितम्। तदनु तौलनिकदृशा भारतीयदार्शनिकमतोपन्यासपूर्वकं संसारस्य दुःखनयत्वं प्रदर्श्य विभूतिपूजा (पूज्योत्सवाः) कथं कार्याऽकार्या चेति वर्णितम्। ततः सर्वैः सर्वेऽपि व्यष्टिसमष्टिव्यवहारा भगवदधिष्ठानपूर्वकमेव निर्वर्तनीया इत्यादिरीत्या श्रेयस्करोपायान् ससूच्य संप्रतितने काले वेदशास्त्राध्ययनस्यावश्यकता प्रतिपाद्य च, सत्कर्मफलानां सत्संकल्पमूलत्वाद् देहादेः शुद्ध्यर्थं यमनियमादयः परिपालनीयाः, अभ्युन्नतिश्च साध्येत्युपदिष्टम्। त.. परं षोडशसंस्काराणामवश्यभावित्व प्रतिज्ञायोपनयनसंस्कारस्य महत्त्वोद्दिष्टे प्रतिपाद्य च सात्त्विकशास्त्रीयश्रद्धायाः स्थिरीकरणेन बुद्धिवादमात्रपरित्यागेन च शास्त्रविहितं स्वीयं कर्माचरणीयमित्याशयः प्रकटीकृतः। तदनंतर दानादिभिर्वैदिकशास्त्रिपौराणिकपुरोहितादीना परिपालनं विधेयम्, अधुनातनीं हीनाभिरुचिं परित्यज्य

सद्वाङ्मयनिर्मितौ वाण्याः सदुपयोगः कार्यः, साम्प्रतिकविप्रैरन्तःपरीक्षापूर्वकं स्वदोषा हेयाः स्वकर्म च यथार्हमनुष्ठेयम्, सर्वैश्च वर्णैर्दुराचारपरित्यागपुरस्सरं सदाचारः समाश्रयणीयः समस्तपुरुषार्थप्राप्तये मनोबुद्ध्योः परिशुद्धिः कर्तव्येति संप्रतितनलोकाचारानधिकृत्य विविधभंगीभिर्विरचिता अपि परमात्मप्राप्तिफलकमेकमाशयमाविष्कुर्वन्तो निबंध अत्र लिखिताः सन्ति । प्रत्यक्षानुमानागमादिप्रमाणैः प्ररोचकदृष्टांतकथाभिः पूर्वोत्तरपक्षोपन्यासैश्च संदृब्धा एते सर्वेऽपि प्रबंधाः श्रद्धावता संस्कृतज्ञधर्मजिज्ञासूना संस्कृताध्यायिना छात्राणा च चित्तावर्जनेन धर्मज्ञानोपचयं विधास्यंतीत्यत्र न कोऽपि संदेहलवः। अस्मिन्ग्रंथे पंचमहायज्ञविवेचनमिषेण पद्मपुराणांतर्गतं यत्पंचाख्यान सुगममधुरया भाषया विस्तरेण विरचितं तत्संस्कृताध्यायिना बालानामुपदेशाय भाषाज्ञानविवृध्दयेऽपि स्यात् । अन्यच्च लौकिकदृष्ट्या हीनोऽपि जनो धर्मश्रद्धासमन्वितो विहितस्वकर्माचरणपरः स्याच्चेत्परेशप्रसादास्पदीभवतीत्यपि तदाख्यानतात्पर्यम् । एवं क्वचिद् युक्तिप्रमाणोपन्यासपुरस्सरं क्वचित्परिहासपूर्वकं क्वचिद्वाक्ताडनेन क्वचित्काव्यानुकारिण्या सरण्या क्वचित्कथाकथनकौशलेन च सर्वे विषयाः सागोपागविमर्शयुक्ता यथायथं सन्निवेशिताः। ओजःप्रसादमाधुर्यादिगुणैर्मण्डिता श्रीमदाचार्यचरणानां भाषा सर्वत्र विविधरूपैर्विलसति ।

केचिद्विषयाः पाश्चात्यविद्यासवमत्तानां जनाना रुचये न भवेयुः, परं मनुजानामंतिमहितं परिलक्ष्य तेषा स्वांतशुद्धये प्रबोधाय च तेऽत्र सन्निहिता इति सविशेषं चित्तगोचरीकार्यम् । उक्तं च ‘ अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ’, ‘ हितं मनोहारि च दुर्लभं वचः ’ इति। व्यक्तिस्वातंत्र्यप्रधाने प्रशासनविधुरे प्रभिन्नमतकोलाहलाकुले चास्मिन्काले कः कस्य वचः शृणुयादिति चिंतायां समुत्पद्यमानायां चित्तं विषादपरिपूरितं भवति । एतयैव चिंतया व्यथितांतरंगा अपि—

**उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा ।**
**कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥**

इति भवभूतिवचनाश्वासप्रोत्साहिताः श्रीमदाचार्यपादाः शांकरपीठानुगुणं धर्मोपदेशकार्यं प्रवचनग्रंथविरचनाद्युपायैः सम्यग्विधाय श्रीभगवत्पूज्यपादानामानृण्यं गताः खलु । परमद्यत्वे सर्वत्र दृश्यमानायां परिस्थितौ स्वीयमगतिकत्वं मन्यमानास्ते श्रीमदाद्यशंकराचार्यानुद्दिश्य विविधपेशलभावगर्भां हृदयगुहानिगूढामार्तिं प्रकटयन्ति, नैकविशेषणैस्तान् सम्बोध्य च साम्प्रतिकधर्मविप्लवे जगदुद्धारकार्ये श्रीशंकरपादैरेव पुनरवतारेण सम्पादनीयमिति परमया भक्त्या प्रार्थयंते । श्रीशंकरोपास्तिविमर्शे विस्तरेण निवेदिता गद्यकाव्यप्रतिरूपाः प्रोन्नतास्तत्त्वज्ञानरहस्यभूता इमे भावास्तत्त्वचिंतापरैः संस्कृतज्ञवाचकैर्मुहुर्मुहुरनुसंधेयाः, प्रबंधश्चायं कंठगतः कार्य इति मे मतिः । इमं प्रबंधमनुवाच्य नितातं समाहिते मे हृत्कोशेऽपूर्वः कोऽपि रसः समुल्लसति तत्तद्भावानुरणनकर्मणि मा नियोजयति चेत्यत्र निवेदनं नैवाप्रस्तुतं भवेत् ।

अवतारविषये कृतः सत्सकल्पो यदाऽनन्यतया समष्ट्यात्मको भवेत्तदाऽवश्यमवतारकार्यं साफल्यमियादिति योगरहस्यविदा प्रमाणवचनम् । तत्कार्यं यदा कदा वा सिद्धिं प्राप्नोतु । तं काल प्रतिपालयद्भिरंगुलिमेयैरपि तत्त्वविद्भिर्वेदशास्त्राद्यध्ययनाध्यापनद्वारा धर्मज्ञानदीपिकामज्ञानतमिस्रायामविरत प्रज्वाल्य सा हस्ताद्धस्तं पुरतो नेयेति तेषामनिवार्यं कार्यम् । यथैकोऽपि विवस्वान् समग्रां वसुधां प्रकाशयितुं क्षमस्तथा भारतवर्षेऽस्मिन्नेकोऽपि विभूतिमानाधिकारिकः पुरुषो निखिलराष्ट्रमभ्युदयनिःश्रेयसफलेन संयोजयितुमलमित्यद्य यावद् भूयो भूयो दृग्विषयीभूता घटना । अतो 'न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति' इति भगवद्वचनमनुस्मृत्यानुकूलेऽस्मिन् काले दूरदर्शिभिराशासमान्वितैरल्पसंख्यैरपि पुरुषैर्वैदिकज्ञानबीजानि प्रयत्नतः संरक्ष्याणि, यानि सद्भूमावुप्तानि भाविकाले महतीं सस्यफलसमृद्धिं विधास्यंति । इदमेव प्रकृत**धार्मिकविमर्शसमुच्चयग्रंथस्य** सारभूतमाकूतम् ।

ननु सर्वजनोपकृतये विरचितोऽयं ग्रंथो मातृभाषयैव लेखनीयः, किमर्थं गीर्वाणभाषायामिति चेदत्रोच्यते, यद् गभीरार्थसंभृतं स्थायितत्त्वशास्त्रचिंताभारं सुखेन वोढुं यथाऽर्थगौरववती मृतपदेनाज्ञैः संबोध्यमानाप्यपरिवर्तमानाऽमरभारती शक्तिमती, तथा नान्या कापि संततं विपरिणममाना प्रांतीयभाषा। बौद्धजैनादिमतसंस्थापकेषु स्वधर्मप्रचारणार्थं विकारिप्राकृतभाषाश्रयिष्वपि तदनुयायिभिरुत्तरतनकाले प्राधान्येन स्वस्वसिद्धातानां स्थिरीकरणाय प्रसृतये चाविकृतगीर्वाणभाषयैव ते ते ग्रथाः प्रचुरतया विरचिता इति संद्रष्टव्यं विज्ञैः। एतदैतिह्यं गीर्वाणवाणीगुणगौरवमेव प्रमाणीकरोति। अतो विज्ञायेत गुर्वर्थाना ग्रंथाना विरचनमद्यावधि विशिष्टग्रंथकृद्भिः किमर्थममरभारत्यां कृतं क्रियते चेति। वर्तमानशताब्द्या पाश्चात्यविद्यावद्भिः पारस्परिकविचारविनिमयार्थं ग्रंथादिविरचनार्थं च व्याप्तिमत्याग्लभाषैव प्रायेण प्रयुज्यते। सा भाषा भाविनि काले स्वकीयसिंहासनान्निःसार्यमाणा कस्यैचित् प्रांतीयभाषायै स्वपदं दद्यादिति संभाव्यते। तत्कथमपि भवतु। इत उत्तर विविधप्रांतस्थैर्वैदुष्यान्वितैर्ग्रंथकृद्भिरन्योन्याशयाभिव्यक्तये प्रातीयभाषापेक्षयाऽऽङ्ग्लभाषापेक्षया वा गीर्वाणवागेव सामान्यतः प्रशस्यतराऽभिमन्येतेति विभाव्यते। संस्कृतभाषया ग्रंथविरचन यदि केषांचिदाग्लभाषानुरागिणां विकृतमनेन ज्ञानदर्पनिदर्शकं तर्हि तेषामेवांग्लभाषया ग्रंथविरचनं कथं न ज्ञानोत्सेकप्रख्यापकं भवेत्। आग्लभाषाश्रयिभिः त्रिवेद्रम्–प्राच्यविद्यापरिषदध्यक्षस्य दिवगत–एफ्–डब्ल्यू–टॉमसमहोदयस्य वचनमत्र संस्मरणीयम्। अधुनातनकालेऽपि गीर्वाणभाषाव्यवहारस्येष्टत्वं संसाधयन्स इत्थं वक्ति—

" For higher education on the humanistic side the Sanskrit is in India an imperative requirement... ..in view of the great linguistic divisions of the country, if it is to be one country, it may be worth while, at the risk of appearing to flog a dead horse, to ask whether the Sanskrit, perhaps in a further simplified form, may not again rise to the occasion ( as a common language for

internal needs). .... Sanskrit can be adapted to the expression of all modern contents......I, therefore, do not feel that the idea of Sanskrit resuming its place as a common literary medium for India is a hopelessly lost cause "—" मानवसंस्कृतिसंवर्धनदृष्ट्योच्चतरशिक्षायै भारतवर्षे गीर्वाणभाषा नितरामावश्यकी। विस्तीर्णस्यास्य देशस्य बृहत्प्रांतभाषाभेदैः खंडितत्वात्, तस्यैकत्वसिद्ध्यै गीर्वाणभाषा सुबोधरूपं प्रापिता सती पुनरपि सर्वप्रांतीयानां सामान्यभाषारूपेण व्यवहारार्हा भवेद् वेति प्रश्नोत्थापनं, विफलायासशंकायां जायमानायामपि, युक्तमेव। गीर्वाणभाषाऽऽधुनिकसर्वविषयाविष्कारानुगुणा विधातुं शक्यते। तस्माद्भारतवर्षे वाङ्मयीनसाधारणमाध्यमत्वेन संस्कृतभाषायै मूर्धन्यपदप्रत्यादानं सुतरामशक्यसंभवमेवेति नाहं मन्ये।" संस्कृतभाषायाः सुबोधीकृताया राष्ट्रभाषात्वापादनं प्रस्तुवन्नयं गीर्वाणवागनुरागी पंडित आंग्लदेशीयो विद्यत इति समवधेयं प्रज्ञावद्भिर्भारतीयैः। अस्तु।

श्रीमदाचार्यपादानां संप्रति मीमांसासूत्रवृत्तिविरचनरूपेण लेखनं प्रचलितम्। तेभ्योऽन्तर्यामी परमात्मेदृशलोकोपयुक्तकार्यसौकर्यार्थं चिरायुषा संयोजयतु, संस्कृतज्ञवाचकाश्चेमं धार्मिकविमर्शसमुच्चयग्रंथं भूयो भूयोऽनुवाच्य निःश्रेयसमधिगच्छन्त्वित्याशास्य

**शास्त्रं शारीरमीमांसा देवः सांबसदाशिवः।**
**आचार्याः शंकराचार्याः संतु मे जन्मजन्मनि॥**

इति संप्रार्थ्य च विरमति—

श्रीमदाचार्यचरणानां विधेयो

**हुपरीकरोपाभिधश्रीपादापरनामकबालशास्त्रितनूजो गणेशशर्मा।**

(करवीरस्थ—'राजाराम कॉलेज'–संस्थायां संस्कृतप्राध्यापकः)

# अथ विमर्शानामनुक्रमणिका प्रारभ्यते ।

अनुक्रमणिका समाप्ता ।

॥ श्रीः ॥

# अथ मंगलाचरणम् ।

यत्सृष्टिस्थितिसंहृतीः प्रकुरुते शक्त्यैव मायाख्यया
यस्याधीनतया स्थितानि सदसत्कर्माण्यपि प्राणिनाम् ॥
शक्यं यन्न विशेषतो निगदितुं भक्त्यैव यद्ध्यायते
तद्ब्रह्म प्रणयादमंदहृदयानंदाय वंदामहे ॥ १ ॥

श्रीशंकरं नमस्कृत्य तदनुज्ञामवाप्य च ।
धर्म्यं वक्तुमुद्यतोऽहं तत्त्वं विश्वोपकारकम् ॥ २ ॥

श्रीशंकराचार्यपदारविंदद्वयं त्विदानीमभिवंद्य सादरम् ।
श्रुत्युक्तवृत्तश्रवणोत्सुकाना बोधाय कुर्वे कमपि प्रयत्नम् ॥ ३ ॥

अस्मत्कुलं समुद्धर्तुं गा गतौ दिव्यदंपती ।
नाम्ना रमारंगनाथौ संस्मृत्य पितरौ मुदा ॥ ४ ॥

ध्यात्वा गुरूंश्च धर्म्याणा विमर्शाना समुच्चयम् ।
तनोमि भारतीयानां पुंसा सन्मार्गदर्शकम् ॥ ५ ॥

आरोहो दुर्घटो नृणामवरोहः प्रमादतः ।
आरोहस्योपदेशोऽस्मिन् ग्रंथे संदृश्यता स्फुटम् ॥ ६ ॥

श्रुत्युक्तौ ध्वस्तशक्तौ बत जडमतिभिः शास्त्रसार्थे हृतार्थे
स्वस्वाचारेऽस्तसारे प्रतिदिनमनिशं साधुलोके सशोके ॥
दुर्वादे वीतखेदे कलिपुरुषमृषापौरुषे जातपोषे ।
ग्रंथोऽयं प्रादुरासीदधिमहि भगवत्प्रेरितः शं विधाता ॥ ७ ॥

॥ श्रीः ॥

# अथ विमर्शदिग्दर्शनम् ।

नैकान् विमर्शान् कृत्वाऽत्र वर्ण्यस्यार्थस्य सूचकान् ।
नामानि विषयास्तोकान् वच्मि तेषां विभागशः ॥ १ ॥

सर्वत्रादावुपन्यस्य प्रमाणवचनं स्फुटम् ।
उक्त तदनुसारेण समासव्यासतस्तथा ॥ २ ॥

श्रीगणेशोत्सवे रम्ये विमर्शे सप्रयोजना ।
लौकिकी तात्त्विकी चेति द्विधोपास्तिर्निरूपिता ॥ ३ ॥

ईश्वरास्तित्वप्रश्नाख्यविमर्शे प्रश्न एव न ।
उपपद्यत इत्येवमुक्त्वा मानं प्रदर्शितम् ॥ ४ ॥

अवतारविमर्शे तु सप्रमाण प्रदर्शिताः ।
नानावतारा ईशस्य लोककल्याणकारकाः ॥ ५ ॥

किमस्ति मानमद्वैते प्रश्नोऽय नैव सगतः ।
नैकधा त निरस्यैवाद्वैते मानं प्रदर्शितम् ॥ ६ ॥

अद्वैतमानाक्षेपस्य प्रतिषेधं सविस्तरम् ।
कृत्वाऽद्वैतं सप्रमाण साधितं पंचमे शुभम् ॥ ७ ॥

चातुर्वर्ण्यमाश्रमाश्च चत्वारोऽथ पुनर्भवः ।
आत्मनित्यत्वमित्यादिर्विशिष्टोऽर्थो निरूपितः ॥
उत्तरार्धे विमर्शेऽस्मिन् धार्मिके सोपपत्तिकः ॥ ८ ॥

पूज्यानामुत्सवः कार्यः सर्वथोत्कर्षदायकः ।
यथारुचि यथाशास्त्र सप्तमेऽस्मिन् विवेचितम् ॥ ९ ॥

वेदोपदिष्टोऽनुष्ठेयो वैमत्यप्रतिषेधकः ।
उपायोऽस्मिन्विमर्शे तु अष्टमे सम्यगीरितः ॥ १० ॥

तत्त्वतो वेदवेत्तारः के नरास्तद्विवेचनम् ।
विमर्शे नवमे सम्यक् कृतं लोकहितप्रदम् ॥ ११ ॥
अथाऽऽत्मयज्ञ इत्यस्य वास्तवार्थविवेचनम् ।
कृतं विस्तरशो भव्य दशमे तु विमर्शके ॥ १२ ॥
वेदोपदिष्टधर्मस्तु न कालवशगः किल ।
ऐशत्वाच्च सुविज्ञेयः प्राज्ञैरेकादशे शुभे ॥ १३ ॥
भारतेऽत्र समुत्पत्तिर्नराणा पुण्यशालिनाम् ।
पुण्यवंशे भवत्येतद्विमर्शे द्वादशे स्फुटम् ॥ १४ ॥
प्राग्जन्मार्जितदैवाख्यसदसत्कर्मणः किल ।
सुखदुःखप्रदः सम्याग्विमर्शोऽस्ति त्रयोदशे ॥ १५ ॥
उपनीत्युद्वाहमुखाः संस्काराः शास्त्रबोधिताः ।
श्रद्धया समनुष्ठेयाश्चतुर्दश इतीरितम् ॥ १६ ॥
पूज्यविश्वासश्रद्धाया विचारः सप्रयोजनः ।
विमर्शेऽस्मिन् पचदशे कृतः सम्यक्, तदुद्भवः ॥ १७ ॥
श्रद्धोपचयविमर्शस्तु षोडशः सम्यगीरितः ।
यतो दार्ढ्यं विना तस्य सत्कृतिर्नैव सिध्यति ॥ १८ ॥
काम्यं कर्माप्यनुष्ठेयं शास्त्रीयं दूरदर्शिना ।
लोकोपकारसिद्ध्यर्थमर्थः सप्तदशे स्थितः ॥ १९ ॥
कायत्रितयशुद्ध्यर्थं पावनं कर्म नैत्यकम् ।
सर्वैः कार्यं यथायोग्यमित्यष्टादशभाषितम् ॥ २० ॥
प्रागनुष्ठितपापस्य कर्मणो दुःखदं फलम् ।
भोक्तव्यमग्रे नियतमूनविंशे समीरितम् ॥ २१ ॥
योग्यकाले योग्यपात्रे श्रद्धया यत्प्रदीयते ।
विंशे विमर्शे सुखदो दानधर्मः प्रकाशितः ॥ २२ ॥
एकविंशे विमर्शे तु वाचः श्रैष्ठ्यं निरूप्य च ।
सूनृता वाग्भव्यदात्री इत्यर्थो व्यक्तमीरितः ॥ २३ ॥

ब्राह्मणैरेव ब्राह्मण्यं संरक्ष्यमतियत्नतः ।
द्वाविंशेऽस्मिन्निगदितमेतत्समुपपत्तिभिः ॥२४॥

तदापत्प्रतिकारोऽपि समालोच्य परिस्थितिम् ।
तैरेव कार्य इत्येतत्त्रयोविंशे समीरितम् ॥२५॥

तेषामर्थार्जनोपायः शास्त्रदृष्टः शिवंकरः ।
यावच्छक्योऽनुसर्तव्यश्चतुर्विंशे समीरितः ॥२६॥

कुलोत्कर्षः केन सिध्येत्तदुपायप्रदर्शनम् ।
सोपपत्तिकदृष्टांतं पंचविंशे प्रसाधितम् ॥२७॥

सात्विकं परिशुद्धं च भक्ष्यभोज्यादिकं नरः ।
कालद्वये समश्नीयात्षड्विंशे त्वस्य सूचनम् ॥२८॥

दुराचारः परित्याज्यः सर्वथा भव्यमिच्छता ।
सप्तविंशे तस्य फलं दुःखदं परिकीर्तितम् ॥२९॥

भारतीयकुमारीणां शिक्षणोद्वाहयोरपि ।
अष्टाविंशे सुविहितो विमर्शः सुफलाप्तये॥ ३० ॥

भ्रांतबुद्धिकृतं कर्म दुःखोदर्कं भविष्यति ।
ऊनत्रिंशो विमर्शो वै वदत्येतत्सुनिश्चितम् ॥३१॥

सुधारणाख्यवृत्तस्य आभासान्नातिरिच्यतः ।
किमर्त्योपदिष्टस्य चिकित्सा त्रिंशके कृता ॥ ३२ ॥

अस्पृश्यानां तु स्पर्शादिः पावनत्वविघातकः ।
अतो गर्ह्यः स कुत्रापि एकत्रिंशे प्रपंचितम् ॥ ३३ ॥

चलशीलस्य मनसः प्रज्ञायाश्च विवेचनम् ।
द्वात्रिंशके विमर्शेऽस्मिन् कृतमुन्नतिसाधकम् ॥ ३४ ॥

सर्वेषामपि मर्त्यानां कर्तुमर्हं श्रुतीरितम् ।
त्रयस्त्रिंशे समाख्यातं महायज्ञस्य पंचकम् ॥ ३५ ॥

ब्रह्मभक्तिविधाः सर्वाः शास्त्रीयाः कुशलप्रदाः ।
चतुस्त्रिंशे सुनिर्दिष्टास्तद्भक्तज्ञप्तिसिद्धये ॥ ३६ ॥
पंचत्रिंशे शंकरार्योपासन वाङ्मयं शुभम् ।
नैकाक्षेपसमाधानपुरःसरमनुष्ठितम् ॥३७॥
एवं तत्त्वद्विमर्शस्य विषयाणा समासतः ।
दिग्दर्शनं कृतं ह्येतत्सौकर्यार्थं मनीषिणाम् ॥३८॥

॥ ॐ ॥

# ॥ धार्मिकविमर्शसमुच्चयः ॥

(द्वितीयो भागः।)

## श्रीगणेशोत्सवविमर्शः। (१)

**दोर्घौतद्दंतखण्डः सकलसुरगणाडंबरेषु प्रचण्डः**
**सिंदूराकीर्णगंडः प्रकटितविलसच्चारुचांद्रीयखंडः।**
**गंडस्थानंतघंडः स्मरहरतनयः कुंडलीभूतशुंडः**
**विघ्नानां कालदंडः स भवतु भवतां भूतये वक्रतुंडः ॥ १ ॥**

अथ श्रीगजाननोत्सवविमर्शो यथामति समासतः प्रस्तूयते। तत्र "देवो-भूत्वा देवं यजेत्" इति शास्त्रनियमात् गणेशध्यानपूजास्तोत्रपाठजपादि प्रकारैः स्वस्मिन् गणेशात्मत्वसंभावनमिदं गणेशोत्सवस्याऽऽद्यमुद्देश्यम्। अस्योद्देश्यस्य संसिध्यै मनसः सोत्साहं प्रवृत्तिर्भाव्या। तत्र तेन श्रद्धापूर्वकप्रेम्णा संसक्तेन भवितव्यम्। किंतु स्वभावतो विषयलोलुपं मनो गणेशध्यानादि कर्तुं कथमुद्युक्तं भवेत्। तदर्थं तेनादौ सुसक्तेन भाव्यम्। तदभावे गणेशोत्सवीयं प्रकृतमानंदं समासादयितुमसमर्थमेवतात्तिष्ठेत्। इदानीं त्वस्मिन्नुत्सवे जघन्यं वैषयिकमानंदं संमिश्र्य अयमुत्सवो यथा लोकप्रियः स्यात्तथाप्रकारःसाप्रतं कुत्रचित् प्रचलितो दृश्यते। तथाहि—कुत्सितनाटकादयः प्रयोगा, भाषितप्रतिकृतयो (नकला), विषयवासनोद्दीपकं गानं वादनं च, मनसः प्रक्षोभकाणि राजकीयसामाजिकविषयमवलंब्य स्वैरं व्याख्यानानि, बीभत्सरुचेः परिपोषकाणि पद्यानि, पक्षोपपक्षाणां न्यूनताप्रदर्शको निंद्यः परिहासो गालिप्रदानमेवमादयः प्रकारा यथायथं गणेशोत्सवान्तर्भूता दृश्यते। किमस्यबीजमित्यालोचिते

जननायाः संस्कृतिभ्रंशस्येदं तुच्छं प्रदर्शनमिति निःसंदेहं सिध्यति। देवतोत्सवे वैषयिकदुर्जालकस्य स्वभावतश्चचले मनोमीने प्रक्षेपणं तस्य देवतोत्सवस्य विडबनमेव।

तदर्थ यदनुष्ठेय विशेषतस्तदुपदिष्ट भगवत्पूज्यपादैस्तद्यथा—

**स्वाश्रमधर्माचरणं गणपतिमूर्त्यर्चनं नित्यम्।**
**तस्य कथाश्रवणे महोत्सवः सत्यवादश्च ॥ १ ॥**
**परयुवतौ द्रविणे वा परापवादे पराङ्मुखता।**
**ग्राम्यकथासूद्वेगः सुतीर्थगमनेषु तात्पर्यम् ॥ २ ॥**
**गणपतिकथावियोगे व्यर्थं गतमायुरिति चिंता।**
**एवं कुर्वति भाक्ति चित्तं पूतं भवेत्पुंसः ॥ ३ ॥ इति।**

समष्टिव्यष्टिप्रपचानःपातिनीर्नैकविधाश्चिंताः द्वेषमत्सरादिदोषाश्च विस्मृत्य अंतर्मुखतया विशुद्धः सात्विक आनदः समुपभोक्तव्योऽनेन जीवेनेदमेव यथार्थं गणेशोत्सवस्योद्दिष्ट वस्तु। सत्येवं तदनकूलः प्रयत्नोऽस्माभिः कर्तव्यः किल।

वैषयिकदुर्वासनापंके निमग्नं मनस्तस्मात्पापकर्दमादुध्धृत्य तस्मै समुदात्तविचारात्मकगिरिशिखरावलंबिनि निर्मले वातावरणे विहर्तुमवसरप्रदानार्थमियमुत्सवकरणप्रथाऽनादिकालमारभ्य प्रवृत्ताऽस्ति। तदुक्त—"स्वानंदं प्रतिगमनस्यैषमार्गः" इति।

इमं स्वानंदमात्मानद वाऽऽसादयितु गणेशस्य सात्विकी भक्तिरंतःकरणे भृशमपेक्षिता। तस्यास्तत्र प्रतिफलनार्थं गणेशस्योपासन यथाविधि नियमेन विधेयम्। प्रथमत एत्रोपासनाया मनो न रमेत। तथापि स्वभावतश्चंचलस्य तस्य निग्रहाय तैर्धद्वारैर्बहिःसतत धावति तानि चक्षुरादीनीद्रियाणि गणेशसेवाया विनियोक्तव्यानि। अस्य मनसः पैशून्योपक्रोशद्वेषादिप्रचुरे प्रलापे स्वभावतः प्रवृत्तिर्विद्यते। ता तस्य प्रवृत्ति दूरीकर्तुं ययेमां निहीनां प्रवृत्तिं संततं विदधाति मनस्ता रसना गणेशस्तोत्रपाठे गणेशनाम्न स्मरणे गणेशाथर्वशीर्षस्य ब्रह्मणस्पतिसूक्तस्य वा पारायणे यथाधिकारं विनियोजयेत्। ये गानकलाकुशलास्तैर्गणेशभक्त्युबृंहकानि पद्यानि गेयानि। कविभिर्गणेशमुद्दिश्य काव्यानि कर्तव्यानि। परमेतासु सत्कृतिषु क्रियमाणासु सतीषु दुर्वा-

सनावृद्धिकराणा पद्यादीना तत्र कथनं प्रकामं हानिकरम् । निदाद्वेषादि-प्रचुराणा पद्यानां गान कथनं वा नराधमत्वं द्योतयति । गणेशभक्तेरुपचयो भाव्य इति गणेशपुराणातर्गतानि गणेशलीलावर्णनानि पाठ्यानि पाठयित-व्यानि च । तदर्थः श्रोतव्यः श्रावयितव्यश्च । इदं सर्वं श्रद्धापुरस्सरं प्रेम्णा-चानुष्ठेयम् । गणेशमूर्तेर्दर्शनं चक्षुर्भिः कारयितव्यम् । पद्भ्या श्रीगणेश. प्रद-क्षिणीकर्तव्यः । हस्ताभ्यां सोऽर्चनीय. । गणेशतत्त्वज्ञाने काम विहर्तु मन-उपदेष्टव्यमित्थ सर्वाणीद्रियाणि गणेशसेवाप्रवणानि कृत्वा तद्भक्तिजन्यानंदस्य साक्षादनुभवो ग्राह्य' ।

अय गणेशोत्सवो भृश भव्यतया भाव्य इति तदानी प्रतिगृहं सुरु-चिरं संविधानक सर्वैर्महता सरभेण क्रियते । भित्त्यादीना सनार्जनेन स्वच्छता संपाद्यते । नानावर्णैर्भिदिरं राजितं विधीयते । मनोहराणि चित्राण्याऽऽलिख्यंते स्थाप्यते वा । धवलानि वितानानि दीयते । काचदीपकाचगोलकादिभि-(हड्याझुबरे) राकर्षक क्रियते । रगवल्लिभिरलकृत विधीयते । विद्युत्प्रदीपैर्भा-स्वरं संपाद्यते । सुमनोभिर्धूपैश्चामोदित क्रियते । इत्येवमादिक सर्वं यथासभव वय कुर्म. । कार्यमेव तत् ।

परमिदं बहिर्मंदिरस्य रामणीयकत्व यथा विधास्यामस्तथा मनोमदिरस्य नैर्मल्यसौदर्ययोर्वर्धनार्थं कि कुर्म. । दीपादिभिर्बाह्यमंदिरस्य भास्वरतापादनवद् आतर मदिरमपि पवित्रतमं ज्ञानदीपप्रकाशेन समुज्ज्वल कार्यमेव । बहिर्यथा-ऽवकरादिकं निष्कास्य स्वच्छता सपादयाम. । तद्वदन्तर्मनस्यसद्वासनाना कुत्सितविचाराणा च चिराय सचित दुर्गंधमवकर महता यत्नेन सुदूरं निःसार्य नैर्मल्यमवश्यं संपादनीयम् । तस्याभावे बाह्याडबरेण किं सिध्येत् । अतो मनो-नैर्मल्यार्थं तस्मिन्सद्वासनात्मकानामखडदीपाना समुज्ज्वालनं कर्तव्यम् । वेद-घोषेण भगवन्नामघोषेण वा वाण्याः पवित्रीकरण विधेयम् । मंगलमूर्तेर्मौखिक-जयघोषेणोत्सवमंदिर यद्वदापूर्यते । तद्वन्मनोमंदिरमप्यनाहतध्वनिनाऽऽपूरित कार्यम् । देवागारे यथा गणेशमूर्तेः प्राणप्रतिष्ठा क्रियते तथा मनस्यपि तस्य देवस्य प्राणप्रतिष्ठा नियत कर्तव्या । गणेशाथर्वशीर्षं त्रिगुणं, सप्तवारमावृत्य यद्वद् गणेशमूर्तावखडया जलधारयाऽभिषेकं कुर्म. । तद्वन्मनसि संस्थापिताया

तस्या मूर्तौ सात्विकप्रेमरसस्याविच्छिन्नया धारयाऽभिषेकोऽत्यर्थमावश्यकः। एवमादिकमिदं सर्वं विधातुं शक्नुमश्चेदेव निरतिशयानंदानुभवभाजो वयं भविष्यामः।

सा मंगलमूर्तिरत्यंत मधुराऽस्ति। प्रणवस्वरूपिणी सा विद्यते। वेद एव तस्याः शरीरम्। मन्वादिस्मृतयोऽवयवाः। तयोर्गूढार्थस्तस्या दीप्रं लावण्यम्। औपनिषद्विविधरत्नै रचितः किरीटस्तस्याः शिरसि विराजते। सद्धर्मप्रतिष्ठात्मकोऽस्यामंगलमूर्तेर्निःशेषविश्वाभयदो वरदहस्तः समुज्जृंभते। नूनमयं गणेशः श्रौत-स्मार्तधर्मस्य प्रत्यक्षा मूर्तिर्विराजते। अतस्तं धर्मं ये श्रद्धापूर्वकमनुतिष्ठंति तत्त्व-तस्त एव गणेशस्य भक्ताः। तस्य धर्मस्योपरि ये प्रहर्तारस्ते तु गणेशमूर्तावेव प्रहरंतीति ज्ञेयम्। तादृशामानुपापसदाः कथं गणेशस्य भक्ताः स्युः। भक्ता एवा-नुग्राह्या नेतर इति बोध्यम्। ये मंगलमूर्तेः श्रद्धयोपासनं कुर्युस्तेषां तत्कृपया मंगलं स्यादेव। अस्य गणेशदेवस्योपासनया राष्ट्रस्यापि कल्याणं भवेत्। लोकजागृतिः संघटनं चेत्येतद्द्वयमस्योत्सवस्य ध्येयमित्यसकृदावेद्यते वक्तृभिर्व्या-ख्यानादिषु लेखकैर्वृत्तपत्रादिषु च। सत्यमेव तत्तेषां कथनं लेखनं च। यतो वयमनादिनोत्थानिद्राया भीषणतमग्रासेन स्वात्मरूपं विस्मृताः स्मः। तस्या-ऽऽत्मस्वरूपस्य जाग्रत्यर्थं गणेशोत्सव इदमेकं महत्साधनं विद्यते। अस्मा-स्वत्यर्थं सामर्थ्यं वर्तते। किंतु प्रकामं सुप्तं तत्। तस्य जागृतिरध्यात्मिक-विकासेनैव भवितुं शक्या। "अहमानंदमयो ज्ञानमयश्चास्मि" इत्यवगतिः सर्वस्य भाव्या। स्वस्वरूपं स्वेनैव ज्ञेयम्। क्षुद्रमोहाभिलापेण राष्ट्रस्य सामर्थ्यं ऱ्हसतीति चेत् तस्य क्षुद्रमोहस्योन्मूलनायापेक्षितं सामर्थ्यमस्माभिः संपादनीयमेव। तच्च श्रीगणेशोपासनयैव यथाविधिकृतया समुत्पद्येत। नान्यथा। "स्वीयं मनोभृशमुदात्तं कुरुत" इत्ययं यथार्थसंस्कृतेर्धर्मस्य च संदेशो वर्तते। अत्युदारमनसां महापुरुषाणां समुद्भवो राष्ट्रसामर्थ्यवर्धनस्या-द्योपायः। क्षुद्रःस्वार्थो देशोन्नतेर्विघातकः संघटनायाः प्रतिबंधको मिथः कल-होत्पत्तेः प्रधानं कारणं च। अस्य देशकल्याणविघातकस्य स्वार्थस्य निरोधोऽ-समर्थेन मनसा कर्तुमशक्यः। तदर्थं तेन सुविशालेन भाव्यम्। समुन्नतेन भाव्यम्। परिपूतेन च भाव्यम्। केवलं मृत्पाषाणविनिर्मितैर्दुर्गैः स्वीयराष्ट्रस्य

परिरक्षणमसंभवि । तदर्थं सज्जनाख्या दुर्गा एवावश्यकाः । समर्थरामदासस्वामिभिः सज्जनगडाख्यो दुर्गो महाराष्ट्रे विनिर्मितः। तेनास्य देशस्य तदानी समुन्नतिर्बभूव । मानवमनसो विकास विधाय तस्योदात्तत्त्वापादनं गणेशोत्सवस्योद्देश्यम् । मनसः समुन्नतिर्गणेशकृपयैव सिध्यति । गणेश एव संघटनायाः प्रतीकः। यतः 'स गणानामीशो विद्यते'। गणानामीश एव संघटनाया देवता विराजते । यथाऽयं गणानामीशस्तथा गुणानामपीशो विद्यते । तदुक्तम् "गणेशं गुणेश०"

(गणाधीश जो ईश सर्वा गुणाचा) इति ।

तस्मादस्य देवस्योपासनया राष्ट्रोन्नतिकारकाःसद्गुणाः समुपासकस्य चित्ते प्रादुर्भवेयुः । संघटनार्थं समानः सम्यक् संकल्पो नियतमपेक्षितः । तस्य गणेशभक्त्यात्मनः संकल्पस्यास्मिन्गणेशोत्सवे सर्वेषूपासकेपु समुत्पत्तिरेव यथार्थं सघटनम् । सर्वेषा मनासि श्रौतस्मार्तधर्मात्मनो गणेशदेवस्य प्रेमरसेन सद्दब्धानि भाव्यानि । समस्तमनःसचालकं सूत्र गणेशपाणौ वर्तते । स एव सहस्रशीर्षः पुरुषोऽस्ति । तस्य समष्ट्यंत.करणे व्यष्ट्यंतःकरणानामंतर्भूतत्वात् तेषु राष्ट्रोपकारकशुभसंकल्पस्य प्रेरणा गणेशोपासनयैव सिध्येत् । बुद्धिं प्रेरयितुर्गणेशदेवस्य तदैकनिष्ठतया ये प्रार्थना कुर्युस्तेषा प्रार्थनात एव संघटनाया. सामर्थ्यं जनतायामाविर्भविष्यति ।

अयं मगलमूर्तिर्देवोऽस्माकं मनसा विशुद्धतापूर्विका समुन्नतिं कुर्यादिति दृढ विश्वासोऽपेक्षितः । तस्याभावे कृतैरप्युत्सवैर्व्याख्यानाना प्रलापैश्च किमभीष्टं सिध्येत् । शास्त्र आध्यात्मिकोन्नतये ये मार्गा उपदिष्टास्तेभ्यः पृष्ठप्रदर्शन न केवल व्यक्तेरपितु राष्ट्रस्यापि विघातकं तत् । साप्रत पारतन्त्र्यतोऽस्माकं राष्ट्रं दीनदीन स्वधर्मपराङ्मुखं च सवृत्तम् । भौतिकसामर्थ्योपचायकान्यपि धान्यान्यन्यहस्तगतान्येवेति तान्यस्मान्प्रति पारतंत्र्यकर्दमे भृश मग्नानेव कुर्वंति । अद्यास्मद्राष्ट्रे धर्मशीलानामत्युदारचेतसा तेजस्विनां महात्मनां नितरामभावोऽस्ति । येषा शब्दे लोकसमुदायस्यैकमत्येन दृढ विश्वासः समुत्पद्येत तादृशा अग्रण्यः पुरुषाः प्रायशो न संत्येव । दुःस्वभावानि मनासि किमपि चलनवलनं कुर्वंतीति दृश्यते । पर तेन दौस्थ्यमेवाधिकं जायते ।

अस्यानर्थस्य निरासायाऽऽध्यात्मिको विकासः संपादयितव्यो मानुषमात्रेण। स च यथाविधि यथाधिकारं च गणेशोपासनयैव सिध्येत्। तेन व्यष्ट्यंतः-करणानि धर्मप्रवणान्युदात्तानि च भवेयुः। तादृशेष्वेव तेषु राष्ट्रमंगलस्य बीजानि सति। इयमेव प्रकृता जागृति. संघटना च। मंगलमूर्तेः कृपयैतत्सर्वं सिध्यत्विति तच्चरणारविंदयो· सप्रश्रय प्रार्थना विधायाल कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ अथेश्वरास्तित्वप्रश्नविमर्शः ॥ (२)

**स्वर्गापवर्गयोर्द्वारमामनंति मनीषिणः।**
**यदुपास्ति तमुद्दिश्य यः प्रश्नः स विमृश्यते ॥१॥**

अथेश्वरसद्भावे किं प्रमाणमिति केनचित् पृष्टे तत्रेदं प्रतिवक्तव्यम्।

**कुत्सिते च तथाऽऽक्षेपे एवं प्रश्नवितर्कयोः।**
**किंशब्दस्य प्रवृत्तिः स्यादेवमर्थचतुष्टये ॥**

तत्र कुत्सिते निंदितार्थे यथा—

**स किं सखा साधु न शास्ति योऽधिपम्।**
**हितान्न यः संशृणुते स किं प्रभुः ॥** इत्यादि।

आक्षेपे निषेधार्थे यथा—

**तत्र किं गमनेन, मा याहीत्यर्थः।** इत्यादि।

वितर्कार्थे यथा—

**"किमिंदुः किं पद्मं किमु मुकुरबिंबं किमु मुखम्"** इत्यादि।

प्रश्नार्थे यथा—

**"का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते" इत्यादि।**

· एवं किंशब्दस्यार्थचतुष्टयवाचकत्वदर्शनात् सकृदुच्चरितशब्दस्य सकृदर्थबोधकत्वनियमान्नानार्थकत्वस्यान्याय्यत्वाच्च, 'ईश्वरसद्भावे किं प्रमाणमिति वाक्यस्थ किंशब्दस्योक्तार्थचतुष्टयान्यतमार्थवाचकत्व वक्तव्यम्। तत्राक्षेपार्थोऽयं किंशब्दः। उन कुत्सितार्थः। अथवा वितर्कार्थः। आहोस्वित् प्रश्नार्थ इति।

यद्याक्षेपार्थस्तदा नास्तीश्वरास्तित्वे प्रमाणमित्युक्तं स्यात्। तथा सति न प्रतिज्ञामात्रेण साध्यसिद्धिर्जायत इति प्रतिज्ञातेऽर्थे हेत्वादिकं किमपि वक्तव्यम्। तच्च नोक्तमिति न्यूनत्वं दोषः। अत एव कुत्सितार्थोऽयं किंशब्द इत्यपि न सम्यक्। यत ईश्वरास्तित्वे कुत्सित प्रमाणमेतदपि प्रतिज्ञामात्रमेव।

किं च साध्यासाधकत्वात्तत् कुत्सितमन्यथा वा कुत्सितम्। अन्यथा चेद् व्यर्थं तस्योद्भावनम्। साध्यसिद्धिर्हि निष्प्रत्यूहं निर्वृत्तैव। साध्यासाधकमिति तत् कुत्सितमिति चेत्प्रमाण च साध्यासाधक चेति व्याघातः।

अथ गौणोऽय प्रमाणशब्द इति चेन्न। प्रमाणशब्दप्रवृत्तिनिमित्तं यत् प्रमाकरणत्वरूप प्रमाणत्वं तद्वत्यय प्रनाणशब्दप्रयोगश्चेत् तस्य मुख्यत्वेन गौणत्वव्याहतिः। यदि तादृशप्रमाणत्वशून्ये प्रमाणाभासे प्रमाणशब्दस्य प्रयोगस्तर्ह्यलं तस्योद्भावनेन। ईश्वरसद्भावे य प्रमाणभासः स कुत्सित इतीदं सर्वसमतमेव।

किं चेश्वरसद्भाव इति विशेष्योपादानं व्यर्थम्। तद्भिन्नवस्तुनः सद्भावेऽपि प्रमाणाभासः साध्यासाधकत्वात्कुत्सित एव।

वितर्कार्थः किंशब्द इत्यप्यसभवि। वितर्को हि सशयात्मा। स च विरुद्धनानाकोटिकः। तथा च संदेहानतिरिक्तस्य वितर्कस्य कोट्यंतरसापेक्षत्वात्तदपि वक्तव्यमितीश्वरसद्भाव एतत्प्रमाणमुतान्यदिति भवेत्। तच्च नोक्तं त्वयेति न्यूनत्व दोषोऽस्मिन्पक्षे वर्तत एव।

अथ प्रश्नार्थः किंशब्द इति चेत् प्रश्नार्थात् किं शब्दात् कस्याचित्पदार्थस्य जिज्ञास्यमानत्वं प्रतीयते। प्रकृते च वाक्ये प्रमाणपदसमभिव्याहारात् प्रमाणं जिज्ञास्यमिति व्यक्तं ज्ञायते। यद्विपयश्च प्रश्नस्तदेवोत्तरदात्रा वक्तव्यम्। अन्यथा 'आम्रान्पृष्टः कोविदारानाचष्ट' इतिवदुपहास्यः स्यादुत्तरप्रदाता। अतः प्रश्नोऽयमीश्वरास्तित्वे प्रमाणसामान्यविषयकस्तद्विशेषविपयको वाऽभिप्रेतः। प्रमाणसामान्यविषयकश्चेदीश्वरसद्भावे प्रमाणमित्येवोत्तर युक्तम्। प्रमाणसामान्य विषयको हि प्रश्नः। तच्च प्रमाणसामान्यं प्रमाणशब्देनोक्तमेव। प्रमाणविशेष जिज्ञासाचेदपि प्रमाणमित्येवोत्तरम्। यन ईश्वरास्तित्वे किं प्रमाणमिति प्रमाण

विशेषः क इति प्रमाणपदस्य प्रमाणविशेषपरत्वादुत्तरवाक्येऽपि प्रमाणपदस्य प्रमाणविशेषपरत्वमेवोचितम् ।

अथेश्वरसद्भावे किं प्रमाणमिति पृच्छतो ममायमभिप्रायः, किमनुमान तत्र प्रमाणमितरद्वेति। तत्राप्यनुमानमित्येवोत्तरमस्माकम् । कि तदनुमानमिति चेदयमपि प्रश्नोऽनुमानसामान्यविषय उत तद्विशेषविषय इति विविच्य प्रमाण-प्रश्नवदेव तत्रोत्तरमापतति ।

किं च प्रश्नार्थात्किंशब्दाज्जिज्ञासाविषयत्वं पदार्थस्य प्रतीयते। जिज्ञासा च ज्ञातुमिच्छा । इच्छाचाज्ञाते न सभवति । तस्मादीश्वरविषयप्रमाणं ज्ञातु-मिच्छता तद्विषयं स्वस्य ज्ञानमवश्य स्वीकार्यम् । तच्च ज्ञान यथार्थं स्यादयथार्थं वा । यथार्थ चेत्-तेनैव भवदीयज्ञानेन स्वविषय प्रमाणमुप-स्थाप्यते । विषये हि प्रमाणप्रवृत्तिमतरा तज्ज्ञानस्य यथार्थत्वं वक्तुमशक्यमेव । तेन च प्रमाणेन स्वगोचरस्येश्वरस्य सद्भाव उपस्थापितो भवतीति सिद्धोऽस्माकमनायासेनेश्वरसद्भावमनोरथः ।

तदयथार्थं चेत्तस्मिन्नयथार्थज्ञानविषयेऽस्माभिरप्ययथार्थमेव ज्ञानमुत्पा-दनीयमिति भवदिच्छा चेत् केयं स्वाधीनेऽर्थे परस्यापेक्षा । यतो भवानेवा-यथार्थज्ञानोत्पादनकुशलो यथैकं तत्र मिथ्याज्ञानमुत्पादितवास्तथाऽपरमपि तत्तुल्यमुत्पादय । वयं पुनर्यथार्थज्ञानोत्पादननिष्णाता मिथ्याज्ञाने सर्वथाऽशि-क्षिता एव ।

अथ मदीयायथार्थज्ञानस्य यो विषयः स मदीययथार्थज्ञानगोचरः कर्तव्यो भवाद्भिरिति त्वदीय वाञ्छितं चेद्यद्विशेष्यक यत्प्रकारकमयथार्थ-ज्ञानं तद्विशेष्यकं तत्प्रकारकमेव यथार्थज्ञानं केनापि कर्तुमशक्यमिति तादृशं भवतो वाञ्छितमनुचितमेव । न हि शुक्तिका रजतरूपेण मदीययथार्थज्ञान-विषयो भवत्विति प्रेक्षावतः प्रवृत्तिर्दृश्यते । येन रूपेणाऽयथार्थज्ञानविषयत्व तेन रूपेण यथार्थज्ञानविषयत्वे व्याघात एव ।

अथ स्वीयसिद्धान्तमनुसृत्य भवता यथार्थज्ञानं तत्रोत्पादनीय, तदर्थं भवाननुयुज्यत इति मन्यसे चेत्तदपि न सम्यक् । ईश्वरसद्भावे हि त्वया भ्रान्त्या प्रमाणाभासः प्रमाणतया प्रतीतः । तस्य प्रामाण्यं मया साधनीयमिति

नास्माकं सिद्धांतः। प्रत्युतेश्वरास्तित्वे यत्प्रमाणं भ्रान्त्या प्रमाणाभासत्वेन भवता प्रतीतं तत्प्रमाणनीयमित्येवास्माकं सिद्धांतः।

यदीश्वरास्तित्वविषयस्य प्रमाणस्य केवलं ज्ञापनं भवता कार्यमिति पृच्छतो ममाभिमतम्। न तु प्रमाणतोऽप्रमाणतोवेति विशेषस्तत्राभिमत इति चेन्न। ज्ञापनमात्रस्याप्रमाणज्ञानमादायाप्युपपत्तेः। तत्र स्वाधीनेऽर्थे का भवतः परापेक्षेत्याद्युक्तमनुषंजनयिम्।

तस्मात्स्वीकुरु शिष्यभावं प्रसादय शुश्रूषादिभिरस्मांश्छेत्स्यामस्ते संशयादिकमिति।

अथेश्वरसद्भावे किंचिदपि प्रमाणं नास्तीत्यस्मदीयपक्षः। तत्सद्भावे प्रचुरं प्रमाणमस्तीति तत्र भवतां पक्षस्तत्र पृच्छ्यते, किं तत्प्रचुरं प्रमाणं यदीश्वरं विषयीकरोतीति चेदुच्यते, श्रुणु सावधानेन मनसा।

अयमस्मि जरितः पश्यमेह विश्वाजातान्यभस्मीमन्हा
ऋतस्य मा प्रदिशो वर्धयंत्या दर्दिरो भुवना दर्दरीमि॥

४।६।७।५

इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्।
समूळ्हमस्य पांसुरे॥१७॥ अ. १। १९७॥

इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान्।
एकं सद्विप्रा बहुधा वदंत्यग्निं यमं मातरिश्वानमाहुः॥२। अ.॥
रूप रूपं प्रतीरूपो बभूव तदस्य रूपं प्रति चक्षणाय।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ताह्यस्य हरयः शतादश॥

१८।४।५२९ ऋग्वेद.

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्॥
संबाहुभ्या धमति संपतत्रैर्द्यावाभूमी जनयन् देव एकः॥

यजुर्वेद.

"ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत्" ॥१॥४०॥

वेदाहमेतं पुरुष महांतमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वा अतिमृत्युमेति नान्यः पथा विद्यतेऽयनाय ॥१८।३१॥
न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः ॥ ३ । ३२ ॥

भ. गीता.

" वेदैश्च सर्वैरहमेव वेद्यः "
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥
ईश्वरः सर्वभूताना हृद्देशेऽर्जुन तिष्ठति ॥
तत· स्वयम्भूर्भगवानव्यक्तो व्यंजयन्निदम् ।
प्रादुरासीत्तमोनुदः ॥ इत्यादि ।
इन्द्र धनस्य सातये हवामहे जेतारमपराजितम् ॥
सनः स्वर्षदति द्विष· सन· स्वर्षदिति द्विषः ॥६४७॥
ईशान इमा भुवनानि इंदो ईयसे युजान हरित सुपर्ण्यः ॥ ९५७ ॥
तद्विष्णोः परमं पद सदा पश्यंति सूरय. दिवीव चक्षुराततम् ॥ १६७२ ॥

सामवेद.

यतो वा इमानि भूतानि जायते ।
येन जातानि जीवंति यत्प्रयत्यभिसंविशंतीति ॥

तैत्तिरीयोपनिषत्

यः सर्वज्ञ. स सर्ववित् । यस्य ज्ञानमय तपः ।
सोऽकामयत । बहुस्या प्रजायेयेति । तत्तेजो असृजत ॥
इत्यादिः ' जन्माद्यस्य यतः ' न्याय. ॥

अथेश्वरसद्भावे प्रदर्शितश्रुतिस्मृत्यादिप्रमाणानुग्राहकाणि तर्कापरनामकान्यनुमानानि समासत उपस्थाप्यंते । तानि यथा —

(१) " तत्सिद्धिर्जगतो नियतप्रवृत्तेः " यदिदं सुरासुरनरकिन्नरगंधर्वयक्षरक्षः पितृपिशाचादिलक्षण द्युवियद्वाय्वनिलसलिलपृथिव्यादित्यचद्रग्रहनक्षत्रवृक्षवनरत्नौषधिगुल्मलतागिरिपाषाणादिप्रभेदं पतत्रिपन्नगमत्स्यकच्छपकीटमशकदंशयूकालिक्षादि विचित्रं चराचरात्मकं जगद् विविध-

प्राण्युपभोगयोग्यस्थानकालसाधनोपेतमत्यंतकुशलशिल्पिभिरपि मनसाप्य-चिंत्यरचनं देशकालनिमित्तानुरूपानियतप्रवृत्तिनिवृत्तिक्रमम् एतद्भोक्तृकर्म-विभागज्ञप्रयत्नपूर्वक, कार्यत्वे सति यथोक्तस्वरूपत्वात्, गृहप्रासादरथ-शयनासनादिवदित्यन्वयः । यन्नैवं तन्नैवं यथाऽऽकाशादिरिति परमतेन व्यतिरेकः ।

(२) सर्गाद्यकालीनद्व्यणुकप्रयोजकं कर्म, प्रयत्नजन्य, कर्मत्वात् संप्रतिपन्न-कर्मवत् ।

(३) गुरुत्ववता पतनाभाव. पतनप्रतिबंधकप्रयत्नप्रयुक्तो, धृतित्वात्, पक्षि-पतनाभाववत् ।

(४) ब्रह्माण्डनाशः, प्रयत्नजन्यः, नाशत्वाद् घटादिनाशवत् ।

(५) घटादिव्यवहारः, स्वतंत्रपुरुषप्रयोज्यः, व्यवहारत्वादाधुनिककल्पित-लिप्यादिव्यवहारवत् ।

(६) वेदजन्यप्रमा, वक्तृयथार्थवाक्यार्थज्ञानजन्या, शाब्दप्रमात्वात् । देवदत्तवाक्यजन्यप्रमावत् ।

(७) द्व्यणुकपरिमाणजनिका सख्या, अपेक्षाबुद्धिजन्या, एकत्वान्यसख्यात्वात् । इत्यादीन्यनुमानानि च प्रमाणोपबृंहकत्वेन प्रमाणतयोन्नेयानि ।

किं च नाहमीश्वर इति त्वदभिमतं प्रत्यक्षमपि निषेधप्रतियोगित्वेने-श्वरज्ञान त्वयि सूचयतीत्यल पल्लवितेनेति शम् ॥ श्री ॥

---

## ॥ श्रीश्वरावतारविमर्शः ॥ (३)

**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ गी० ४।८ ॥**
**यद्यद्विभूतिमत्सत्वं श्रीमदूर्जितमेव वा ।**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ गी. १०।४१ ॥**

अथ सच्चिदानन्दात्मकं ब्रह्मचैतन्यं यद्यपि सर्वव्यापि तथापि तत्सगुणं भूत्वाऽवतीर्णं चेदेव निखिलजीवोपकारकं भवितुमर्हति। नान्यथा। तद्यदा निजां विशुद्धसत्त्वप्रधानां मायाऽपरनाम्नीं प्रकृतिमाश्रयति । तदा तदेवेश्वर इति संज्ञां धारयति । ततः प्रलयकाले स्वस्मिन्विलीनाना जीवाना कर्माणि—तेभ्यः फल-भोग प्रदातुमुन्मुखानि भवंति यदा तदेश्वरस्य पुनरपि सृष्टिं निर्मातुमिच्छा जायते । " तदैक्षत बहुस्या प्रजायेय " इति यद्वेदे वर्णनं दृश्यते। तन्निर्दिष्टा-मवस्थामनुलक्ष्यैवेति ज्ञेयम् ।

ईश्वरस्याय विशुद्ध सत्वगुणः स्तोक रजस्तमोभ्यां संसृष्ट इत्यवश्यं वाच्यम् । यत एतेषा सत्वरजस्तमसा मध्ये कोऽप्येको गुणः स्वेतरगुणासंसृष्टेन शुद्धस्वरूपेण स्थातु कार्यं कर्तुं चासमर्थ एवेति। मिथः ससृष्टानां सत्त्वरजस्तमो-गुणानामनुसारेणेश्वरस्यावतारा अपि द्विविधा जायते । तत्रैक. सत्त्वप्रधानो ज्ञानशक्तेरवतार. । अपरो रजःप्रधान' क्रियाशक्तेरवतारः । ज्ञानशक्तेरवतारो विरक्ताय त्यागिने च जीवाय श्रेयस्करं ज्ञानमुपदेष्टुमाविर्भवति । क्रियाशक्ते-रवतारः समर्थमविरक्तमधिकारिणं प्रति विशिष्टा क्रिया कथयितुं कारयितुं च प्रादुर्भवति । साधुसंरक्षण, दुष्टनिबर्हणं, धर्मसंस्थापनं चोभयत्र समानमेव ।

श्रीमान् दत्तात्रेयः, महर्षिर्व्यासः, श्रीमदाद्यशंकराचार्याः, शुकयोगींद्राः एवमादयः परमेश्वरस्य ज्ञानशक्त्यवताराः समुल्लसंति । ज्ञानशक्त्यवताराणा जगति विशेषतः प्रसिद्धिर्न भवति । तेषामल्पमपि चरित्रं जनतया प्रायो न ज्ञायते । एतत्तस्या एव दुर्भाग्यम् । अथवा स्वाभाविकमेवेदम् । तथाहि—शास्त्रं यद्यपि जगत्कल्याणकारि तथापि तस्य महत्त्वं सर्वैर्न ज्ञायते । रमणीयतरः प्रासादो यस्या आश्रयेण दृढं तिष्ठति तस्या मूलभित्ते ( पाया ) र्महत्त्वं ज्ञातारो जगति विरला एव.। बाह्यसौंदर्यासक्तचित्ता एव बहव उपलभ्यंते । शास्त्रा-पेक्षया खड्गादिशस्त्राणामेव तीक्ष्णतरो ध्वनि. समस्तेषु जनेषु समधिकं कार्यं करोति । अत एवेश्वरस्य रामकृष्णपरशुरामप्रभृतयः क्रियाशक्त्यवताराः प्राचुर्येण प्रिया. संवृत्ता जनानाम् । तेषा पुराणानि गीयंते । उत्सवाश्च क्रियन्ते । एतेऽवताराः उन्मत्तानामुन्मूलन कर्तुमाविर्भवंति ।

येन केनापि हेतुना उन्मत्तो भूत्वा —

**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ।**
**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥**

इत्येवं साट्टहास प्रवक्ता दुरभिमानी मर्त्यः शास्त्रोपदेशं कदापि न शृणोति । दुर्योधनं प्रति साम्नोपदेशं कर्तुं साक्षाद्भगवति श्रीकृष्णे संप्राप्तेऽपि श्रेयस्करं तदुपदेशमश्रुत्वात्युन्मत्तो दुर्योधनो भगवतोऽवमानमेव कर्तुं प्रवृत्तः । रावणेनापि बिभीषणादेरुपदेशो नांगीकृतः । वेनेन राज्ञा महर्षीणा शुभोदर्के उपदेशः पश्चात्कृतः । एवमादीनां प्रमत्ताना पुरतः शास्त्रं किं कुर्यात् । सज्जना वा किं विदध्युः । तेभ्यश्चतुर्दशं रत्नमेवापेक्षितम् । अत एव भगवान् श्रीकृष्णः—

"प्रज्ञादृशा किं तटिनीभुवा किं मयाऽधुना किं वसताऽपि दौत्ये ।
पार्थाय दातुं प्रभवेद्धरित्रीं गदैव सा गधवहस्य सूनोः ॥

इति महता क्रोधेनाब्रवीत् ।

आधुनिकाः सुधारका अपि ' दग्धानि कुरुत युष्माकं शास्त्राणि ' ' वयमद्य नूतनं शास्त्रं नवीनां च नीतिं प्रकुर्मः ' इति प्रलपन्ति । इत्थं निरर्गलं प्रलपतां वाचाटानां पुरतः शास्त्रचर्चा व्यर्थैव । तेभ्यः क्रियाशक्त्यैव नेत्रोन्मीलनकरं तीक्ष्णं प्रत्युत्तरमपेक्षितम् । तदर्थमेव भगवतः क्रियाशक्त्यवतारा युगे युगे प्रादुर्भवंतीति नैव विस्मर्तव्यं सुधीभिः ।

ईश्वरस्य ज्ञानशक्त्यवतारा अपि ज्ञानोपदेशद्वारा तदेव साधुपरित्राणादिक कार्यमनुतिष्ठंतीत्युक्तमेव प्राक् ।

सनातनधर्मिणो वयमेतानवतारानलौकिकान् मन्यामहे । अलौकिकत्वं त्वेतेषामनेकविधया दृग्गोचरं भवितुं शक्यम् । तथाहि — कदाचित्समये कावप्येकौ सत्वशीलौ सच्चरित्रौ दंपती वृद्धत्वेऽप्यावाभ्या नंदनस्याऽऽननारविंदं न संदृष्टमिति खिन्नौ भूत्वा पुत्रोत्पत्यर्थं नैकविधाः प्रार्थना. कुरुतः । तदर्थं पवित्रतरदेवमदिरसरित्तीरारण्यादिस्थानेषु गत्वा तत्रोग्रं तपोऽनुतिष्ठतः । शीर्णपर्णादीनुपभुज्य केवलं पानीयं वा पीत्वा समुत्कंठितचित्तेन भगवन्निकटे पुत्रस्य यांचा कुरुतः । शास्त्रमपुत्रं नरं धिःकरोतीति तावतीव दुःखितौ भवतः ।

पुत्रासत्व आवयोरुद्धारः कथं स्यादिति चिंता तौ नितांत दहति । ततस्तयो-स्तपश्चर्यया भक्त्या च सुप्रसन्नः कृपाब्धिर्भगवास्तावनुगृण्हाति । वार्धक्येऽपि भगवत्कृपया तयोः सुपुत्रो जायते । तेन तौ कृतार्थौ भवतः । अस्यै पुत्रावाप्त्यै ताभ्या कामोत्तेजकमौषधं न गृहीतम् । गर्भधारणचूर्णं नाऽऽस्वादितम् । बलवीर्यजनकः पौष्टिकाऽऽहारोऽपि वा न कृतस्ताभ्याम् । तयोः संतत्यनु-कूल वयोऽप्यतिक्रांतम् । गात्रशैथिल्य जातम् । एतादृश्यामवस्थाया निर्वृत्तायाः पुत्रोत्पत्तेः शारीरसंपत्त्यपेक्षया दैवीसंपदेव प्रयोजिकेति निःसंदिग्धं सिध्यति । दैहिकधर्मापेक्षया दैविकधर्मो नियतमावश्यक. । भगवदधिष्ठानं चापेक्षितम् । जगद्गुरुश्रीमदाद्यशंकराचार्याणा परमभाग्यवंतौ पितरौ दिव्यसंपत्त्या संपन्ना-वास्ताम् । गीताया उपदेष्टा भगवान् गोपालकृष्णः, रामगीताप्रतिपादको रघु-कुलावतंस. श्रीरामचन्द्रः, अनुसूयानंदनः श्रीदत्तगुरुः, समर्थः श्रीरामदासः सनातनाऽऽर्यधर्मसंरक्षकश्छत्रपतिः शिवराय एवमादीनामलौकिकपुत्ररत्नाना मातापितरौ दिव्यसंपत्संपन्नावास्तु. । एतेषामलौकिकपुत्राणा जननमप्यलौकिक-मिति सूचयितुं तेऽयोनिसभवा इत्यभिधीयंते तत्त्वविद्भिः ।

सांप्रतं प्रायशः सर्वत्र श्रीमदाद्यशकराचार्यजयंत्युत्सवस्य प्रचलितत्वा-ज्जगद्गुरोः श्रीशकरमस्करींद्रस्यायोनिसंभवत्वद्योतकम्—

" चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यति "

इत्यादिप्रमाणोपबृंहितं संप्रदायागतं वचनमित्थं श्रूयते ।

**शंकरं कुंकुमाभासं मुनिं कूष्मांडसंभवम् ।**
**भाष्यकारं स्तुमो नित्यमुद्यद्भास्करसंनिभम् ॥** इति ।

यदा—निसर्गतो बहिर्मुखानींद्रियाणि भौतिकविषयेष्वत्यंतमासक्तानि । जीवनकलहः संप्रवृत्तः । शाक्तपाशुपतकापालिकदैगबरादिवेदबाह्यमतमता-तराणा परस्परं वाग्युध्दं प्रवृत्तम् । सर्वशून्यवादिनां बौद्धानां नास्तिक्य-वादेन सनातनवैदिकधर्मोपरि निरर्गलमाविर्भवतां तुच्छतराक्षेपाणामपि समुच्छे-दस्य बलवत्यावश्यकता जनतायां समुत्पन्ना । ब्राह्मण्यं विलुप्तप्रायं भूत्वा " न हि न हि समये कोऽपि संध्यामुपास्ते " इत्येतादृशी दुरवस्था प्राप्ता । तदा-

" काण्डत्रयात्मके वेदे प्रोध्दते स्यादि्द्वजोध्दतिः" इति गर्जना कुर्वंतो भगवदंशभूता महापुरुषा एकस्यानुपृष्ठमपर इतिरीत्याऽस्मिन् भारतवर्षे प्रादुर्भूताः। तत्र शिवसूनुः षण्मुखः कुमारिलभट्टेति नाम्नाऽवतीर्य बौद्धादिभिः साकं वादप्रतिवादकोटिप्रतिकोट्यनुभवप्रत्यनुभवहिंसाप्रातिहिंसा निष्ठाप्रतिनिष्ठेत्यादि प्रकारैः " यक्षानुरूपो बलिः " अथवा " कंटकेनैव कंटकम् " इति न्यायेन सुरासुरनिकराश्चर्यकरं वाग्युद्धं विधाय तस्मिन् संग्रामे तान् समस्तान् नास्तिकान् विजित्य सर्वथा विजयी संवृत्तः। ततः सर्वे जनाः पुनरपि पूर्ववद्वैदिके सनातनाऽऽर्यधर्मे नितातं विश्वस्य यथाधिकार तस्य धर्मस्यानुष्ठान निर्वर्तयामासुः। काम्यकर्मणः फलस्य साक्षादनुभवोऽपि जनतायाः समागतः। तेन यज्ञादिकर्मणां बाहुल्येन प्रचारस्तत्र तत्र पूर्ववत्सप्रवृत्तः। मत्राणामलौकिक सामर्थ्यमनुभवारूढमासीत्। कुमारिलभट्टानामिय लोकोत्तरा कृतिरतीव महत्यत्यर्थं स्तुत्या चेति नात्र संशयः कोऽपि।

अथापि मानुषजन्मनः प्रकृतं सार्थक्यं संपादयितुं तत्कर्मजालमसमर्थमेव खलु। कर्मकांडमैहिकं पारत्रिक चाभ्युदयं संपादयतीत्यवितथमेव। परं तेनोत्तरोत्तरं कामना वर्धत एतदपि न वितथम्। तदुक्तम् —

**न जातु कामः कामानामुपभोगेन शाम्यति।**
**हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते॥ इति।**

तस्या वर्धने च मालिन्यस्यापि तस्या समधिकः संभवोऽस्ति। तथा सति प्राग्वत्पुनरपि जननमरणचक्रेऽनवरतं परिभ्रमणमपरिहार्यम्। अत एवानात्मश्रीविगर्ह प्रकरण आचार्यैरुक्तम् —

कायः क्लिष्टश्चोपवासैस्ततः किं स्नातस्तीर्थे जन्हुजादौ ततः किम्।
दानं दत्तं ह्यष्टसंख्यं ततः किं येन स्वात्मा नैव जिज्ञासितोऽभूत् ॥१॥
जप्ता मंत्राः कोटिशो वा ततः किमन्नैर्विप्रास्तोषिता वा ततः किम्।
यज्ञैर्देवाऽऽराधिता वा ततः कि येन स्वात्मा नैव जिज्ञासितोऽभूत् ॥२॥
गात्रं भस्माच्छादितं वा ततः किं रुद्राक्षादिः सद्धृतो वा ततः किम्।
प्राणायामः साधितो वा ततः किं येन स्वात्मा नैव जिज्ञासितोऽभूत् ॥३॥

इत्येवं मानुषजन्मनोऽपूर्णतामर्थादात्मीयामशुद्धतां समुच्छेत्तुमात्मतत्त्व-ज्ञानमेवान्वेषणीयम् । तदेव तत्र समर्थम् । अत एव भगवत्पूज्यपादैश्चित्त-शुद्ध्यर्थं निष्कामकर्मणः मुक्त्यर्थं चाऽऽत्मज्ञानस्यात्यन्तमावश्यकताऽस्तीति सर्वा-क्षेपनिरसनपुरःसरं सुस्पष्टं प्रतिपादितं श्रुतियुक्त्यनुभवबलतः । अयमेव समस्त-जगदुपर्याचार्याणां महानुपकारोऽस्ति । अतस्त एव यथार्था जगद्गुरवः । मुक्तिप्रदब्रह्मविद्यायाः सम्यगुपदेष्टृत्वादिति । मानवजीवितेन समुदात्तध्येययुतेन भाव्यमिति ये मन्वते तेषामाचार्यशंकरकृतोपदेशानुसरणं विना नान्या गति-रस्ति ।

अस्य मानुषजन्मनः किमंतिमं ध्येयमुद्देश्यं वेत्ययमतिगंभीरः प्रश्नः । यतोऽस्य मर्त्यजन्मन आदिमध्यान्ताः सर्वथा पराधीना इति सुप्रसिद्धम् । स्वयं जीवितव्यं वा न जीवितव्यं विशिष्टपरिस्थितावेव जीवितव्यमेतावंतं कालमहं भूयासमेवैतास्मिन् काल एव मर्तव्यमित्यादिकं किमपि निर्णेतुमसमर्थोऽयं मर्त्यः न हि तदधीनमिदं किमपि । एवं स्थिते तदंतिमं ध्येयमुद्देश्यं वा कथं निर्णेतव्यं तेन किंचिज्ज्ञेन मर्त्येन कथं च स्वैरयत्नेन संपादनीयम् । यस्य कस्यापि हि वस्तुनः स्वरूपाधिगमं विना तस्य प्रयोजनादिकं निश्चेतुमशक्यम् । अस्य मानवजन्मनः प्रकृतं किं स्वरूपम्, कुतोऽस्य प्रादुर्भावः कुत्र वा परिणतिः, जगता साकमस्य कः संबंधः, इत्यादेः साकल्येनाधिगमं विनाऽस्य ध्येयं स्थिरीकर्तुं केनाप्यशक्यम् । तात्पर्यम्—

**कस्त्वं कोऽहं कुत आयातः का मे जननी को मे तातः ।**
**का ते कांता कस्ते पुत्रः संसारोऽयमतीव विचित्रः ॥**

इत्यादिप्रश्नजातस्योत्तराण्यादावपेक्षितानि । पिंडब्रह्मांडयोः सुसूक्ष्मं विमर्शं विधाय प्रश्नसमूहस्यास्य निःसंदिग्धान्युत्तराणि वेदशिरोभिरेव प्रदत्तानि । तथा—बहिर्मुखैः क्रियमाणाः सर्वाः शंकाः कुशंकाश्च समूलमुन्मूल्य वेदांत-सिद्धांतस्याद्वैतब्रह्मणस्तर्कसंशोधितं प्रमाणपूतमनुभवारूढं चोत्तमं मंडनं भगवत्पादैःकृतं प्रस्थानत्रयभाष्ये । "आदावहं क इति जानीथ" इति तै-रुपदिष्टम् । तस्मिन्नहमि याथार्थ्येनाधिगते किं ममांतिमं ध्येयमिति प्रश्न एव नाव-

शिष्यत इति तत्र चमत्कृतिर्विद्यते । इतरदार्शनिकैर्मतमतान्तरैश्च स्वीयस्वैर-मत्यनुसारं केवलाप्रतिष्ठिततर्कावलम्बनेन मनुष्यजन्मन : परस्परविरोधि ध्येय-मुक्तम् । किं तु बलवत्प्रमाणस्याभावात्तर्कस्याप्रतिष्ठितत्वदोषदुष्टत्वेन च ध्येयस्य यथार्थं स्वरूपमेव यत्रानाधिगतम् तत्र मिथो विरुद्धं तैरुक्त ध्येयं वास्तवमित्यधिगंतुं सुतरामनर्हमिति कि पृथक् वक्तव्यमस्ति ।

परमेश्वराधिष्ठतयाघटितघटनापटीयस्या मायया योऽयमत्यद्भुतः कुपित-फणिफणामंडलच्छायासदृक्ष प्रपंचभूरुहः सुविस्तारितः, कुतस्तस्योत्पत्तिः, कथ कदा वा संवृत्ता सा, सङ्कोचविकासावस्य कथं भवत, इत्यादि कूलंकष विवेकं कर्तुं येऽसमर्थास्तेषामस्य मनुष्यजन्मन कृतार्थतामुद्दिश्य वक्तुमधिकार एव न प्राप्नोति । अनधिकारिभिर्मुखमस्तीत्यतः किमप्युक्तमपि तत्प्रामादिक-मेवेत्युपेक्ष्यम् ।

तत्त्वतो विचार्यमाणे नलिनीदलगतजलबिंदुवत् चचलस्यास्य मर्त्य-जीवितस्य समुन्नत्यवनत्योर्नियमानुपदेष्टुं परमेशकल्पस्य वेदपुरुषस्यैवाधिकारो विद्यते । तदनु भगवतो द्विविधशक्त्यवताराणा प्रागुक्ताना सुविज्ञेय । अत एव यैर्भगवत्पूज्यपादैस्तस्य वेदपुरुषस्य न्यायोपबृंहितं यथार्थं विवरणं कृतं तेषामेव श्रीमदाद्यशंकराचार्याणां जगद्गुरुरिति सर्वश्रेष्ठमभिधानं शोभतेतराम् । परमपूज्यानां तेषां लोकोत्तरमिदं जगदुद्धारकं कार्यं निरुपमं खल्वस्ति । सना-तनार्यधर्मस्य वेदराशिमुपजीव्य सुविवेचनपूर्वकनिरूपणावसरे तैरेतादृश घोर-घोरं तर्कजालं कुमतनिरासायोद्भावितम् । यत्तस्य पुरत. कस्यापि प्रतिपक्षिण-स्तार्किकस्य तर्काः सहस्रशश्छिन्नाः संतो नाम्नाऽपि नावतिष्ठति । यं कमपि स्वैरबुद्धिप्रामाण्यवादिनं तार्किकं दमयितुं तदस्थीनि सचूर्णयितुं च तीक्ष्णतरं सामर्थ्यमोजस्विन्यां श्रीमच्छंकरमस्करींद्रवाण्या परिपूर्णं वर्तते । प्रत्नाना सांप्र-तिकानां च विपश्चितां शिरासि समादरान्नामयिता भगवत्पादीयः प्रसन्नगंभीरो वाङ्मयमहोदधिः सर्वत्रोच्चैः समुल्लसति । तथा -- प्रेमलात.करणानां भाविकानां मनस्सु प्रतिक्षणं सात्विकप्रेमामृततरंगपरंपरासमुत्पादकानि द्राक्षारसवन्मधुर-

मधुराणि स्तोत्राण्यपि तैरारचितानि । येषु स्तोत्रेषु विशुद्धतर्कस्य निरतिशय-प्रेमरसस्य च मनोहरः कृष्णाककुद्मतीसगमवत्संगमः परिदृश्यते ।

इत्थं दिव्यप्रभावोऽयं लोकोत्तरः पुमानेतस्या भारतभूमाववतीर्ण इति तस्याः सुमहद्भाग्यं किं वर्णनीयम् । यथार्थब्राह्मण्यस्योद्धर्तायं महापुरुषो न केवल ब्राह्मणजातेर्न केवल भारतवर्षस्यापितु सर्वासा जातीनां सर्वेषां च राष्ट्राणा मगलाशसकः सहस्ररश्मिरिव विराजते । तस्यास्य महापुरुषस्य समुपन्नातोऽय जयंत्युत्सव उत्तरोत्तर समुपचयं गच्छत्वित्याशास्य पवित्रेऽस्मिञ्जयंत्युत्सवपर्वण्युत्सवदेवतायाः पुरतः—

**शास्त्रं शारीरमीमांसा देवस्तु परमेश्वरः ।**
**आचार्याः शंकराचार्याः संतु मे जन्मजन्मनि ॥**

इत्युच्चैरावेद्य तानेवाऽऽचार्यचरणान् सप्रणम्यालंकुर्म इति सर्वं शिवम् । ‘ तत्सद्ब्रह्मार्पणमस्तु ’ ॥ श्रीः ॥

---

# अद्वैतप्रमाणप्रश्नविमर्शः (४)

**किमस्तिमानमद्वैतेऽस्त्येवं प्रश्नस्तु युज्यते ।**
**नोपपद्यत इत्यादिर्विमर्शः क्रियतेऽधुना ॥१॥**

अथ मानाधीना मेयसिद्धिरिति परीक्षकाणा समयादद्वैते किं प्रमाणं विद्यत इति प्रश्ने प्रश्न एवायमसंगत इति ब्रूमः । तथाहि, यदुद्दिश्येत्थं प्रमाण-प्रश्नः क्रियते त्वया तस्याप्रतीतौ कथमेवं प्रश्नः कर्तुं शक्यः । न हि केवलं प्रमाणं भवता पृच्छ्यते । अपित्वद्वैताख्यविषयविशेषविशेषित प्रमाणम् । सत्येव प्रश्नविषयप्रमाणोद्देश्यमद्वैतं ज्ञातं चेदेवायं प्रश्नः सुसंगतः स्यात् । यतः प्रश्नो

हि वाग्व्यवहारविशेषस्वरूपः। स च वाग्व्यवहारः ‘अर्थं बुध्वा वाक्यं रचतीति सर्वानुभवसिद्धनियमाज् ज्ञानजन्यः । अन्यथा तादृशव्यवहारस्य व्यवहर्तव्य-नियामकाभावेन सर्वत्राव्यवस्थाप्रसगः ।

अथ प्रश्नविषयप्रमाणोद्देश्यमद्वैतं प्रतीत्यैवाय प्रश्नस्तत्प्रमाणविषयकः क्रियते मयेति चेत्सा तव प्रतीतिः प्रमाऽप्रमा वा । यदि प्रमा तर्हि तस्याः प्रमाया यत् करणं तदेवाद्वैते प्रमाणं तवाप्यभिमतमिति वृथा तत्र प्रश्नः । न च सामान्यतोऽद्वैतप्रमाणसिद्धौ सत्यामपि विशेषतस्तत्सिध्यर्थमेव प्रश्नः क्रियते मयेति वाच्यम् । यतः सामान्यतस्तित्सिद्धिरेव विशेषमाक्षिप्याऽऽनयंती विशेष-मपि तुभ्यं कथयेदेवेति निष्फलोऽयं विशेषत. प्रमाणप्रश्नः । परिगणितेषु हि प्रमाणप्रकारेषु यत्र दोष न पश्यसि तत्रैव सामान्यस्य विश्रांतिः समुचिता ।

अथ तेषु सर्वेष्वपि दोष पश्यसि चेदगत्या निर्दुष्ट प्रमाणातरमाक्षिप्य तत्र सामान्येन यथासुखं विश्रांतिः कार्या । यदि नास्ति तादृशं प्रमाणांतर-मित्येव तवाध्यवसायस्तर्हि नितरा व्यर्थोऽयं तव प्रमाणान्वेषणप्रयत्न इति तूष्णींभाव एव त उचितः ।

द्वितीये तां प्रतीतिमप्रमा मन्यमानस्य तव ‘अप्रमाविषये किं प्रमाणम्’ इति प्रश्नः कथं न विरुद्धस्तद्वद । यदि मन्मते सा प्रतीतिरप्रमैव त्वन्मते तु प्रमैवेति तस्याः करणं प्रमाणं पृच्छ्यत इति ब्रूषे, नैतदपि समंजसम् । यतस्तव यदद्वैतविषयं ज्ञानमुत्पन्नं तस्य करणं प्रमाणरूप मया वक्तव्यमिति नास्ति नियमः । यद्यपि मया सदैवाद्वैतमभ्युपेयते । तावता तावकीनस्य ज्ञानस्य करणं किं प्रमाण भवेत् । वन्हिमत्यपि हि पर्वते कश्चिद् बाष्पं धूमत्वेन प्रतीत्य तेन वन्हिमनुमिनोति । तावता किं बाष्पविषयं धूमज्ञानं प्रमाणं स्याज्जात्वपि न स्यादिति ।

आस्ता नामायं प्रश्नो यथा तथा । भगवती श्रुतिरेवाद्वैते परमं प्रमाण-मिति ब्रूमः । श्रूयते हि, ‘एकमेवाद्वितीय ब्रह्म । नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति’ इत्यादिश्रुतिवचः । ननु ‘पुत्रकामः पुत्रेष्टिं कुर्यात्’ ‘कारीर्या वृष्टिकामो यजेत्’ इत्यादिश्रुतिवाक्यात्

कृतायामपि पुत्रेष्ट्यादौ पुत्रवृष्ट्यादि फल न दृश्यत इति दृष्टार्थश्रुतेरनृतत्वाव-धारणात् स्वर्गकामो यजेतेत्याद्यदृष्टार्थबोधकश्रुतिजातमप्यनृतमेव । अनृतार्थाभि-धायिदृष्टार्थश्रुतिवत् ।

तथा 'उदिते जुहोति' 'अनुदिते जुहोति' इति विधाय 'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति' 'शबलोऽस्याहुतिमभ्यवहरति य अनुदिते जुहोति' इति विहितव्याघात. ।

तथाऽभ्यास उपदिश्यमाने 'त्रिः प्रथमामन्वाह त्रिरुत्तमा' इति पुनरुक्ति., एवमनृतविहितव्याघातपुनरुक्त्यादिदोषप्रसक्ते श्रुतीना नैव प्रामाण्यम् । रागादिदोषाक्रान्तपुवाक्यवत् ।

अथ कथंचिदनुमतेऽपि प्रामाण्येऽहेयानुपादेयात्मकासिद्धार्थबोधकश्रुतीना प्रामाण्यं दुरापेतमेव । विधिप्रत्ययसमभिव्याहृतवाक्यस्यैव हि ज्ञानद्वारा व्यवहारजनकत्वेन प्रवर्तकज्ञान प्रति प्रामाण्यप्रयोजकसामर्थ्यावधारणात् । न चैवमपि उपक्रमादिभिर्लिङ्गैस्तात्पर्येणाभिधायित्वरूपपदसमन्वयबलेन 'एकमेवाद्वितीयं ब्रह्म' त्यादिश्रुतीना तासु प्रतीयमानाऽबाधितार्थवत्वस्य सत्वादस्ति प्रामाण्यमिति वाच्यम् । न ह्यासा श्रुतीनां ब्रह्माद्वैते तात्पर्यम् । अपि तु मुमुक्षुभिर्ब्रह्मैवैकमुपासनीयमित्यत्र तात्पर्यम् । तथाचोपासनायामेवासा श्रुतीना प्रामाण्यं न तु ब्रह्माद्वैतेऽपीतिचेद्, एकं ब्रह्मेति पदसमन्वयबलेन प्रतीयमान ब्रह्मैक्यमुपासनापरत्वेऽपि वाक्यस्याबाधितमेव वाच्यम् । तथाऽज्ञाताबाधितार्थबोधकत्वात्तासा श्रुतीना प्रामाण्यमकामेनाप्यवश्यं वक्तव्यमिति ।

ननु यथा 'यजमानः प्रस्तर.' 'आदित्यो यूप' इत्यादिश्रुतिषु पदसमन्वयबललभ्याभेदार्थकसामानाधिकरण्यस्य यजमानप्रस्तरयोर्यूपादित्ययोश्च भेदग्राहिप्रत्यक्षेण बाधात् स्तुत्याद्यन्यार्थत्वं तथाऽद्वैतश्रुतीनामपि पदसमन्वयबललभ्ये सिद्धेऽर्थेऽद्वैते प्रामाण्यमसंभवि । भेदग्राहिप्रत्यक्षप्रमाणेन बाधादेव । अत ईश्वरैकत्व उपासनाया प्रतिशरीरं वा कुत्रचित्तात्पर्यं कल्प्य नाद्वैत इति चेन्नैवम् ।

यद्ध्यद्वैत श्रुतीनां बाधकं प्रत्यक्षं मन्यसे । तत्किं यत्किंचिद् घटपटादिप्रतियोगिकभेदावगाहिप्रत्यक्षम् । उत भूतभाविवर्तमानसकलवस्तुप्रतियोगिकभेदग्राहिप्रत्यक्षसामान्यम् । आद्य आत्मीये घटपटादेर्भेद एव नियमेन तदुत्पद्यते । नान्यत्र । अतस्तद्विषयादन्यत्र प्रवर्तमानाऽद्वैतश्रुतिर्न तेन बाधितुं शक्या । भिन्नविषयत्वात्तस्याः समानविषय एव बाध्यबाधकभावो न भिन्नविषये । अत एव 'अग्नीषोमीयं पशुमालभेत' इति विशेषश्रुत्या स्वविहितपशुहिंसायामेव 'माहिंस्यात्सर्वाभूतानि' इति सामान्यश्रुतिर्बाध्यते । नान्यत्र गगादिप्राप्तहिंसायाम् । विभिन्नविषयत्वात्तयोः श्रुत्योः । केवलं विरुद्धार्थमात्रावगाहित्वं न बाध्यबाधकभावे तंत्रम् । तथा सति हिंसाविषयत्वतदभावविषयत्वयोः परस्पर विरोधात् 'अग्नीषोमीय पशुमालभेतेति' पश्वालम्भविधायकश्रुत्या सर्वभूतानामहिंसाविधायिन्या 'माहिंस्यात्सर्वाभूतानीति' श्रुतौ बाधितायां तस्या निर्विषयत्वेनाप्रामाण्यापातः । तया वा तस्या बाधितायां स एवानिष्टप्रसंगः । अतः समानविषयत्वे सति विरुद्धार्थग्राहित्वं बाध्यबाधकभावे प्रयोजकं वक्तव्यमिति ।

अथ घटपटमात्रभेदविषयकं यत्किंचित्प्रत्यक्षं नाद्वैतश्रुतेर्बाधकमुच्यते । अपितु सामान्यलक्षणप्रत्यासत्त्या भूतभाविवर्तमानसकलपदार्थभेदग्राहोक प्रत्यक्षमिष्यते । तदेव समानविषयत्वे सति विरुद्धार्थग्राहितया भवदिष्टाद्वैतश्रुतेर्बाधकमिति चेत् । तादृशेन त्वयेष्यमाणेनैकेन प्रत्यक्षेण तव सर्वज्ञता तदा श्रद्दध्या यदि जानासि माचित्ते कि विशेषतो वर्तत इति । अर्थात्तव तादृशज्ञानास्तित्वे न किमपि प्रमाणमिति खपुष्पायमाणं त्वयेष्यमाणं तत्प्रत्यक्ष जात्वप्यद्वैतश्रुतेर्बाधक भवितुं नार्हतीति स्पष्टम् । तस्मात्—

**कथं सामान्यतो ज्ञाते नैव ज्ञाते विशेषतः ।**
**पदरोधस्त्वया कर्तुं शक्यः स्यादद्वयश्रुतेः ॥ इति ।**

अपि च भवता यं भेदं विषयीकुर्वत् प्रत्यक्षादिकमद्वैतश्रुतेर्बाधकमुच्यते । स भेद एव नास्ति चेत् परमार्थतः कुतस्तद्बाधकं स्यात् । तथाहि यत्प्रत्यक्षेण भेदो गृह्यत इति त्वं ब्रूषे । स किं तत्तत्पदार्थस्वरूपमेव भेदः । उतान्योन्याभावः । अथवा वैधर्म्यं किं वान्यदेव किमपि । आद्ये घटाद्भेद

पटस्येत्युक्ते घटादिति पंचम्यर्थः प्रातियोगित्व वक्तव्यम् । भेदो हि भवन् किंचित्प्रतियोगिक एव भवति । अन्यथा स्वरूप भेद इति पारिभाषिकं स्व-संकेतमात्रासिद्ध नाम स्यात् । भवतु किंचित्प्रतियोगिकस्ततः किमिति चेत् पटानुयोगित्वे सति घटप्रतियोगिकत्वविशिष्टो भेदः पटस्य स्वरूपमिति पर्य-वस्यति । सत्येवं विशेषण विहाय विशिष्टपदार्थानंगीकारात् प्रतियोगितया पटे विशेषणीभूतो घटोऽपि पटस्य स्वरूपं तच्च प्रत्यक्षेण गृहीतमित्यभेद एव प्रत्यक्षेण गृहीतः । न भेद इति सिध्यति ।

ननु घटाद्भिन्नः पट इतीय प्रतीतिरभेदोल्लेखिनीति यथा व्युत्पाद्यते । तथा भेदोल्लेखित्वेऽप्यस्या दीयता दृष्टिः, अभेदे हि घट इत्येव पट इत्येव वा बुद्धिः स्यात् । न घटाद्भिन्नः पट इति चेत् स्यादित्थ पर्यनुयोगो यदि पारमार्थिकम-भेदमिच्छंतो वयमविद्यया विद्यमानमर्थाद् वितथं भेदं नांगीकुर्मः । अविद्योत्थं प्रातिभासिकं भेदमवलब्य तथा प्रतीतिरिति यावत् ।

ननु भेदो न पारमार्थिकः किंत्वभेद एव तथेत्यत्र किं विनिगमकमिति चेत् । घटाद्भिन्नः पटः पटाद्भिन्नो घटो वेति घटपटस्वरूपमनुल्लिख्य न तदुभय-भेदोल्लेखः संभवति । तदुभयभेदमनुल्लिख्यापि घट इतिं पट इतिं च तदुभय-स्वरूपोल्लेखः संभवतीत्यभेदग्रह उपजीव्यो भेदग्रहस्येत्यभेदः पारमार्थिको न भेद स्तथेतिगृहाण ।

नन्वभेदस्य भेदाभावस्वरूपत्वेन भेदोपस्थितिपूर्वक एवाभेदग्रह इति भेदाभेदग्रहयोरुपजीव्योपजीवकभाववैपरीत्येन भेदस्यैव पारमार्थिकत्वं नाभेद-स्येति चेन्न । अभेदो हि न भेदाभावस्वरूपः किं तु ' अभेदस्तादात्म्यम् ' इत्युक्तेर्भावरूपः स । तच्च तादात्म्यं भेदासहिष्णु । अर्थाद्भेदविरोधीति नोप-जीव्योपजीवकयोर्वैपरीत्यमिति ज्ञातव्यम् ।

अथ ' भेदः ' इत्येतावन्मात्रमेव पटस्वरूपम् । न घटप्रतियोगिकत्व-विशिष्टो भेद इति । तच्च पटस्वरूपं घटादिति भेदस्वरूपाप्रविष्टेनोपलक्षण-भूतेनैव घटेन निरूप्यते । अतो न घटाद्भिन्नः पट इति प्रत्यक्षमभेदावगाहीति चेन्न । निष्प्रतियोगिको हि भेदो न जात्वपि प्रमाणगोचरः । नित्यं प्रति-

योगिघटित एव भेदे प्रमाणप्रसरस्य सर्वानुभवासिद्धत्वात् । तस्मान्न स्वरूपमेव भेद इति वचः समंजसम् ।

एवमन्योन्याभावो भेद इति द्वितीयविकल्पेऽपि यत्प्रतियोगिको भेद एष्टव्यस्तं प्रतियोगिनं तदधिकरणं च स स्वात्मन्यंतर्भावयेदेव । निष्प्रतियोगिकस्याप्रत्यक्षाधिकरणस्य च भेदस्यान्योन्याभावात्मकस्य सकलप्रमाणागोचरत्वादित्याद्युक्तिभिरित्यर्थः ।

अथ पटनिष्ठात्यताभावप्रतियोगिधर्मवत्वं घटस्य घटनिष्ठात्यंताभावप्रतियोगिधर्मवत्वं च पटस्येति यद् घटपटयोर्वैधर्म्यं तदेव भेदः । तं विषयीकुर्वाणं यत्प्रत्यक्षादि प्रमाणं सर्वप्रसिद्धं तदद्वैतश्रुतिबाधकं स्यादिति तृतीयविकल्पोऽपि न युक्तिसहः । यतस्तादृशधर्मस्तु घटत्वपटत्वादिरेव । तस्मिन् भेदकधर्माभावेन तयोरभेदसिद्धौ घटपटयोरप्यभेद एव सिद्धो भवति ।

किं च घटत्वपटत्वयोः स्वतो व्यावृत्तत्वेऽङ्गीक्रियमाणे घटपटादय एव स्वतो व्यावृत्ताः स्वीकर्तव्याः । किं मुधा तद्वृत्तिवैधर्म्यस्य स्वतो व्यावृत्तत्वकल्पनया । यदि तु घटत्वपटत्वादिकं स्ववृत्तिघटत्वत्वपटत्वत्वादिरूपवैधर्म्यभेदेन भिन्नम् । तर्हि तदपि वैधर्म्यं स्वगतवैधर्म्यान्तरेण भिन्नम् । तदप्येवमित्यनवस्थादोषापत्तिः प्राप्नोति ।

ननु स्वरूपवैधर्म्यान्योन्याभावरूपभेदत्रयासंभवेऽप्यन्यद्वा किमपीति तुरीयविकल्पोऽवशिष्यत एव । तद्गोचरस्य 'घटात्पटः पृथक् पटाच्च घटः पृथक्' इति सार्वजनीनानुभवेन पृथक्त्वस्यान्यस्य विद्यमानत्वान्न भवदिष्टमद्वैतं सिध्यतीति चेत् । किमिदं पृथक्त्वं स्वस्माद्भिन्ने स्वाश्रये तिष्ठत्यभिन्नेवा । आद्ये स्वाश्रयविशेषणीभूतो यः स्वप्रतियोगिको भेदः स स्वरूपवैधर्म्यान्योन्याभावान्यतमश्चेत्प्रागुक्तस्वरूपादिनिरासेनैव तन्निरासो बोध्यः ।

किं च स्वाश्रयविशेषणीभूतो भेदः स्वस्माद्भिन्नघटादौ वर्तत इति स्पष्टमेव । सत्येवं विशेषणीभूतभेदप्रतियोगिको घटाद्यनुयोगी यो भेदः सोऽपि तथेत्यनवस्थादोषान्नैव निर्मोकः । द्वितीये तु स्वाभिन्ने घटादावाश्रये स्वयं तिष्ठतीत्यात्माश्रयो दोषः । अपि च पृथक्त्वस्य गुणादावभावात् तदभेदे

'तदभिन्नाभिन्नस्य तदभिन्नत्वम्' इति नियमान्न तादृशं पृथक्त्वं श्रुत्युपादिष्टाद्वैतस्य प्रतिकूलमिति ।

किं च पृथक्त्वस्यावधिनिरूप्यत्वाद् भेदस्य च प्रतियोगिनिरूप्यत्वादितरनिरूप्यत्वसाम्येन पृथक्त्वेऽपि भेदपक्षोक्तदोषापत्तिरवश्यमनुसंधेयेतिभावः ।

ननु वाक्यार्थज्ञानं प्रति वाक्यघटकतत्तत्पदार्थज्ञानं हेतुः । पदार्थज्ञानं प्रति च ज्ञानद्वारा तत्तत्पदं कारणम् । तदुक्तम्—

**पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः ।**
**शाब्दबोधः फलम् ॥ इति ।**

इत्थमनुभवसिद्धाव्यभिचारिकार्यकारणभावनियमस्य विद्यमानत्वात् 'एकमेवाद्वितीयम्' 'नेह नानास्ति किं च न' इत्यादिश्रुतयो वर्णपदविभक्तितदर्थादिभेदानुपजीव्यैवाद्वैतमर्थं प्रतिपादयंतीति वाच्यम् । तत्रोपजीव्यते कार्येणाश्रीयते यत् तदुपजीव्य नाम कारणमित्यर्थः । उपजीवति कारणाश्रित भवति यत् तदुपजीवक कार्यमिति यावत् । तस्माद् भेदबुद्धय उपजीव्या अद्वैतार्थस्त्पजीवकः । उपजीवकोह्युपजीव्याद्दुर्बल इति सुप्रसिद्धमेव । सत्येवं स्वोपजीव्याभिर्भेदबुद्धिभि. कथं नासामद्वैतबोधकश्रुतीना बाधो न क्रियतामिति चेन्नैवम् ।

न हि वय भेदस्य शशशृङ्गवदसत्व ब्रूमः । किं तु तस्य पारमार्थिकत्व प्रतिषेधामः । तदीयमविद्यया विद्यमानत्वंविष्यत एवास्माभि । तदेव च कार्यकारणभावोपजीव्योपजीवकत्वयोर्वा प्रयोजकम् । अर्थान्नानात्वमात्रमुपजीव्यं न तु पारमार्थिकं नानात्वम् । येनोपजीव्यविरोध आशक्येत । आविद्यकभेदेन रज्जूरगवद् व्यवहारोपपत्तौ सत्यां तस्य पारमार्थिकत्वकथनं निष्फलमयुक्तं चेति भावः ।

'नेह नानास्ति किं च न' 'मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति' 'एकमेवाद्वितीयम्' 'सर्वं खल्विदं ब्रह्म' 'ऐतदात्म्यमिदं सर्वं तत्सत्यम्' इत्यादि श्रुतिभिर्द्वैतनिषेधपूर्वकाद्वैतप्रतिपादिनीभिः पारमार्थिक-

मेवाद्वैतमिति ज्ञाप्यते । न च पारमार्थिकमतिरपारमार्थिकमत्या बाधितुं शक्या । न हि शुक्तिरजतधिया पारमार्थिकशुक्तिमतेर्बाधो दृष्टचरः ।

नन्विय भवदिष्टाद्वैते बुद्धिः पारमार्थिकी चेत्तयैव बुध्या द्वैतापत्तिः । अथापरमार्थिकी यदि तदा तस्या बाध्यत्वान्न तयाद्वैत सिध्यति । न हि शुक्तिरजतबुध्या पारमार्थिकरजतसिद्धिः संभवतीति चेन्न । 'द्वितीयाद्वै भयं भवति' 'एकमेवाद्वितीय ब्रह्म' 'सर्वं खल्विदं ब्रह्म' 'नेह नानास्ति किंचन' एवमादिश्रुतिजन्याया अद्वैतबुद्धेराविद्यकत्वेऽपि तस्या विषयस्तावत्परमार्थसदद्वितीयं ब्रह्मैव । विषयबाधो हि बुद्धेर्बाध्यत्वप्रयोजक. । स तु प्रकृते नास्त्येव। बाधस्य विषयापहाररूपत्वात् । विषयस्य चाद्वैतस्य प्रत्यक्षादिभिरपहर्तुमशक्यत्वात् । अतस्तस्य सर्वथाऽबाध्यत्वेन तद्विषयाया बुद्धेरपारमार्थिकत्वेऽपि न स्वेतरवद्बाध्यत्वम् । अद्वैत ब्रह्मतादात्म्यापत्तिरेव सेति रहस्यम् ॥ इति सर्वं शिवम् ॥ श्रीः ॥

---

# अद्वैते प्रमाणाक्षेपविमर्शः (५)

**अन्यथा पुनःद्वैते प्रमाणाक्षेप उच्यते ।**
**तयोरैक्यं दृढीकर्तु स्थूणानिखननं यथा ॥ १ ॥**

अथाद्वैतिभिर्यदद्वैतापरपर्यायं जीवेश्वरयोर्विशुद्धमैक्यं कृतकेतरवचनेजातस्य परमं प्रमेयमित्युच्यते । तत्र नोपलभ्यते तादृश किमपि प्रमाणम् । न च श्रुतिमस्तकमेव तत्र प्रमाणमिति वाच्यम् । तस्य शुद्धबुद्धोदासीनतयोपेक्षणीयभूतब्रह्माभिधायकत्वादपुरुषार्थोपदेशित्वेनाप्रामाण्यप्रसंगः । उक्तं हि मुनिना "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते" इति ।

किं च यथा लौकिकवाक्यानि प्रत्यक्षादिप्रमाणांतरावगतार्थबोधकानि न स्वतःप्रामाण्यवंति । तथा—श्रुतिमस्तकस्यापि भूतार्थानुवादकत्वेन निरपेक्ष प्रामाण्य न सिध्येत् । अथ प्रत्यक्षादिप्रमाणगोचरस्य परिनिष्ठितवस्तुनोऽनधिमतार्थबोधनरूपोपदेशासंभवात् । तत्कथनेऽपि हेयोपादेयरहिते पुरुषार्थस्याभावात् । तादृशे वस्तुनि श्रुतिमस्तकस्य प्रमाणत्वासंभवेन जीवेश्वरयोरैक्यात्मन्यद्वैते न किमपि प्रमाणमितिचेदत्रोच्यते ।

" ऐतदात्म्यमिदं सर्वं । तत्सत्यम् । स आत्मातत्त्वमसि श्वेतकेतो । " छां. ६ ॥

" अभयं वै जनक प्राप्तोऽसि । तदात्मानमेवावेत् । अहं ब्रह्मास्मीति । " बृ० ॥

" तत्र को मोहः कः शोक एकत्वमनुपश्यत. "

" अयमात्मा ब्रह्म " एवमादिभिर्वचनैरुद्दालकयाज्ञवल्क्यप्रभृतयो महर्षयः श्वेतकेतुजनकादीन् शिष्यान् यतः परमेश्वरमात्मतया ग्राहयंति । ततस्तदेव श्रुतिकेतरवचनजातमद्वैतात्मनि प्रमाणमिति समुपदिशामः ।

यत्तु पुंवाक्यदृष्टांतेन भूतार्थावगाहित्वात् प्रत्यक्षादिसापेक्षत्वेनाप्रामाण्यापत्तिं कल्पयित्वा प्रत्यगभिन्ने ब्रह्मणि न किमपि प्रमाणमिति वदसि । तत्र त्वयेदं वक्तव्यम् । किं पुंवाक्यानां सापेक्षत्वं भूतार्थावगाहित्वादुत पौरुषेयत्वादिति । आद्ये प्रत्यक्षादीनामपि प्रमाणानां भूतार्थविषयत्वेन सापेक्षतयाऽप्रामाण्यप्रसंगः । द्वितीयेत्वपौरुषेयाणां वेदांतवचसां भूतार्थानामपि प्रत्यक्षादीनामिव नाप्रामाण्यम् । तथा च यद्यपि ब्रह्मात्मभावः ( जीवेश्वरैक्यं ) परिनिष्ठितस्वरूपः सिद्धवस्तु । तथापि तत्त्वमसीत्यादिशास्त्रमंतरेण तस्यानवगम्यमानत्वात् प्रत्यक्षादिविषयत्वाभावेनचानधिगतार्थबोधकानां वेदांतवचसां प्रत्यगभिन्ने ब्रह्मणि निरपेक्षं प्रामाण्यमकामेनाप्यवश्यमास्थेयम् ।

नापि हेयोपादेयराहित्येनापुरुषार्थत्वम् । हेयोपादेयशून्यब्रह्मात्मभावावगमादेव सर्वदुःखनिवृत्तिपूर्वकनिःसीमाऽऽनंदप्राप्त्या पुरुषार्थतासिद्धेः ।

द्विविधं हि चोपादेयं भवति । किंचिदप्राप्तम् । किंचित् प्राप्तमपि भ्रमवशाद-प्राप्तमिव प्राप्तम् । आद्यं ग्रामादि गमनादिक्रियया प्राप्यते । द्वितीयं च स्वग्रीवानद्धमलंकारादि पुरतो धृतदर्पणादिना लभ्यते । एवं हेयमपि द्विधा बोध्यम् । किंचिदहीनम् । यथा व्यावहारिकसर्पादि । किंचित्पुनर्हीनम् । यथा चरणाभरणे नूपुरादौ समारोपितसर्पादि । एवं ब्रह्मात्मभावस्याऽऽद्यहेयोपादेय-राहित्येऽप्यविद्यासमारोपितशोकादेस्तत्त्वमस्यादिमहावाक्यजनिततत्त्वज्ञानादवगति पर्यंतानिवृत्तौसत्या प्राप्तमप्याऽऽनंदरूपमप्राप्तमिव प्राप्तं भवति । त्यक्तमेव शोकादिकमत्यक्तमिव त्यक्तं भवतीति ब्रह्मात्मभावस्य परिनिष्ठित-स्वरूपस्यापि पुरुषार्थत्वसिद्धिरवगंतव्या ।

ननु वेदांता ना पौरुषेयाः । भूतार्थप्रतिपादकत्वात् । नद्यास्तीरे पंच फलानि संतीत्यादिभूतार्थप्रतिपादकवाक्यवत् । इत्यनेनापौरुषेयत्वस्यासिध्या-वेदाताः पौरुषेयाः । वाक्यत्वात् । भारतादिवत् । इत्यनुमानेन पौरुषेयत्वसिद्धौ सत्यां निरर्थकवाक्यवन्न तेषां कस्मिंश्चिदर्थे तात्पर्यम् । किंतु स्वाध्यायविधिना गृहीतत्वाज्जप्तानि तानि 'हुंफट्' इत्यादिशब्दवदघमर्षणानि भवितुमर्हंतीति जपोपयोगीन्येव तानि । नार्थविशेषे तात्पर्यवंति वेदातवचनानीति चेन्न । दृष्टांतवैषम्यात् । तथाहि—कस्याप्यर्थप्रतीत्यात्मकदृष्टप्रयोजनस्याभावात् 'हुंफट्' इत्यादिवैदिकशब्दानामदृष्टफलकं जपोपयोगित्वमात्रं प्रत्नैर्महात्मभिरभिहितं तद्युक्तमेव । 'तत्त्वमसि' 'अहंब्रह्मास्मी'त्यादिवेदांतवचोभ्यस्तु सुव्यक्तमर्थ-प्रतीतौ भवंत्यां दृष्टांतवैषम्यादेव न हुंफडादिवज्जपोपयोगित्वं तेषां वक्तुं पार्यते वागर्थविदेति भावः ।

अत्राह यद्यप्यापाततस्तत्त्वमसीत्यादिवेदांतवाक्येभ्यो जीवेश्वरयोरैक्यं प्रतीयते । तथापि तस्यैक्यस्य यजेत, दद्याज्जुहुया दित्यादिविधिवाक्यैराक्षिप्य-माणकर्तृविशेषप्रशंसयैवाभिन्नोऽयं वेदविहितयज्ञादिकर्मकर्तेतिकर्तृस्तुतौ तात्प-र्यादर्थवादाधिकरणन्यायेनाक्रियार्थानां सर्वेषामेव वेदवचसा कर्तृदेवतादिप्रति-पादकपरत्वेन विध्यैक्यवाक्यत्वमंगीकार्यम् । तदुक्तम् 'विधिनात्वेकवाक्यत्वा-त्स्तुत्यर्थेन विधीनां स्युरिति' । न चाक्रियार्थत्वेऽपि वेदांताना ब्रह्मात्मक-

विधिपरत्वस्वींकारेण विधित्वमेव । न च विधिशेषत्वम् । न वा सूत्रविरोध इति वाच्यम् । यत अनागतोत्पाद्यांशत्रयविशिष्टभावनाऽपरपर्यायक्रियागोचरा एव सर्वे विधयः । न परिनिष्ठितवस्तुस्वरूपगोचरास्तद्विषयत्वस्य सर्वथाऽसंभवादेव । तस्माद् 'वायुर्वै'इत्यादिवत् कर्तृदेवतादिविधेयार्थप्रशंसाद्वारा विधिशेषत्वमेव वेदांतानामितिचेदत्र ब्रूम. ।

कर्मकांडांतर्गतो विधिसन्निधिपठितश्च 'वायुर्वैक्षेपिष्ठा देवता'। 'आदित्यो यूपः'। 'यजमानः प्रस्तर'। इत्यादिवाक्यसमूहो विधेयार्थ प्रशंसन् शेषत्वबोधकप्रकरणस्थानाद्यतमप्रमाणेन विधिशेषतां भजतिचेद्-- भजतु नाम । युक्तमेव तत् । किंतु ज्ञानकांडस्थः कर्मविध्यसंनिहितश्च "सदेवसोम्येदमग्र आसीदेकमेवाद्वितीयम्"। "आत्मा वा इदमेवाग्र आसीत्"। "तदेतद्ब्रह्मापूर्वमनपरमबाह्यम्"। "अयमात्मा ब्रह्म सर्वानुभूः"। "ब्रह्मैवेदममृत पुरस्तात्"। "तत्त्वमसि"। "अहं ब्रह्मास्मीत्यादि" वाक्यगण उपक्रमोपसंहारादिभिस्तात्पर्यनिर्णायकषड्विधलिंगैर्निश्चितं जीवब्रह्मैक्य बोधयन् विधिशेषत्वज्ञापकश्रुतिलिंगवाक्यप्रकरणादेः प्रमाणस्याभावात् प्रकरणांतरगतवाक्यानां तदन्यप्रकरणस्थविधिशेषत्वासंभवाच्च न जात्वपि विधिशेषत्वं गमयितुं शक्यः ।

किंच 'यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्केन कं विजानीयात्' इति क्रियाकारकफलनिराकरणश्रुतेः श्रुतहान्यश्रुतकल्पनादोषप्रसक्त्या विधिविशेषत्वरूपार्थांतरकल्पनात्यंतमयुक्तेत्यवगन्तव्यं विज्ञैः ।

एवं वेदांतानां यजेतेत्यादि विधिविहितकर्मापेक्षित तच्छेषकर्तृदेवतादि स्तुत्या तत्प्रतिपादनद्वारा कार्यार्थत्वस्वीकारेणैवापौरुषेयत्वमुक्तं भवता । तत्रेदं विचार्यम् । किं तत्कार्यं यत्पुंसाऽधिगंतुमशक्यम् । अपूर्वतादिनिचेत् प्रत्यक्षाद्यनवगते तस्मिन् शक्तिग्रहासंभवेन सहकारिकारणाभावाल्लिङादिना विधिप्रत्ययानां तद्बोधकत्वप्रसंगः स्यात् । प्रसिद्धार्थकत्वभंगकान्तादिपदसान्निध्याद्वा नर्थक्रियाविलक्षणापूर्वकार्ये शक्तिग्रहस्य सुकरत्वात्-

द्बोधकत्वं संभवत्येवेतिचेच्चैत्यवंदनादिवाक्येष्वपि प्रसिद्धपदसान्निध्यादिनाऽपूर्व-कार्यत्वप्रसक्त्याऽपौरुषेयत्वापत्तिर्दुर्वारा । सुस्पष्टेन पौरुषेयत्वेन तेषामपौरुषेय-त्वस्य प्रतिषेध इति चेद् वाक्यत्वादिहेतुना पौरुषेयत्वानुमानाद् वेदांताना-मप्यपूर्वार्थत्वासिध्येष्टमपौरुषेयत्वं न सिध्येत् । वाक्यत्वहेतुक पौरुषेयत्वानुमानं स्मर्यमाणकर्तृकत्वेनोपाधिना सोपाधिकमिति चेद् वेदांताना कार्यार्थत्वपक्षे पौरुषेयत्वानुमानं स्मर्यमाणकर्तृकत्वेनोपाधिना यथा निरस्यते । तथा तेषा सिद्धार्थत्वपक्षेऽपि तेनैवोपाधिना तन्निरसनं समानमिति कार्यार्थत्वकल्पन निरर्थकम् । तस्माद् वेदातानामपौरुषेयत्व संपादनार्थं श्रुतहान्यश्रुतकल्पनादो-षापादकं कार्यार्थत्वं नैवाभ्युपेयमितिरहस्यम् ।

नन्वेवमपि 'मनो ब्रह्मेत्युपासीत' । 'अन्न ब्रह्मेत्युपास्व' । 'आदित्यो ब्रह्मेत्यादेशः' । 'वायुर्वाव संवर्गः' । 'प्राणो वाव संवर्गः' । 'योषा वाव गौतमाग्निः' । एवमादिवाक्यसंघो यथा ब्रह्माभिन्ने मन आदिषु कर्मसमृध्यर्थं ब्रह्मदृष्टिं बोधयति । यथा वा शालग्रामादिशिलाया विष्ण्वादिबुद्ध्या तत्समर्चन शास्त्रमुपदिशतीष्टफलाप्तये । तथा ब्रह्मभिन्ने जीवे कर्मसाद्गुण्याय परमात्म-दृष्टिविधायकोऽस्तु 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादिवाक्यगणः । तथा-चारोपितब्रह्मभावो हि जीवो ब्रह्मरूपतयोपास्य इति जीवोपास्तिपरा वेदाता न जीवब्रह्मैक्ये प्रमाणमितिचेन्नेदं साधु । तथाहि—मनो ब्रह्मेत्युपासीतेत्याद्युदा-हृतवाक्यसमूहेऽब्रह्मणि मन आदौ ब्रह्मविभावनाय यथा विधायको लिङादि: श्रूयते । तथा तत्त्वमसीत्यादिमहावाक्यचये लिङादिरूपविधिः श्रवणं नोप-लभ्यते । ततो न जीवे ब्रह्मदृष्टिविधायकस्तद्वाक्यगणः । अर्थात्तजीवोपास्ति-परा वेदाता अपि तु जीवब्रह्मैक्यपरा इति तत्र ते प्रमाणमित्यर्थः ।

नन्वेवमपि यथा 'प्रतितिष्ठंति ह वा य एता रात्रीरुपयति' इत्ये-तस्मिन् रात्रिशब्देनाभिधीयमानाऽऽयुर्जोतिरित्यादिवाक्यविहितसोमयागविशेष-बोधकश्रुतिवाक्ये 'वर्तमाने लट्' इति सूत्रानुसारिप्रतितिष्ठंतीति वर्तमानार्थक-लडन्तपदप्रयोगात् सिद्धरूपैव प्रतिष्ठा प्रतीयते । न साध्यरूपा। अथाप्यश्रुत-

स्वर्गादेः फलत्वकल्पनापेक्षया श्रुतायाः प्रतिष्ठाया एव फलत्वकल्पनौचित्याद् यत्तदोर्व्यत्यासेन सन्नंतार्थांतर्भावेन च ये प्रतितिष्ठासंति त एता रात्रीरुपेयुः। इति वाक्ययोजनया रात्रिसत्रवाक्ये विधिः प्रकल्पितः। तद्वदत्रापि 'ब्रह्म वेद ब्रह्मैव भवती'ति मुक्तिश्रवणाद् ब्रह्मबुभूषुर्ब्रह्मवेदनं कुर्यादिति रात्रिसत्र-न्यायेन विधेः प्रकल्पनं समुचितम्। किं स्वरूपं तद्ब्रह्म। यस्य ज्ञानं कार्यमित्याकांक्षायां 'सर्वज्ञं सर्वगतं सर्वशक्ति नित्यतृप्त नित्यशुद्धबुद्धमुक्त-स्वभावमेकमेवाद्वितीयं विज्ञानमानंदं भूतयोनि ब्रह्मेत्यर्थकाः सर्वे वेदांता ब्रह्म-स्वरूपोपदेश उपयुक्ताः। तादृशब्रह्मोपासनाच्च शास्त्रदृष्टोऽदृष्टो मोक्षो भविष्यति। कर्तव्य विध्यननुप्रवेशे तु—

**प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।**
**पुंसां येनोपदिश्येत तच्छास्त्रमिति गीयते॥**

इति स्मृतेर्वेदांताना शास्त्रत्वमेव न स्यात्। अपिच श्रवणोत्तरं युक्त्यनु-संधानात्मकमननस्य विजातीयप्रत्ययानंतरितसजातीयप्रत्ययप्रवाहात्मकनिदि-ध्यासनस्य च विधानात् तयोश्च द्वयोर्मानसक्रियारूपत्वादुपासनापरत्वमेव वेदांतानां स्वीकर्तव्यं नैक्यपरत्वमिति चेन्न। मोक्षस्यानित्यतादोषप्रसक्तेः।

तथाहि-'यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते'। 'क्षीणे पुण्ये मर्त्यलोकं विशंतीति श्रुतिस्मृत्योर्यत्क्रियाजन्यं तत्त-दनित्यमिति व्याप्तेश्च मोक्षस्योपासनारूपक्रियाफलत्व उच्यमाने क्रियाजन्यत्वेन तस्य स्वर्गादिवत्सातिशयत्वमनित्यत्वं च स्यात्। तत्त्वनिष्टमेव तवापि। धर्मादिषु हि चतुर्विधेषु पुरुषार्थेषु मध्ये मोक्षस्यैव परमपुरुषार्थत्व शास्त्रप्रसिद्धं लोकप्रसिद्ध-मपि। परमत्वं चास्य निरतिशयनित्यत्वाभ्याम्। ते च 'न स पुनरावर्तते ब्रह्म-विद्ब्रह्मैव भवति। अभयं वै जनकप्राप्तोसी'त्यादिश्रुतिप्रसिद्ध एव तस्मान्न मोक्षस्य जात्वपि क्रियाविध्यनुप्रवेशेनोपासनाख्य क्रियाफलत्वं सभावयितुं शक्यम। नच ज्ञानस्यापि मानसक्रियात्वाद्भवन्मतेऽपि मोक्षस्यानित्यत्वं कुतो न स्यादिति वाच्यम्। ज्ञानस्य मानसत्वेऽपि यथाभूतवस्तुविषयप्रमाणगम्यत्वात्

कर्तुमकर्तुमन्यथा वा कर्तुमशक्यत्वेन केवलं वस्तुतंत्रमेव तत् । न चोदनातंत्रं, न वा पुरुषतंत्रम् । ततो नास्मन्मत उक्तदोषः एतावता ज्ञानविषये लिङादयः श्रूयमाणा अप्यनियोज्यविषयत्वात्तत्र कुंठीभवंतो विधिस्वरूपत्वात्स्वाभाविकप्रवृत्ति- विषयविमुखीकरणार्थास्त इत्यनंगतव्यम् । तथा प्रत्यगभिन्नब्रह्मात्मावगतौ सत्यां सर्वकर्तव्यताहानेः कृतकृत्यतायाश्चास्माकमलंकारत्वान्मननादिसहकृत- श्रवणेन ब्रह्मात्मसाक्षात्कारे सति कर्तृत्वभोक्तृत्वाद्यभिमाननिवृत्त्या तन्मूलजनि- मृतिप्रवाहरूपसंसारोच्छित्तेः श्रुतिस्मृत्यनुभवसिद्धत्वान्निरतिशयाहितशासनाच्च वेदांताना मुख्यशास्त्रत्वमिति न कोऽपि दोष इति भावः ।

ननु मास्त्विदं तत्त्वमस्यादिवाक्यजातमुपासनापर्यवसायि । अथापि नेदमैक्यबोधकम् । किं तु ' तदा विद्वान् पुण्यपापे विधूय निरंजनः परमं साम्यमुपैति ' इति मुंडकोपनिषच्छ्रुतेः जीवस्य परमात्मना साकं सादृश्यप्रति- पादकं तदिति चेत् । किं चेतनत्वेन सादृश्यं वदतीदं वाक्यजातम् । आहोस्वित् सार्वज्ञसार्वात्म्यसर्वशक्तित्वप्रभृतीभिर्गुणैः साम्यं प्रतिपादयति । आद्ये चेतनत्वेन साम्यं सुप्रसिद्धमेवेति तदुपदेशो निष्फलः । द्वितीये तु जीवस्य परमात्मस्वरूपापत्त्याऽभेदो नास्तीनि स्वसिद्धांतविरोधः ।

ननु यथा परमेश्वरस्य ज्ञानाऽऽनंदादयो गुणा नित्याः । तथा जीव- स्यापि ते नित्या एव । किंतु मलिनसत्वप्रधानेन तदविद्योपाधिनाऽऽवृतत्वात ते तथा न प्रतीयन इत्येव । अथाप्युपमानभूतानां परमात्मगुणानामुपमेयाना जीवगुणानां च तौल्याद् गुणानां नित्यत्वमात्रेण जीवेश्वरयोः साम्यं ब्रवीति तत्त्वमस्यादिवाक्यम् । अतो नोक्तदोष इति चेत् तर्हि तस्य परमात्मत्वमेव तद्वाक्यं बोधयतु । तादृशस्य जीवस्य परेशत्वानंगीकारः कस्मात् यतः परेशत्वं न प्रतिभासते । तत एव तस्यानंगीकार इति चेत् ज्ञानाऽऽनंदाऽऽनंदस्वरूपस्य परेशत्वस्य प्रतिभासशंका तस्याविद्याऽऽवृतत्वस्वीकारात्त्वया निरस्तैव ।

ननु मास्तु तर्हि जीवस्य परेशेन साम्यावेदकं तत्त्वमस्यादिवाक्यम् । अथ जगत्कारणस्य परेशस्य चेतनत्वेन जीवसाम्यप्रतिपादकमेवास्तां तद्वा-

क्यम्। तथा निर्धारिते चेतनात्परेशाज्जगत उत्पद्यमानत्वेन सांख्यकाणादादिभिः कल्पितस्य जडस्यप्रधानपरमाण्वादेः कारणत्वस्य सम्यङ् निरासोऽपि सिध्येदितिचेन्नैतत्समंजसम्। तथा सत्युक्तवाक्ये तत् (जगत्कारणं) 'त्वं' (त्वत्सदृशं) अस्तीतिप्रयोग. स्यात्। 'तत्त्वमसीति न स्यात्। असीत्येवाऽऽम्नायपाठो वर्तते। न च जगद्योनेर्जडत्वशंकायां तद्व्यावर्तनाय जगद्योनेश्चेतनत्वेन जीवसाम्यमवश्य तत्त्वमसीत्यनेन प्रतिपादनीयमिति वाच्यम्। 'तदैक्षत बहु स्यां प्रजायेय' इत्येतस्मिन्हि वाक्ये जगत्कारणस्य चेतनत्वश्रवणात् तत्त्वमसीत्यनेन चेतनाभेदबोधनाच्च तेनैव तस्याः शंकाया निवृत्तेः पुनः प्रधानादेर्निरासार्थं जगत्कारणस्य परेशस्य चेतनत्वेन जीवसाम्यं पिष्टपेषणवन्नैव वक्तव्यमित्यर्थः।

अथोक्तरीत्या साम्यप्रतिपादनासंभवेऽपि तत्त्वमस्यादिवाक्यं न जीवेश्वरयोरैक्यबोधकम्। यतो नाहमीश्वरः किं तु तद्भिन्नो जीव एवाहमिति ज्येष्ठप्रमाणप्रत्यक्षविरोधात्। तथाऽहमनीश्वरो जगन्नियतृत्वाभावाद्। घटादिवदित्यन्वय्यनुमानविरोधात्। नाहमीश्वरः किंचिज्ज्ञत्वाद् दुःखित्वाद् व्यतिरेके ईश्वरवदिति व्यतिरेक्यनुमानविरोधात्। यद्यहमीश्वर स्यां तर्हि जगज्जन्मादौ शक्तः स्याम्। यतो न शक्तः। तस्मान्नेश्वरः। इत्यर्थापत्तिप्रमाणविरोधाच्च। अतः स्वाध्यायाध्ययनविधिनाश्रितत्वाज्जपोपयोगित्वमेवोक्तवाक्यसार्थस्याभ्युपेयमितिचेदत्रोच्यते। ..

इंद्रियेण भेदप्रमा यदि स्यात् तदाऽभेदवादिश्रुतिवाक्यस्य बाधो वक्तुं शक्येत। सैव न संभवति। भेदेन साकमिंद्रियस्यासन्निकर्षात्। 'सत्संप्रयोगे पुरुषस्येंद्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' इति प्रत्यक्षप्रमालक्षणात्। 'इंद्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारि प्रत्यक्षम्' इति च। तत्र कुतो विरोधः प्रत्यक्षस्य। तथा हि--इंद्रियं भेदेनप्रमाणं तदसंबंधत्वादिति।

तन्नत्र हेत्वसिद्धिरिति चेत् किं भेदेन सामिंद्रियस्य संयोगः संबंधः, उत समवायः किंवा तादात्म्यम् आहोस्वित्तदन्यः कश्चन। न तावत्संयोगः

इंद्रियस्य द्रव्यत्वेऽपि भेदस्य तदन्यत्वात् । द्रव्ययोः संयोग इति तव सिद्धांतः । नापि समवायः । असंभवात् । तदसिद्धेश्च ।

ननु रूपी घट इत्यादिप्रत्यक्षस्य संयोगानवगाहित्वात् परिशेषात्समवायः सिध्यतीति चेन्न । गुणगुणिनोरश्वमहिषवद्भिन्नत्वे तत्संबंधस्य च तथात्वे सामानाधिकरण्यप्रत्यय एवानुपपन्नः ।

किंच समवायिभ्यां संबद्धः समवायो विशिष्टबुद्धिप्रयोजक, उतासंबद्धः । संबद्धश्चेत्केन संबंधेन संबद्धस्तत्राप्येवं प्रश्ने तस्य तस्यान्योन्यसंबंधकल्पनायामनवस्थापातः ।

अथ समवायिभिर्नित्यसंबद्ध एव समवाय इत्युच्यते । अतो नोक्तदोष इति चेत् संयोगोऽपि तर्हि संयोगिभिर्नित्यसंबद्ध इति तत्रापि संबंधांतरापेक्षा न स्यात् । संयोगस्यार्थांतरत्वादस्त्यपेक्षेतिचेत्समवायस्याप्यर्थांतरत्वादपेक्षा तुल्यैव । संयोगस्य गुणत्वादस्त्यपेक्षेतिचेन्न । अपेक्षाकारणस्य तुल्यत्वेन तत्र गुणत्वपरिभाषाया अप्रयोजकत्वमेव । नाद्यः । अदृष्टत्वात् । नह्यन्यत्र कुत्रचिद्विद्यमानस्य घटादेरिदं भूतलं घटवदिति विशिष्टबुद्धिनियामकत्वं दृष्टचरम् । असंबद्धस्याप्याग्रहेण तथात्वांगीकारेऽतिप्रसंग एव ।

किंच स कल्पितः समवायोऽनेक एको वा । आद्येऽपसिद्धांतो गौरवं च । द्वितीये तु रूपस्पर्शादेश्च समवायस्यैकत्वात् स्पर्शसमवायवति वायौ रूपसमवायस्यापि सत्वेन पृथिव्यादिष्विव रूपवत्ताप्रतीतिप्रसंगः । रूपसमवायसत्वेऽपि रूपाभावान्न रूपवत्ताप्रतीतिर्वायाविति चेन्न । तद्वृत्तिप्रयोजकसंबंधसत्वे तदभावव्यवहारो व्याहत एव । किंचावयवावयविनोर्गुणगुणिनोः क्रियाक्रियावतोर्जातिव्यक्त्योर्नित्यद्रव्यविशेषयोश्च यः संबंधः स समवाय इति त्वत्तत्रोक्तेः । तेभ्योऽतिरिक्तस्यान्योन्याभावरूपस्य भेदस्येंद्रियेण साकं समवायः सुतरामसंभवी । नापि तादात्म्यम् । भावाभावयोर्हि तादात्म्यं सर्वथाऽदृष्टमिति तदभावः प्रसिद्धः । तेभ्यः संयोगसमवायादिभ्योऽन्यः सन्निकर्षोऽप्रसिद्ध इति न तत्प्राप्तिः । अतः सन्निकर्षस्यैवासत्वादिंद्रियस्य भेदेन साकं संबंधा-

भानान्न संबंधशून्येनेंद्रियेण भेदप्रमा भवितुमर्हतीति खपुष्पायमाणं भेदप्रत्यक्षं न जीवेश्वरयोरद्वैतविरोधीत्यवधेयम् ।

ननु भेदेंद्रिययोः संयोगादिसन्निकर्षासंभवेन भेदप्रमाया अभावेऽपि सर्वथा नाभावः । भेदस्य ह्यन्योन्याभावरूपतयाऽभावप्रत्यक्षे च विशेषणतासंबंधस्य हेतुत्वाद् विशेषणतासन्निकर्षेण भेदप्रमा स्यादेवेति चेन्न । केवलाया विशेषणताया अभावप्रत्यक्षे हेतुत्वांगीकारे भित्त्यादिव्यवहितभूतलनिष्ठघटाभावेऽपि विशेषणतायाः सत्वेन तादृशघटाभावस्यापि प्रत्यक्षत्वप्रसंगः । तद्वारणायेंद्रियसंबद्धभेदाश्रयवृत्तिविशेषणतायास्तद्धेतुत्वं वाच्यम् । प्रकृतप्रत्यक्षे त्वीश्वरप्रतियोगिकभेदाश्रयस्यात्मन इंद्रियसंबद्धत्वं नास्तीत्यत इंद्रियसंबद्धभेदाश्रयवृत्तित्वविशिष्टविशेषणतासन्निकर्षस्याभावान्नैव भेदप्रमा सिध्यति ।

वस्तुतस्तु भेदाधिकरणेन सहेंद्रियसन्निकर्षोऽपि न भेदप्रमाया हेतुः । तस्य तथात्वस्वीकारे कर्णशष्कुल्यवच्छिन्नाकाशस्य श्रोत्रेंद्रियत्वात् तस्यैव स्वग्राह्यशब्दाभावाधिकरणत्वात् स्वेन सह स्वस्य सन्निकर्षासंभवेनाभावप्रमाहेतुसन्निकर्षस्यासत्वात् तन्निष्ठशब्दाभावस्य प्रत्यक्षं न स्यादिति ज्ञेयम् ।

नन्वीश्वरप्रतियोगिकभेदाधिकरणस्यात्मन इंद्रियेण सह सन्निकर्षो नास्तीति यदुक्तं तन्न सम्यक् । यत आत्ममनसोर्द्रव्यत्वेन तयोः संयोगाश्रयत्वमस्त्येवेति चेन्न । सावयवस्य हि वस्तुनः सावयवेन वस्त्वंतरेण संयोगो लोके प्रसिद्धः । अतो विभुत्वाणुत्वपक्षद्वयेऽप्यात्मनो निरवयत्वेनाव्याप्यवृत्त्यनित्यसंयोगवत्वं न संभवति । व्यापकाभावाद्धि व्याप्याभावसिद्धिः । तदर्थं मध्यमपरिमाणवत्वांगीकारे तु यद्यन्मध्यमपरिमाणवत्तदनित्यमिति व्याप्तेरात्मनोऽनित्यत्वापत्तिर्दुर्वारा ।

किंच तुष्यत्विति न्यायेन मनस इंद्रियत्वमंगीकृत्य तस्य भेदेन सह कोऽपि संबंधो नास्तीत्युक्तम् ।

वस्तुतस्तु मनो नेंद्रियं चक्षुरादेः सहकारित्वाद्दीपवत् । 'इंद्रियेभ्यः पराह्यर्था अर्थेभ्यश्च परं मनः' इति श्रुत्या च तस्यानिंद्रियत्वनिश्चयात् ।

'मनः षष्ठानींद्रियाणीति' वचनं तु न मनस इंद्रियत्वे प्रमाणम्। 'यजमान्-पंचमा इडां भक्षयंति' 'वेदानध्यापयामास महाभारतपंचमान्' इत्यत्र यथाऽनृत्विजापि यजमानेनर्त्विग्गतपंचसंख्यापूरणम्। यथाचावेदेनापि महाभारतेन वेदगतपंचसंख्यापूरणं च दृश्यते। तद्वदनिंद्रियेणापि मनसेंद्रियगतषट्त्वसंख्यापूरणं संभवति। 'इंद्रियाणां मनश्चास्मी'तिवचनमपि 'नक्षत्राणामहं शशीति' वचनवन्न मनस इंद्रियत्वे प्रमाणमिति बोध्यम्।

नन्वेवं भेदप्रमाया इंद्रियजन्यत्वं न संभवति चेत्तर्हि साक्षिस्वरूपैव साऽस्तु। तयापि साक्षिस्वरूपया भेदप्रमया विरोधान्न जीवेश्वरयोरभेदं बोधयितु प्रभवति तत्त्वमस्यादिवाक्यमिति चेच्छ्रुतिप्रत्यक्षयोर्विभिन्नविषयत्वान्नैवमपि विरोधः प्राप्नोति। तथा हि— 'मायाबिंबो वशीकृत्य ता स्यात्सर्वज्ञ ईश्वरः। अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा'॥ इति वचनादविद्यामायायुतयोर्जीवेश्वरयोर्भेदं द्योतयति नाहमीश्वर इत्यनुभवात्साक्षिस्वरूपं प्रत्यक्षम्। श्रुतिस्तु मायाऽविद्याविनिर्मुक्तयोः शुद्धयोस्तयोरभेदं बोधयति। इति साक्षिप्रत्यक्षश्रुत्योर्विशिष्टशुद्धत्वाभ्या विभिन्नविषयत्वेन न तयोर्विरोध इत्याशयः।

अथ विशिष्टशुद्धयोरैक्यमित्येकदेशिमतेन विरोधप्रसक्तावपि 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदन्यायेन प्राक् प्रवृत्तं साक्षिप्रत्यक्षमेव दुर्बलत्वात् पश्चात्प्रवृत्तया प्रबलया श्रुत्या बाध्यते। तदुक्तम्—

**पूर्वं परमजातत्वादबाधित्वैव जायते।**
**परस्यानन्ययोत्पादान्नत्वबाधेन संभवः॥ इति॥**

'तदनपबाधने तदपबाधात्मनस्तस्योत्पत्तेरनुपपत्तेः' इत्याचार्यवाचस्पत्युक्तेश्च। यथा पूर्वोत्पन्नं रजतज्ञानमेव पश्चादुत्पन्नेन शुक्तिज्ञानेन बाध्यते तद्वदिहापि द्रष्टव्यमित्यर्थः।

नन्वेवं प्रत्यक्षेणाभेदश्रुतेर्बाधाभावेऽप्यनुमानेन तस्या बाधो वर्तत एव। तथा हि— अयं जीवो ब्रह्मप्रतियोगिकभेदवानसर्वज्ञत्वाद् घटादिवदितिचे-

त्किमयं साध्यत्वेनाभिमतो भेदः पारमार्थिक, उत काल्पनिकः । आद्ये घटादौ ब्रह्मनिरूपितपारमार्थिकभेदस्यासत्वाद् दृष्टांतोऽसिद्धः । अंत्ये तु परस्परप्रतियोगिककाल्पनिकव्यावहारिकभेदस्यास्माभिः स्वीकृतत्वात् सिद्धसाधनमिति ज्ञेयम् । एतेन ब्रह्मप्रतियोगिकभेदस्य जीवेऽभावात्तस्य ब्रह्मनियम्यत्वानुपपत्तिरित्यपि न । नियम्यत्वस्य स्वसमानसत्ताकनियंतृभेदसापेक्षत्वात् । तस्य-चास्माभिः स्वीकारादिति भावः । यदि च जीवो ब्रह्मनिरूपितभेदवानसर्वज्ञत्वादित्युक्तानुमाने स्वज्ञानाबाध्यभेदवत्वं साध्यमित्युच्यते । तच्च दृष्टाते घटादावस्तीति न दृष्टातहा निर्दोष इति चेत्, स्वज्ञानाबाध्यभेदवानित्यत्र स्वशब्देन सुखदुःखादिमान्जीवपदवाच्य आत्मा विवक्षितः, किंवा सुखदुःखादिशून्यः । आद्ये सुखदुःखादिमच्छारीर्यात्मज्ञानेनाबाध्यस्य व्यावहारिकानिर्वचनीयभेदस्यास्मादिष्टत्वान्न तस्य साध्यत्व संभवति । सिद्धसाधनदोषापत्तेः । अत्ये सुखदुःखादिशून्यब्रह्मात्मज्ञानबाध्यत्वस्य स्वीकारात् तज्ज्ञानाबाध्यस्य भेदस्य कुत्राप्यस्वीकारात् पुनरपि दृष्टांतासिद्धिप्रसंग एव ।

ननु जीवो ब्रह्मप्रतियोगिकाऽनौपाधिकभेदवानसर्वज्ञत्वाद् घटादिवत् । इत्यनौपाधिकभेदवत्वमस्मिन्ननुमाने साध्यमभिप्रेतम् । अद्वैतिना तु ब्रह्मप्रतियोगिको भेद औपाधिक इष्टो न त्वनौपाधिकः । घटादौ तद्भेदस्त्वनौपाधिक एवेति न सिद्धसाधन न वा दृष्टातहानिरिति चेन्न । घटादौ विद्यमाने ब्रह्मभेदेऽप्यविद्यैवोपाधिरित्यनौपाधिकभेदस्य तत्रानगीकाराद् दृष्टांतासिद्धिः सुस्थैव ।

किंच त्वदुक्तानुमाने जडत्वमुपाधिः । तथाहि—दृष्टांतभूते घटादावनौपाधिकभेदवत्वं जडत्व चास्तीति साध्यव्यापकता । हेत्वधिकरणे स्वप्रकाशात्मनि जडत्व नास्तीति साधनाव्यापकतेति सोपाधिकत्वेनासर्वज्ञत्वादित्ययं हेतुर्व्याप्यत्वासिद्धः । नच प्रमेयत्वातिरिक्तजडत्वाभावात् तस्य च केवलान्वयित्वेन हेत्वधिकरणेऽसर्वज्ञात्मनि विद्यमानत्वान्न जडत्वस्य साधनाव्यापकत्वमतो नोपाधित्वं तस्येति वाच्यम् । जडत्वस्य ह्यस्वप्रकाशरूपत्वादात्मनः स्वप्रकाशत्वस्य च श्रुतिन्यायसिद्धत्वात् तादृश आत्मन्यस्वप्रकाशत्वात्मकस्य

जडत्वस्याभावात् संभवत्येव साधनाव्यापकत्वमित्यसर्वज्ञत्वं हेत्वाभास एव न सद्धेतुरिति ज्ञेयम् ।

किंचात्मा ब्रह्मप्रतियोगिकानौपाधिकभेदवानसर्वज्ञत्वाद् घटादिवदिति-त्वयोपन्यस्तमनुमानमात्मा ब्रह्मप्रतियोगिकभेदाभाववांश्चिद्रूपत्वात् परमात्मवत् । इति साध्याभावसाधकचित्त्वेन हेतुना सत्प्रतिपक्षितम् । अर्थादसर्वज्ञत्वहेतो-र्दुष्टत्वेन तद्धेतुकानुमानाज्जीवे ब्रह्मभेदो न सिध्यतीत्यर्थः ।

ननु जीवपक्षकानुमानस्य दुष्टत्वेन भेदस्यासिद्धावपि ब्रह्मपक्षकानु-मानेन तस्य सिद्धिर्भवत्येव । तथा हि– ब्रह्म, जीवप्रतियोगिकधर्मिप्रमाऽबाध्य-भेदवद्, असंसारित्वाद् घटादिवत् । अत्रानुमाने धर्मी जीवस्तद्विषयिणी प्रमाऽहंजीवोऽस्मीत्याकारिका । तयाऽबाध्यो जीवप्रतियोगिको भेदस्तद्वद्ब्रह्मे-त्यर्थः । तथा च जीवानुयोगिकब्रह्मप्रनियोगिकभेदस्य ब्रह्मज्ञानबाध्यत्वेऽपि तद्विपरीतस्य ब्रह्मानुयोगिकजीवप्रतियोगिकभेदस्यास्मिन्ननुमाने साध्यत्वान्न सिद्धसाधनं न वा दृष्टातहानिरिति ।

अत्रेदं विमृश्यम् । उपदर्शितानुमाने साध्यत्वेनाभिमतो जीवभेदस्त्वया धर्मिप्रमाऽबाध्यत्वेन विशेषितः । स किं यावद्धर्मिप्रमयाऽबाध्य उत यत्किंचन धर्मिप्रमयाऽबाध्य इति । आद्ये घटवृत्तिजीवभेदस्यापि स्वधर्मिब्रह्मज्ञानबाध्यत्व-स्वीकाराद्यावद्धर्मिज्ञानाबाध्यत्वस्यासंभवेन दृष्टांतस्यासिद्धिरेव । द्वितीये तु स्वरूपातिरिक्तभेदवादिमतेन घटादौ ब्रह्मणि च जीवभेदस्यैकत्वाद्, भेद-धर्मिघटज्ञानाबाध्यजीवभेदस्यास्माभिर्ब्रह्मण्यपि स्वीकारात् सिद्धसाधनदोष-प्रसक्तिरित्यवगंतव्यम् ।

किंच वेदांततात्पर्यगोचरं सत्यज्ञानाऽऽनदस्वरूप प्रत्यगभिन्नं निर्गुणं ब्रह्म प्रमितं सदुक्तानुमाने पक्ष आहोस्विदप्रमितं तत् पक्षः । आद्ये प्रत्यगभिन्ने तादृशे ब्रह्मणि निर्धारिततात्पर्यैर्भेदभंजकैस्तत्त्वमस्यादिवेदांतैः स्वरसत अभेद-बोधनात् तद्विपरीतं भेदानुमानं धर्मिग्राहकप्रमाणविरोधात् 'ज्योतिष्टोमो न

स्वर्गफलः ' क्रियात्वान्मर्दनादिक्रियावदितीदमनुमान यथा ' ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वेदबाधितविषयत्वादाभासरूपं तथेदमपि भेदानुमानं वेदांतबाधितविषयत्वादाभासरूपं दुष्टमित्यर्थः । द्वितीये त्वप्रमितत्वेनासिद्धत्वादाश्रयासिद्धिदोषप्राप्तिरपरिहार्यैव । न ह्यप्रमितस्य वंध्यापुत्रादेः सत्वं पश्याम इति ।

अथैवमनुमानविरोधाभावेऽपि श्रुतिविरोधस्य जागरूकत्वान्नाद्वैतं जीवेश्वरयोः सिध्यति । तथा हि—

" द्वासुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्यनश्नन्नन्यो अभिचाकशीति ॥ "

ऋ. म. १ सू. १६४ मत्र १०

अयं मंत्रः कर्मफलभोक्तुर्जीवस्य तदभोक्तुश्चेश्वरस्य व्यक्तं भेदं प्रतिपादयंस्तयोरभेदबोधकश्रुतेर्बाधको भविष्यतीतिचेत्तदप्यसंभवि । यतः स्वर्गापवर्गफलशून्यामित्येव न, अपितु ' मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ' इति श्रुत्युक्तमहानर्थप्रदं भ्रनप्रमासाधारणप्रत्यक्षमात्रासिद्धं भेदमनुवदती सा श्रुतिर्नैव जीवेश्वरयोर्भेदे प्रमाणम् । प्रयोजनवदनधिगतार्थबोधकत्वाभावात् । अन्यथा फलशून्यः सिद्धार्थावेदकोऽतएव तत्परोऽपि ' वायुर्वै क्षेपिष्ठा देवते ' त्याद्यर्थवादोऽपि स्वार्थे प्रमाणं स्यात् । तथा सति तु स्तुत्यादिद्वारा विधिवाक्यैकवाक्यतया तस्य प्रामाण्यबोधको ' विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीना स्युः ' इति त्वन्मतीयसिद्धांतो भज्येत ।

किंच सा द्वासुपर्णेति श्रुतिरापततः प्रत्यक्षसिद्धं भेदमनुवदतीत्यंगीकृत्येदमुक्तम् ।

वस्तुतस्तु कर्मफलभोक्तुः सत्वात् ( बुद्धेः ) पुरुषं पृथक्कृत्य सा श्रुतिरस्य पुरुषस्य समस्तसुखदुःखभोक्तृत्वलक्षणस्य संसारस्य तत्वतो राहित्यं बोधयतीति रहस्यम् ।

नन्वियं श्रुतिर्यदि जीवेश्वरौ विहाय सत्वजीवौ प्रतिपादयेत्तर्ह्यचेतनस्य सत्वस्य प्रत्यक्षविरुद्धं भोक्तृत्वं ब्रुवाणा कथं प्रामाण्यमाप्नुयात्। प्रत्यक्षविरुद्धार्थबोधकत्वाद्धि 'यजमानः प्रस्तर' इतिवत्स्वार्थे तस्याः प्रामाण्यं न स्यादिति चेन्नात्रैवं शका समुचिता। यत 'स्तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्वं' 'अनश्नन्यो अभिचाकशीत्यनश्नन्यो अभिपश्यति ज्ञः तावेतौ सत्वक्षेत्रज्ञौ' इति पैंगिरहस्यब्राह्मणमेव द्वासुपर्णेतिमंत्रस्यार्थं विशदं प्रकाशयति।

नच तत्र पैंगिरहस्यब्राह्मणेऽपि सत्वशब्दः शारीरवाची क्षेत्रज्ञशब्दस्त्वीश्वरवाचीति पैंगिरहस्योक्तमार्गेणापि द्वासुपर्णेति मत्रस्य बुद्ध्यात्मवाचकत्व नेति वाच्यम्। पैंगिरहस्यब्राह्मणे हि 'तदेतत्सत्वं येन स्वप्नं पश्यति' 'अथ योऽय शारीर उपद्रष्टा स क्षेत्रज्ञः' 'तावेतौ सत्वक्षेत्रज्ञौ' इति वचोभ्यां सत्वपदस्य चित्ते शक्तिरुक्ता। क्षेत्रज्ञशब्दस्य च शारीरके द्रष्टरि जीवे वृत्तिरभिहितेति सत्वक्षेत्रज्ञशब्दयोरंतःकरणजीववाचकत्वं श्रुतिसिद्धमिति द्वासुपर्णेति मंत्रस्य बुध्यात्मपरत्व नेति शकायाः सुतरामनवसरः।

नच तदेतत्सत्व 'येन स्वप्न पश्यती' त्युदाहृतश्रुतौ येनेति यत्पदोत्तर तृतीयया कर्ता उच्यते। स च स्वप्नावलोकनक्रियायाः कर्ता जीव एव। तथा क्षेत्रज्ञशब्दाभिहित ईश्वरोऽपि स्वप्नद्रष्टा स्यात् सर्वज्ञत्वादेवेति शक्तिवृत्त्या जीवेश्वरावेवोदाहृतपैंगिरहस्यश्रुत्यापि सिध्यतः। नतु बुद्धिजीवाविति वाच्यम्। अनभिहिते कर्तरि तृतीयेत्यनुशासनादुक्तश्रुतौ तु पश्यतीति तिङ्प्रत्ययेन कर्तुरभिधानाद्येनेति करण एव तृतीया स्वीकर्तव्या। न कर्तरि। उपद्रष्टा क्षेत्रज्ञश्च शारीर इति विशेषणेन श्रुत्याविशेषित इति जीवो वाच्यः। नेश्वरः। तस्माज्जीवस्य स्वप्नावलोकनसाधनीभूतांतःकरणे सत्वशब्दस्य शक्तिरुदाहृतश्रुत्या कंठत एवोक्ता न जीव इति स्पष्टं भवतीति भावः।

नन्वास्तां नाम सत्वशब्दस्य चित्ते मुख्या वृत्तिः। अथापि शारीर इति विशेषणवाचकपदस्येश्वरे सा वृत्तिरपरिहार्या। यतः शरीरे भवति वर्तत इति शरीरे स्थितिक्रिया निमित्तीकृत्य शारीरशब्दः प्रवृत्तः। परमेश्वरस्तु

सर्वगत इति शरीरेऽपि तिष्ठतीति सोऽपि शारीरविशेषणेन विशेषित इति तच्छब्दवाच्यो न जीव एवेति चेत् । व्यापकत्वात्सर्वगतमाकाशं शरीरेऽपि भवति । अथापि तच्छारीरशब्दवाच्यमिति केऽपि न कथयंति । तद्वदीश्वरोऽपि न शारीरशब्दवाच्यः । किंच सर्वगतत्वाच्छरीरादितरत्रापि भवतीश्वरः । अतः शारीर इति विशिष्टपदाभिधेयः स नैव भवतीति ज्ञेयम् ।

अथ यद्ययं द्वासुपर्णेति मंत्रो जीवेश्वरावनभिधाय पैंगिरहस्यब्राह्मणोक्तदिशा बुद्धिजीवौ प्रतिपादयेद्, बुद्धेश्चाचेतनाया अत्तीति भोक्तृत्वं वदेत्, तर्ह्यबाधितार्थबोधकत्वाभावात्तस्य प्रामाण्यं न स्यादिति चेत् । अदाहकस्याप्ययःपिंडस्य वह्नितादात्म्याध्यासाद्यथा दाहकत्वमस्ति तथा चैतन्यानुप्रवेशादचेतनाया अपि बुद्धेर्भोक्तृत्वं संभवति । तथा चायो दहतीति वाक्यवत् पिप्पलं स्वाद्वत्तीति वाक्यमपि सुखदुःखादिविक्रियावति सत्वे भोक्तृत्वमारोप्य प्रवृत्तं प्रमाणमेव व्यवहारसमये ।

वस्तुतस्त्वियं श्रुतिरचेतनस्य सत्वस्य भोक्तृत्वं वक्तुं नैव प्रवृत्ता । अपि तु चेतनस्य क्षेत्रज्ञस्याभोक्तृत्वं ब्रह्मात्मकतां च प्रकाशयितुं प्रवृत्तेति भावः ।

ननु स्वयंकृतस्य कर्मणोऽवश्यंभाविफलंभुंजानौ शरीरांतर्वर्तिन्यां बुद्ध्याख्यगुहायां प्रविष्टौ परमे हार्दाकाशे स्थितौ छायाऽऽतपवद्विलक्षणावात्मानौ ब्रह्मविदः पंचाग्नयो गृहस्थाश्च वदंतीत्याद्यर्थका—

**ऋतं पिबंतौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदंति पंचाग्नयो ये च त्रिणाचिकेताः ॥**

१ व. ३।१

इति, कठश्रुतिस्तमःप्रकाशवत्संसारित्वासंसारित्वेनात्यंतभिन्नावात्मानौ व्यक्तमुपदिशंती जीवेश्वरयोरभेदावेदकश्रुतेर्बाधकतया जागर्ति चेत् कथं तयोरभेद उच्यत इति चेदत्र ब्रूमः ।

व्यवहारसिद्धं भेदमनुवदंती ऋतंपिबंताविति श्रुतिस्तदसिद्धाभेदोपदेशिका तत्त्वमस्यादिश्रुतिं न बाधत इत्येव न। अनधिगतपूर्वार्थबोधकत्वाद्बलिष्ठयाऽभेदश्रुत्यैवानुवादकत्वेन दुर्बला सा भेदश्रुतिः सुतरां बाध्यत इति त्वयाप्यंगीकार्यम्। न च भेदग्राहिप्रत्यक्षप्रमाणोपबृंहिता सा भेदश्रुतिरेव बलिष्ठा-तस्तया प्रत्यक्षप्रमाणबाधितार्थाभिधात्र्यभेदश्रुतिश्चिराय बाध्यत इति वाच्यम्। प्रमाणांतरं हि श्रुतीनां प्राबल्यापादकं न भवति। किंत्वनुवादकत्वसंपादनद्वारा तासां दौर्बल्याधायकमेव तदिति रहस्यम्।

अथ 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य 'यो वेद निहितं गुहाया'मित्युक्त्वा ब्रह्मविद्यया मुक्तः पुमान् पुत्रवित्तादीन् समस्तानेव कामान् ब्रह्मणा सह भुंक्त इत्येवमर्थं कथयंती 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इतीयं तैत्तिरीयश्रुतिर्वैयधिकरण्याद्ब्रह्मजीवयोरबाध्यभेदमंतरेणानुपपन्ना सती तयोस्त्रिकालाबाध्यमर्थात्सत्यं भेदं वक्तीति चेन्न। ब्रह्मानुभवेनाज्ञाननिवृत्तितः सच्चिदानंदाऽऽनंदात्मकब्रह्मभावं गतोऽयं मुक्तो ब्रह्मस्वरूपेणैवाऽऽत्मना ब्रह्मानंदाव्यतिरिक्तान् नित्यान् सर्वान् कामान् युगपदनुभवति प्रतिबिंबभूतेन सांसारिकेण स्वरूपेण धर्मादिसापेक्षान् नित्यान् कामान् क्रमेणेत्यर्थः। अर्थान्मुग्धजनपरिकल्पितभेदसत्यत्वबोधने नोदाहृतायाः श्रुतेस्तात्पर्यमिति भावः।

नन्वेवमप्यात्मदर्शनमुद्दिश्य तत्साधनतया श्रवणादिकं विदधती 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मंतव्यो निदिध्यासितव्यः' इतीयं बृहदारण्यकश्रुतिः कर्मकर्तृभूतयोरीशजीवयोरैक्यं अनुपपन्ना सती तयोर्वास्तवं भेदं सूचयतीति वक्तव्यम्। अन्यथा सा श्रुतिरप्रमाणं स्यादिति चेन्न। 'द्वितीयाद्वै भयं भवति' 'नेह नानास्ति किंचन' 'मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति' 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' 'अभयं वै जनक प्राप्तोऽसि' इत्यादिभिर्निर्णीताद्वैततात्पर्यिकाभिः श्रुतिभिः सह विरोधान्न वास्तवभेदसूचिका सा श्रुतिः। किंतु सामान्यतः सिद्धं भेदमनूद्य श्रवणादिकर्तुरात्मनः कर्मभूतेनाऽऽत्मना तादात्म्यं बोधयितुं प्रवृत्ता सा श्रुतिरित्युपक्रमोप-

संहारादिभिर्निश्चीयते । तस्मान्न तयान्यया वा कयापि श्रुत्या भेदस्य पारमार्थिकत्वं सिध्यतीत्यवगंतव्यम् ।

अथ यद्यत्र स्फीतालोके चक्षुस्संनिकृष्टभूतले घटः स्यात्तर्हि पटादिवदुपलभ्येत । यतो नोपलभ्यते ततो नास्तीत्युक्ताधिकरणे योग्यानुपलब्ध्या यथा घटाभावः सिध्यति तद्वद् यदि जीवेश्वरयोरभेदः स्यात्तर्ह्यहं सुखी दुःखीत्यादिवदहमीश्वर इति सर्वैः सोऽभेद उपलभ्येत । नतूपलभ्यते । प्रत्युत सर्वज्ञादीश्वराद्भिन्नोऽहमिति भेद एवोपलभ्यते सर्वैः प्राणिभिः ।

तस्मान्नास्ति तयोरभेद इति प्रतियोगिसत्वप्रसजनप्रसंजितप्रतियोगिकत्वात्मिकया योग्यानुपलब्ध्या षष्ठप्रमाणात्मिकया सिध्यति ।

तथा च द्वितीयाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वमिति नियमात् तत्प्रतियोगिनो भेदस्यैवास्तित्व तेन प्रमाणेन निश्चीयते नत्वभेदस्येति चेन्न ।

यथा तिमिरादिभिरावृतो घटादिरर्थः सन्नपि नोपलभ्यते तद्वदविद्यया प्रकाममावृतो जीवेशयोरभेदो नैवानुभूयते तत्त्वतः सन्नपि । तदुक्तं भगवता- ' अज्ञानेनावृतं ज्ञानं तेन मुह्यंति जंतवः ' इति विद्ययाऽविद्यानिवृत्तौ त्वनावृतः सोऽभेदः सुप्रकाशत इत्यात्मतत्त्वदर्शिनामनुभवः । तदप्युक्तं भगवता

**ज्ञानेन तु तदज्ञान येषां नाशितमात्मनः ।**
**तेषामादित्यवज्ज्ञानं प्रकाशयति भारत ॥ इति ॥**

नचार्थापत्त्या भेदस्यावितथत्वं निश्चीयत इति वाच्यम् । प्रातीतिकादिभेदेन तस्या अन्यथासिद्धत्वात् । तथा हि-- उपपाद्यज्ञानेनोपपादकस्य कल्पनमर्थापत्तिः प्रमाणम् । येन विना यदनुपपन्नं तदुपपाद्यम् । यस्याभावे यस्याभावस्तदुपपादकम् । यतो भोजनं विना दिवाऽभुंजानस्य पीनत्वमनुपपन्नं तस्मात्तदुपपाद्यम् । रात्रिभोजनस्याभावे पीनत्वस्याभाव इति रात्रिभोजनमुप-

पादकम् । तथा च यथोपपाद्यपीनत्वज्ञानेन तदुपपादक रात्रिभोजनमर्थात्कल्प्यते । तद्वत् प्रकृते भेदं विना तदवलंबिलौकिकशास्त्रीयव्यवहारोऽनुपपन्न इति स उपपाद्यः । भेदस्याभावे तादृशव्यवहारस्याभाव इति भेद उपपादकः । उक्तव्यवहारस्तु सर्वानुभवसिद्ध इति तस्य ज्ञानेन तदुपपादको भेदोऽर्थात्सिध्यतीति चेन्न ।

किमर्थापत्त्या कल्पितो भेदः प्रातीतिक, उत व्यावहारिक, आहोस्वित्पारमार्थिकः । आद्ये स्वाप्नादिव्यवहारवदुक्तव्यवहारोपपत्तिः स्यात् । द्वितीये 'लौकिकं तद्वदेवेदं प्रमाणं त्वाऽऽत्मनिश्चयात्' इति श्रुतेरुक्तव्यवहारोपजीव्यस्य भेदस्य तत्वज्ञानेतराबाध्यत्वमस्माकमिष्टमेव । तृतीये तु 'द्वितीयाद्वै भयं भवति' 'मृत्योः स मृत्युं गच्छति य इह नानेव पश्यतीति' श्रुतेर्महानर्थप्रदात्तस्मात्कदापि निर्मुक्तिर्नस्यादिति महदनिष्टापातप्रसंग ।

तस्मात् प्रातीतिकेन व्यावहारिकेण वा भेदेन तदवलंबिव्यवहारः शास्त्रीयो लौकिकश्च चरितार्थ इत्यर्थापत्त्यापि भेदस्य पारमार्थिकत्वं नैव सिध्यतीति निरवकाशतया बलवत्तत्त्वमस्याद्यलौकिकप्रमाणोपदिष्टं तत्त्वज्ञानुभवसिद्धं समुपपन्नं च जीवेशयोरद्वैतं निदाघकालीनमध्यान्हार्कवत्सर्वोत्कर्षेण वर्तीति बोध्यम् ॥ ॐ तत्सद्ब्रह्मार्पणमस्तु ॥ श्री ॥

॥ श्री ॥

# ॥ धर्मविमर्शः ॥ (६)

## ( उत्तरार्धम् । )

## उपोद्घातप्रकरणम् ।

धर्मं शनैः संचिनुयाद्वल्मीकमिव पुत्तिकाः ।
सीदन्नपि स्वधर्मेण नाधर्मे ह्यभिवेशयेत् ॥१॥

मृतं शरीरमुत्सृज्य काष्ठलोष्ठसमं क्षितौ ।
विमुखा बांधवा यांति धर्मस्तमनुगच्छति ॥२॥

* * * *

उपप्लवः कश्चिदेकः स्यादभूदिति भाति नः ॥
यतः प्राचीनसिध्दांता इदानीं निंदनास्पदम् ॥ १ ॥

अथ सच्चिदानंदाद्वितीयस्य परात्मनः स्वरूपमिव धर्मस्यापि प्रकृतं स्वरूपं नितांतं परिशुद्धं वर्तते । किंतु तादृशो निर्मलोऽप्यात्मा स्वाभाविकया मायाख्यया स्वीयशक्त्या शबलः सन् यथा चराचरस्यास्य विचित्रस्य जगतः स्रष्टा नियंता च भवति तद्वन्मौलिकः परिशुद्धोऽपि धर्मो मानुषाणा रुचिवैचित्र्यादृजुकुटिलभेदेन विशिष्टः संवृत्तः । अतोऽत्राविशेषितकमलशब्द-वाच्यार्थापेक्षया नीलकमलं पश्य, इतिविशेषितकमलशब्दबोध्यार्थो यथाऽसाधारणस्तथा धर्मशब्देनात्राकृत्रिमः सनातनवैदिकधर्मोऽत्रगंतव्यः । विशेषणं सजातीयव्यावर्तकमिति प्रसिद्धमेव । साजात्यं चात्र धर्मत्वेन ज्ञेयम् ।

' यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः ' इत्यसंदिग्धार्थकं पारमर्षं सूत्रं समालोचितं चेद्विश्वस्यैहिकामुष्मिकं च कल्याणं सर्वेषामपि धर्माणां प्रधान-

मुद्देश्यं सिध्यति । तत्कथं सिध्येदित्यत्र विप्रतिपत्तावपि तेन मुख्योद्देश्येन भाव्यमित्यत्र प्रायशो न विवादः कस्यापि धर्मस्य । इष्टानिष्टप्राप्तिपरिहाराय ह्यहर्निशं प्रयतते निखिलोऽपि लोकनिवहः । इमं निसर्गसिद्धं प्राणिस्वभाव-मालोच्य तत्तद्धर्मप्रवर्तकैः स्वस्वमत्यनुसारं तयोरुपाया आविष्कृताः । त एव पृथक् पृथगवांतरधर्मा ज्ञेयाः । उपेयभूतं कल्याणं तत्वत एकरूपमपि तदुपाय-प्रवर्तकानां पुंसा मतिवैचित्र्येणोपाया यथा मिथो भिन्नाः कल्पितास्तथा निर्दिष्ट-मुपेयमनेकरूपं सदप्यनेकरूपं तैः कल्पितम् । अर्थादुपायवैचित्र्यवदुपेयवैचित्र्य-मपि कल्पितधर्मपृथक्त्वे प्रयोजकं संवृत्तम् । तेन चानेके मतभेदा, मिथो-विवादः, खंडनमंडने, पर्यवसाने विरोधश्च भूत्वा मूलतो विशुद्धस्यापि धर्मस्य दुरवस्था संवृत्ता ।

'प्राणिनामिह परत्र च मंगलम्' इतीदं धर्मस्य मौलिकं विशुद्ध-मुद्देश्यं सर्वत्र सुस्थिरं चेत्तथा तदर्थं 'ब्रह्मचर्यसत्यमहिंसादयाक्षमायमनियमादयः सर्वसाधारणा धर्मा एवालम्' इति भावना जनमनःसु चिराय कृतपदा चेन्नैवास्मिन् विचित्रेऽपि जगत्यनवरतं दरीदृश्यमाना दुःसहा अनेकेऽनर्थाः कदापि स्युः । तस्य तस्याश्चाभावादेव निर्मले पवित्रतमे धर्मेऽपि विचित्र मतवैविध्यं सांप्रतं प्रायशः सर्वत्रोपलभ्यते । अनर्थपरंपरा च स्वैरं नृत्यति । तदेवानर्थहेतुमतवैचित्र्यं दिङ्मात्रमत्रोदाह्रियते ।

'येनकेनाप्युपायेनैहिकोत्कर्ष एव प्रकृत यथार्थं कल्याणमिति केचन प्रलपंति, सृष्टेर्बहिर्भवनमित्यपरे, शून्यात्मना परिणतिरित्यन्ये, अलोकाऽऽकाशे संततोर्ध्वगमनमित्यपि केचन लपंति । स्वर्गप्राप्तिरेव मुक्तिरिति कर्मिणः, वैकुंठा-दियात्रा सेति भक्तब्रुवाः, क्षुरेण शिखायाश्छेदनं, शिरस्यर्धकृतकेशधारणम्पुंसा धर्मः, स्वैरं यज्ञोपवीतत्यागः मूलतः सदाचारोल्लंघनंचेत्युच्छृंखलाः गतभर्तृकयो-च्छास्त्रं कुंकुमतिलकधारणम्प्राग्वत्कबरीभारस्थापनं यथेष्टमाहारविहारादिकं च धर्मः ईश्वरानंगीकारः, जीवानां पुनर्जन्माभावः, चांडालाद्यस्पृश्यस्पर्शस्तस्यपरिहारस्तु धर्मस्य लाञ्छनमित्युद्घोषस्तथा तेषां परिपूतदेवमंदिरादिषु स्वैरसंचारार्थं देव-

प्रियाणां तुच्छः प्रयत्न एवमादिविकर्मसु प्रवृत्तिरतदुद्दिश्य समाजे कोलाहलश्च दरीदृश्यते। यद्वयं ब्रूमस्तदेव सत्यमितरे यद्वदंति तन्मिथ्यैवेत्युक्तिसाहसम्। अन्यधर्मीयमानुषं येनकेनापि प्रकारेण स्वीयधर्मे समाकर्षितुं बालिशो यत्नः। इत्येवमादयश्चिराय धर्मैकजीवातोरस्य भारतवर्षस्य भृशमवनतिकारकाः सनातन-धर्मनिरुद्धाः सर्वथा गर्ह्यप्रयत्नाः प्रतिपदं सर्वत्र प्रचलिता उपलभ्यंते। एते तु प्रकृतस्यैहिकामुष्मिकमंगलस्य जात्वपि नैवोपायाः। उपेयस्यैकरूपत्वे तदु-पाये मिथो विरुद्धानेकत्व कुतः। विरोधस्तु श्रेयसः स्वास्थ्यस्य शांतेर्वा साधन-मिति नानुभूयते कुत्रापि। प्रत्युत महद्दुःखस्यैव कारणं स इति सुप्रसिद्धम्। उक्तेष्वन्येषु च निरर्गलं प्रचलितेषु निंद्यप्रकारेष्वैक्यमविरोधो वा नास्तीत्येव नापितु पयोमुखविषकुंभवत्ते हानिकारका इत्यसंदिग्धम्। इत्येवं धर्मस्य दुःस्थितिमवलोक्य तस्य विशुद्धं स्वरूप नाधिगंतव्यं मानवैरिति तान् भ्रष्ट-मतीन् कुर्वंति देवा इति यदुपवर्णितं शतपथब्राह्मणे तद्यथार्थमिति भाति।

ऐदानीतनोऽयमेव विशुद्धो धर्म इति कुमत्या सर्वत्र प्रसृतमधर्ममवलोक्य विवेकिनः केचन धर्मे उदासीनाः संतो धर्मेण यावती हानिर्जाताऽस्माकं तावती हानिर्नान्येन केनापि संवृत्तेति लपंति। मूलतः शुद्धोऽविकृतश्च धर्मो यद्यपि जगन्मंगलाय प्रवृत्त इत्यवितथम्। तथाप्युत्तरोत्तर प्रागुक्तप्रकारेण मालिन्यप्रसक्तितस्तस्यानेके भेदास्तावंतो विरोधाश्च प्रसृता एतदपि नैव वितथम्। स्वीयं सत्यत्वं प्रत्येकोऽपि धर्मः प्रतिपादयतीत्येव केवलं नापित्वन्ये सर्वेऽपि धर्मा अधर्मा एवेति निःशंकं निस्त्रपं च प्रलपतीत्येतन्महदाश्चर्यम्। धर्मपर्यातर्गतं विरोधबीजमत्रैवास्तीत्यवगंतव्यम्। सर्वज्ञकल्पेन दोषज्ञेन न्यूनतापरिहारेच्छया दोषः प्रदर्शितश्चेत्तन्नायोग्यम्। किंतु मत्सरादिदोष-ग्रस्तेन चेतसा खपुष्पायमाणमपि दोषमुद्भाव्य येन केनापि क्षुद्रतमप्रकारेण जनसामान्यस्य बुद्धिभेदकरणं मनुष्याधमत्वं द्योतयतीत्यत्र न कोऽपि संदेहः।

इदं चराचरं जगत्कदोत्पन्नमादिमश्चेतनः कदा कथं कस्माच्चोत्पन्नो

वा नेतीदमद्य ज्ञातुमशक्यप्रायमपि प्राणिना प्रकृतकल्याणस्योपायभूता धर्मभावना चेतनादाविर्भूतेति निश्चितमनुमीयते। धर्म ईश्वरप्रणीतः स्वयमाविर्भूतोऽपौरुषेयो वेति क्षणमस्वीकृतमपि प्रथमोत्पन्नैश्चेतनै. स्वीयानुभवानुसारं महता प्रयत्नेन धर्म एव प्रकृतकल्याणस्योपायो निर्णीत इत्युक्तमपि चेद्धर्मकल्पना चेतनसंबद्धेत्यर्थात्सिध्यति । तथा जराव्याधिमृतीत्येतत्रितयस्यापरिहार्यत्वानुभवत एव तेषा चित्ते धर्मः स्फुरित इत्यप्यगीकार्यम् । अर्थाद्दुःखमेव धर्माविर्भावप्रयोजकम् । तच्चानादिस्वरूपमेव सृष्टेरिति धर्मो न कृत्रिमोऽपितु स्वाभाविकोऽनादिरिति निःसंदिग्धं सिध्यति । स्थिते चैवं प्राङ्निर्दिष्टा अन्ये च ये विविधाः पंथानो मतभेदाश्च स्युस्ते सर्वेऽप्याधुनिकाः कृत्रिमाः। नानादेः परिशुद्धस्य धर्मस्य स्वरूपं नदित्यवगतव्यम्। अतः सर्वथा निर्मले जगन्मंगलकारिणि तस्मिन्नसंत दोषमधमतयाऽऽरोप्य तस्य त्यागो न कदापि हितकर. । तेनोभयोरपि मंगलयोर्हानिः स्यात् स्वास्थ्यं तु दूरापेतम्। निसर्गानुसारत इदमपरिहार्यमिति चेत्वं किमचेतनः प्रस्तरोऽसि तथाचेत्सिंहसूकरन्यायो जागर्त्येवेत्यवेहि।

उपक्रमे यस्य निर्देशः कृतः स सनातनो वैदिकधर्मोऽपि मौलिकस्य परिशुद्धधर्मस्यैको विशिष्टोऽवयवो वर्तते। अथापि सांप्रत प्रचलितैर्धर्मपथैस्तस्य तुलनायां कृतायां स इतरेषां तेषा प्रामुख्येनाधारभूत इति निश्चितमवगम्यते। यतोऽस्मिँल्लोके यावंतो धर्माः पंथानश्च स्त्यास्तिकनास्तिकदर्शनानि चोपलभ्यंते तानि सर्वाण्यपि सनातनवैदिकधर्मेण साकं विरोधं कर्तुं कानिचिच्च तस्य समर्थनं कर्तुं प्रवृत्तानीत्युपलभ्यंते । सनातनधर्मांतर्गत स्वेन कल्पितं दोष निरस्यान्यं स्वाभिमतं धर्म प्रवर्तयितुं बुद्धादिभिर्यद्यपि यत्नः कृतस्तथापि नूतनः कश्चन धर्मस्तैः कथित इति नोपलभ्यते। अपितु वेदोपदिष्टधर्मस्यैवोपदेशस्तैर्भंग्यंतरेण कृत इत्यनुभवपथमागच्छति। तत इमे सर्वेऽप्यर्वाचीनाः परस्परविरुद्धा धर्मनामधारिणः पंथानः सनातनधर्मस्यैव तेन तेन पुंसा कल्पिता अवयवाः संति । वैदिकधर्मानुयायिनोऽपि केचन स्वानभिमतान् कांश्चिद्धन्यान्वेदोपदेशान्मूढतयोपेक्ष्य वेदानूदितेभ्य एव स्वस्याभिमतेभ्यस्त-

स्वेभ्यो महत्त्वं दत्वास्माकं मतमिदमिति लोके प्रख्यापितवंतः प्रख्यापयंति चेति तेभ्य एकदेशीयमतेभ्यः सर्वांगपरिपूर्णोऽनादिर्वैदिको धर्मस्तेभ्यः पृथगेवेतिज्ञापनाय सनातनेति विशेषणं तस्मै प्रदत्तम्।

इतरेषां धर्मपथानां कर्तारः प्रवर्तयितारश्च यद्वत् पृथक् पृथङ्मनुष्या आसन् तद्वद्वेदोपदिष्टस्य धर्मस्योपदेशकाः परं प्रत्नतमा ऋषय आसन्। यद्यपि तेऽस्मदादिवन्मानुषदेहोपेता इति केषाञ्चिन्मतं तथापि तेषां मनास्यस्मन्मनोभ्योऽतीवोदात्तान्यासन्निती तिहासतो ज्ञायते। मलिनाभिर्वासनाभिरस्माकं सदसद्विचारशक्तिर्यथा परिक्षीणा जाता चित्तं च ताभिर्भृशं कलुषीकृतं तद्वत्तेषां सदसद्विचारशक्तिश्चित्त च न तथा संवृत्तमपितु परमपवित्राभिस्ताभिरत्यंत परिपुष्टमासीत्। यद्वदस्माकं विचारा बाहुल्येन बाह्यसृष्टिमुद्दिश्यैव प्रचलंति तद्वत्तेषा विचारा अध्यात्मसृष्टिमनुलक्ष्य तत्कर्तारं चोद्दिश्य प्रचलंति स्म। यथाऽस्माकमतःकरणं विविधैराशापाशैरितस्तत आकृष्टं जायते। न तथा तेषां चित्तमनावश्यकेषु क्षुद्रेषु विषयेषु कदाप्यासक्तमासीत्। यथाऽस्माभिर्धूर्तैरुपस्थापिताः सर्वस्वनाशकराः पदार्था विषयाश्च प्रतिपदं मूढतयापेक्ष्यंते। तद्वद्दीर्घदृष्टीना तेषां जात्वप्यपेक्षा नासीत्। तेषामाहारादिकं कष्टसाध्यं दुर्लभं च नासीत्। तेनास्माकमिव तेषा कायिकादित्रिविधं सामर्थ्यं न तदर्थमेवोपक्षीणमभूत्। भीषणतमजीवितकलहेन यथाऽस्माकं दीनातिदीना दुःस्थितिः संवृत्ता तथा तेषामल्पसंतुष्टतया तादृश्यवस्था कदापि नाभूत्। तत एव तेषां चित्तं सदा समुन्नतावस्थमेवासीत्।

इत्थं स्वयं स्वास्थ्यमनुभवंतस्ते माहात्मान इतरेषामपि स्वास्थ्यं कथं स्यादिति सुविमृश्य तत्सिद्धेरुपाय निर्णेतु समर्था एवाऽऽसन्। तत ईश्वरेच्छया सृष्टिकर्तुर्नियत्या वा धर्म एव तदुपायत्वेन तेषां हृदि प्रस्फुरितः। ततस्तैस्तदुपायैकनिदानस्य भगवतो धर्मस्य सागोपांगत्वेन वर्णनं विश्वसृडनुग्रहतः स्वाभाविकैः शब्दसमूहैः कृतम्। स एवानाद्यनंतो महान् वर्णराशिर्वेद इति नाम्ना प्रख्यातोऽस्मिञ्जगति। तस्मादेवास्माकं कर्तव्याकर्तव्ययोः सम्यग् बोधोऽजायत इति वैदिकेति विशेषणप्रदानस्य तात्पर्यं सुविज्ञेयम्।

स च वैदिको धर्मः प्रत्नतमः। इतरधर्मपथापेक्षयाऽत्यंतं पुराणः सर्वेषां तेषां पितामहः। तदुपदिष्टानि तत्वानि त्रिकालाबाध्यानि नितांतं परिशुद्धानीति तस्मै धर्माय सनातनेति विशेषणं दत्तम्।

धर्मशब्दस्य प्रकृतोऽर्थोऽतीव व्यापकः। धर्मो नाम स्वभावो वस्तुमात्रस्यौत्पत्तिको गुणादिर्वा। किंत्वत्र प्रदत्तविशेषणद्वयविशिष्टो धर्मो न स्वभावो नापि गुणस्तादृशोऽपितु 'धृ धारणपोषणयो' रित्यस्माद्धातोः कर्तरि मप्रत्यये सति सिद्धस्य धर्मशब्दस्य जगतो धारणपोषणकर्ता इत्यर्थो ज्ञेयः। तदुक्तम्—

'धारणाद्धर्म इत्याहुर्धर्मो धारयते प्रजाः' इति। धर्मस्याभावे जगतः प्रलयप्रसंग इति न तस्यार्थो ज्ञेयः। अपितु धर्मस्यास्तित्वेन मानुषाणां यथा कल्याणं जायते तथा तदभावे न स्यादित्यर्थः। मनुष्याणां वर्तने पश्वादिभ्यः प्राणिभ्यो यद्वैशिष्ट्यमस्ति तद्धर्माभाव उत्तरत्रापि तथैव स्थास्यतीति संभावनमशक्यप्रायम्। जगदिद प्रतिवत्सरं विचक्षण भवतीति दुरभिमानः कैश्चिद्यथा ध्रियते धर्माभावे तादृशोऽप्यभिमानस्तैर्धर्तुमशक्य एव स्यात्। किं बहुना धर्मस्याभावेऽस्य जगत ऐहिकमामुष्मिकं च कल्याणं न भविष्यतीति तदर्थो ज्ञेयः। अत एव स जगतो धारक इति यदुक्त तच्छोभनमेवोक्तम्।

भगवत्पूज्यपादैरपि गीताभाष्योपक्रमे 'जगतः स्थितिकारणं प्राणिनां साक्षादभ्युदयनिःश्रेयसहेतुर्यः स धर्मो ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्च श्रेयोऽर्थिभिर्यथाधिकारमनुष्ठीयमान' इति तस्योभयविधमपि लक्षणं प्रदर्शितम्।

यद्वद्रोगनिवारकं किमप्यसाधारणमौषधादिकं विपिनादौ स्थितमपि व्याधिं निरसितुं नालमपितु तदानीय यथाशास्त्रं सेवने सत्येवेष्टं फलं प्रदातुं तत्प्रभवति। तद्वद्धर्मोऽपि यथाशास्त्रमनुष्ठितश्चेदेव जगतः कल्याणकर्ता भवति। नाननुष्ठितो विधिमतिक्रम्यानुष्ठितो वा। 'सत्यं मितं हितं च वचनं धर्मः' इति ज्ञातमपि न तावतैव पूर्तिः। व्याहारसमये तस्य विनियोग आवश्यकः।

एतावता—ब्राह्मणादिभिर्मानुवैर्यथाधिकार यथाशास्त्रं चानुष्ठितश्चेत्तेषा-मैहिकामुष्मिकमंगलसाधकः सञ्जगतः सुव्यवस्थाया निदानं यः स प्रकृतो धर्म इति तस्य योगरूढोऽर्थः पर्यवस्यति । 'सुखस्यालौकिकोपायोपदेष्टा अपौरुषेयः शब्दराशिर्वेदः' इति वेदस्य लक्षणं वेदतत्त्वज्ञाः कथयंति । तेन वैदिकधर्मो नामालौकिकसुखोपायोपदेशकर्त्रा वेदेनोपदिष्टो मानवमात्रेण स्वीयाधिकारानुसार कर्तुमर्हः क्रियाकलापो धर्म इति सिध्यति । तस्य प्रवाहा-त्मनानादित्वादपूर्वद्वारा नित्यत्वाद्वा सनातनत्वं बोध्यम् ।

धर्मो न देशकालाद्यनुसारेण विपरिवर्तते । नीतिः परं तदनुसारतस्तथा भवति । यतो नीतिर्विशेषेणैहिकेष्टसाधिका । धर्मस्तु पारलौकिकेष्टप्रदः प्राधा-न्येनेति धर्मनीत्योर्नैक्यम् । किंत्वंगागिभावो ज्ञेयः । अत एव कश्चनैको धर्मोऽपि न नीतिस्तथा काचनैका नीतिरपि न धर्म इत्यपि संभवति । यथा—'आततायिनमायातं हन्यादेवाविचारयन्' इतीयं क्षत्रियाणा नीतिर्विद्यते किंतु

'मा हिंस्यात्सर्वा भूतानी' ति वेदवचनात्सोऽधर्म इत्यपि वक्तुं शक्यम् । तथा श्रौतयज्ञकर्मणि पशोर्विशसनं विहितत्वाद्धर्मोऽपि प्राणाघाता-न्निवृत्तिरित्यहिंसादृष्ट्या नैव नीतिः । अथाप्यंगत्वात्तस्य 'फलवत्सन्निधावफलं तदंग' मिति नियमाच्च न तद्दुरितोत्पादकमिति धर्मरहस्यम् ।

धर्म. कालत्रयेऽप्येकरूप एव । यथा—

द्विजैः प्रत्यहं सायं प्रातः सध्योपासन विधेयम्, मनुष्यमात्रेण भगवच्चिंतन कर्तव्यम्, सत्यतत्वस्य विचारो विधेयः, वाङ्मनःकायै-र्हिंसा नानुष्ठेया, तेषां विशुध्यै प्रयतितव्यम्, गुरवः सेव्याः, सत्य हितं मितं च ब्रूयात्, सदाचारेण वर्तितव्यमेवमादीना धर्माणा स्वरूपं सर्वदा सर्वत्रैकरूपमेवास्ति । न तत् कदापि कुत्रापि विपरिवर्तते । नीतिस्तु नैवम् ।

यथा--पुंभिः स्वीयकुलक्रमागतां विद्यां कलां वाभ्यस्य संसारोपयोगि-वित्तार्जनं विधेयम्, स्त्रीभिर्गृहकृत्यादिकार्यं सुव्यवस्थया संपादनीयम्, स्त्री-पुत्रभृत्यादियुतकुटुंब एकेनैवाध्यक्षेण भाव्यमितरैस्तदधीनत्वेन वर्तितव्यम्, स्त्रीष्वप्ययमेव न्यायो बोध्यः, पुंसा पुरुषोचितवस्त्रादिकं धार्यम्, स्त्रीभिर्वनि-तोचितवसनालंकारादेर्धारण कर्तव्यम्, पुरुषैः शिखावर्जं शिरआदिषूत्पन्नानां केशानां क्षुरादिना निष्कासनं कारयितव्यम्, सुवासिनीभिर्महिलाभिश्चि-कुरभारकुंकुमतिलककंकणादीनि सौभाग्यचिन्हानि नित्यं धार्याणि, मूर्धा वसनाचलादिनाऽऽवृतः कार्यः, इत्यादीनि यानि नीतेरुदाहरणानि तेषु देश-कालाद्यनुसारतः पार्थक्यमपरिहार्यम् ।

धर्मवन्नीतिरपि प्राणिनां सुखायैव प्रवृत्ताऽस्ति । तेनाऽऽपाततदृष्ट्या धर्मनीत्योः पृथक्करणमशक्यप्रायमिति धर्माय प्राधान्यमदत्वा केवलं नीतावेव भारसर्वस्वं क्षिपद्भिर्जनैः 'सत्यम्, दया, क्षमा, यमनियमौ, अस्तेयम्, ब्रह्म-चर्यम्' इत्यादयो धर्मा अपि नीतेरुदाहरणत्वेन प्रदर्शिताः । तेन ते जनाः प्रायशो धर्मनीत्यौ वैपरीत्येनाधिगच्छंतीति तेषां धर्मनीतिविषयका आचार-विचारा अपि तदनुरोधेनैव प्रचलंति ।

सनातनवैदिकधर्मिणस्त्वलौकिकस्येष्टस्यालौकिकं साधनं धर्मं मन्यते । ऐहिकेष्टं तु धर्मस्यानुषंगिकं फलं भावयंति । अतो यमनियमब्रह्मचर्यादयो नैव नीतिरपितु धर्मास्त इति सप्रमाणं ब्रुवंति केवलं सद्वर्तनमेव नीतिरिति च । अतस्तेषां दृष्ट्या धर्मः प्रधानं नीतिरप्रधानं तस्यांगम् । नेतरजनवद्धर्मा-त्पार्थक्यं स्वातंत्र्यं च तस्या इति कल्पयन्ति । अत एव महर्षिप्रणीतेषु धर्म-ग्रंथेष्वाचाराय यादृशं महत्वं प्रदत्तं तैर्न तादृशं नीत्यै दत्तं दृश्यते । आचार-मेव ते प्रवृत्तिधर्मं ब्रुवन्ति । ऐहिकोत्कर्षस्य साक्षान्निदानं सः । तदुक्तम् —

**" आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ॥**
**आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः ॥**
**आचाराद्धनमक्षय्यमाचारो हंत्यलक्षणम् ॥**

**दुराचारो हि पुरुषो लोके भवति निंदितः ॥**
**दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ इति ॥**

स चाचारो यद्यपि वर्णाश्रमावस्थाद्यनुसारतः पृथक् पृथग् भवितुमर्हति तथापि तदुत्पन्नो धर्मो न पार्थक्यं भजते । नीतिरप्याचारस्यैवैको भागोऽर्थविभागशास्त्रं सेति ते ब्रुवंति ।

" अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः " तस्माद्धर्मः प्रधानम् । आचारस्तस्य मुख्यमंगम् । नीतिराचारस्यैकदेश इति स्थितम् ।

इत्येवं धर्मस्य जगद्धारकत्वेन प्राधान्याद्भारतीयार्यजनाना निखिलापि प्रवृत्तिर्धर्मप्रधाना वर्तते । तेषामर्थकामावपि पुरुषार्थौ धर्मोपसर्जनतया तिष्ठतः । धर्ममनुल्लंघ्यार्जितं वित्तमर्थशब्देनाभिधीयते । तथा विध्यूढाया सवर्णायां स्त्रिया समुत्पादिताया संततेः सुशिक्षणादिनैहिकामुष्मिकेष्टस्य संसिध्यै समर्थीकरणं कामशब्देनाभिलप्यते ।

पुरुषार्थो नामाऽऽनंदः । यतः सर्वैरपि प्राणिभिः स प्रार्थ्यते । पारंशुद्धधर्माचरणेन यथाऽऽनंदो जायते । न्यायार्जितवित्तसंसाधितोक्तविधकामेनापि च तथैवाऽऽनंदः संभवति । धर्मशून्यावर्थकामौ परिणामे न हितावहौ भवतः । अतस्तौ पुरुषार्थाविति वक्तुमशक्यम् ।

अयं धर्मो धर्मसंबद्धावर्थकामौ चामुख्यौ पुरुषार्थाविति वक्तव्यम् । यतो मोक्ष एव परमः पुरुषार्थ इति सिद्धांतः सुप्रसिद्धः । मोक्षो नाम मुक्तिः । दुःखहेतुशरीरेंद्रियमनःप्राणकामक्रोधलोभमोहमदमत्सरादिभ्यः प्रमोचनम् । तेन विना प्रकृताऽऽनंदो न सिध्यति । अत इत्थमात्मा मोक्ष एव जीवमात्रेण संसाधितुमर्हत्तमः पुरुषार्थः । अर्थकामोपेतो धर्म एव तस्य चित्तादिशुद्धिद्वारा साधनभूतः पुरुषार्थः । तथा च ' तमेतं वेदानुवचनेन विविदिषंति यज्ञेन दानेन तपसाऽनाशकेने ' ति श्रुतिप्रमाणतो युक्त्यनुभवाभ्यां चाधिगंतव्यम् । स च धर्मो विशुद्धैकरूप एव तत्वतो विद्यते । किंतु कालांतरादिना प्राणिनां चित्तेषु

कामाद्युद्भवेन तस्य शुद्धं स्वरूपं विलुप्य नैकविधं कृत्रिमं रूपमागतं तस्य त एव पृथक् पृथक् पंथानो विज्ञेयाः । तस्य सर्वस्य दिग्दर्शनात्प्राक् सनातनार्य-धर्मस्यासाधारणानि तत्वानि कानि साधरणा गौणा वैकल्पिकाश्च धर्माः क उत्सर्गापवादौ च कानित्यादीनां विमर्शं कुर्मः ॥ इति धर्मविमर्शे उत्तरार्धे उपोद्घातविमर्शः ॥

---

# धर्मविमर्शे वर्णाश्रमव्यवस्थापरामर्शः ।

**चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।**
**भूतं भव्यं भविष्यं च सर्वं वेदात्प्रसिध्यति ॥ १ ॥**

अथ ब्राह्मणादिवर्णव्यवस्था ब्रह्मचर्याद्याश्रमव्यवस्था च, शुभाशुभकर्मा-नुसारमुत्तमाधमं पूर्वोत्तरं जन्माऽऽत्मनो नित्यत्वमेकत्व च, जनिमृतिप्रवाहात्मन संसारस्य दुःखहेतुत्वमितीमानि चत्वारि सनातनवैदिकधर्मस्यासाधारणानि तत्वानि संति । एतेभ्यस्तत्वेभ्यो यादृशं महत्त्वं वैदिकधर्मो ददाति तादृश महत्त्वं तेभ्यः कोऽपि धर्मः पंथा वा न ददाति । प्रत्नैः सनातनवैदिकधर्मीयैः पुंभिर्वर्णाश्रमसुव्यवस्थाया अत्यादरेणो यावान् यत्नः कृतो भारतीयेषु जनेषु तस्य यावान्शुभपरिणामः संवृत्तस्तेषामस्थिमांसादिषु स यथा दृढं प्रविष्टश्च, तावान् यत्नोऽन्येन केनापि तदर्थं न कृतः । तेन सा व्यवस्थेतरत्र कुत्रापि दृढभूमिबंधा नैवोपलभ्यते । अतः सा वैदिकधर्मस्यासाधारणं तत्वमित्युच्यते ।

अत्र केचनाधुनिका विद्वन्मन्या इयं वर्णाश्रमव्यवस्था न वेदकालीना अपित्वर्वाचीना स्मृतिकालीना सा । अतोऽवैदिकत्वादस्मद्राष्ट्रस्यावनतेर्निदानं सा जातेति ब्रुवंति । तस्या उन्मूलनमवश्यं भाव्यमित्यपि प्रलपंति । किम-

धिकेन तस्या विघाताय येनकेनेति न्यायमाश्रित्य यत्नमपि ते महात्मानः प्रकुर्वंति । किंतु फललाभस्तत्र वैनाशिकसिद्धांतान्नातिरिक्त उपलभ्यते । वर्णाश्रमव्यवस्था राष्ट्रस्यावनतेः कारणं तस्या उन्मूलनेनैव राष्ट्रमुन्नतकोटावारूढं स्यादियं कल्पनैव विक्रममस्तिष्कोपजीव्येति भ्रमः । यतो वर्णाश्रमव्यवस्था यावत्सम्यगासीदस्मिन् भारते वर्षे तावदिदं राष्ट्रं जीवदवस्थं समुन्नतं चासीत् । यदा त्वनेकैः कारणैः सा विपर्यस्तेव संवृत्ता यस्य यस्य यद्यदिष्टं स्यात्तत्पशुवदेव तेन तेनानुष्ठेयमित्यव्यवस्था प्रसृता सर्वत्र तदारभ्यैवेदं राष्ट्रमधोगतिपथपथिकं संवृत्तम् ।

'वर्णाश्रमव्यवस्था न वैदिकी स्मार्ता सें' त्युक्तेरभिप्रायो वेदे तस्या उल्लेखो नास्ति । अपितु ब्राह्मणादयश्चत्वारो वर्णास्तेषां पृथक् पृथग् धर्माः ब्रह्मचर्यादयश्चत्वार आश्रमास्तेषां नियमाश्चेत्येवमादयः कल्पना मनुयाज्ञवल्क्यादिभिः स्मृतिकारैः कृता इति चेद्बाढम् ।' तुष्यत्विति न्यायेन क्षणं तथांगीकारेऽपि तेन राष्ट्रस्याकल्याणं कुतो जातमिति न ज्ञायते । राष्ट्रस्याभ्युदयकारिण्यस्ताः कल्पना आसन्निति प्राक् प्रदर्शितमेव ।

आदौ वर्णानामाश्रमाणां चोल्लेखो वेदे नास्तीत्युक्तिस्तेषां भ्रष्टमतीनां तद्विषयकमज्ञानं द्योतयति । यतो ब्राह्मणराजन्यविशां शूद्राणां च सोत्पत्तिकोल्लेखो वेदचतुष्टयान्तर्गतपौरुषे सूक्ते सुप्रसिद्धः । स चेत्यम्—

"ब्राह्मणोऽस्यमुखमासीद् बाहू राजन्यः कृतः ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत । इति ॥ तथा— 'नूतनं ब्रह्मणा ऋणं पाशूनामस्ति सुन्वताम्'

अ. अ. व. ६।३।४

'त्यान्नु क्षत्रियान् अव आदित्यान् याचिषामहे' इति ।

अ. ६ अ. ४ व. ५१

'क्षत्रस्य त्वा परस्पाय ब्रह्मणस्तन्वं पाहि' ।

शु. य. अ. १८ मं. १९

'विशस्त्वा धर्नणा धर्मणा वयनतुक्रमाम० '।

'ब्रह्मणे ब्राह्मणं क्षत्राय राजन्यं मरुद्भ्यो वैश्यं तपसे शूद्रं तमसे तस्करमित्यादि '। अ. ३०

'ब्रह्म धारय क्षत्रं धारय विशं धारय ' इति।

'संशितम इदं ब्रह्म संशितं क्षत्रमजरमस्तु जिष्णुर्येषामस्मि पुरोहितः। एषां क्षत्रमजरमस्त्वेषां राष्ट्रं सुवीरं वर्धयामि।' अथर्वणवेद का. ३ सू. १९

'मयि क्षत्रं पर्णमणे मयि धारयताद्विशम्। इंद्रमहं वणिजं चोदयामि।'

'ब्राह्मणो जज्ञे प्रथमः।'

'ब्राह्मण एव पतिर्न राजन्यो न वैश्यः।'

'राजानः सत्यं गृह्णान।'

'उग्रो राजा ब्राह्मणं यो हिनस्ति।'

'निर्वै क्षत्रं हिनस्ति हंति वर्चोऽग्निवारब्धः'।

'ब्रह्मचारी चरति। मृत्योरहं ब्रह्मचारी'॥

अथर्वणवेद कांड ३।५।६ म. १२

'ब्रह्म जिन्वतमुत जिन्वत क्षत्रं उतजिन्वत नॄन्० धेनुर्जिन्वत मुत जिन्वत विशोहतरक्षांसि० [ऋग्वेद अ. ६।३।१६

'ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् ब्रह्मास्मीति। तदेकं सन्न व्यभवत् तत् क्षत्रमत्यसृजत् तद्विशमसृजत। शौद्रं वर्णमसृजत तन्न व्यभवत् तत् श्रेयोरूपमत्यसृजत धर्मम्। तस्माद्धर्मात्परं नास्ति। तदेतत् ब्रह्म क्षत्रं विट् शूद्रः अग्निरिंद्रो वसवः पूषा देवेषु ब्राह्मणः क्षत्रियो वैश्यः शूद्रो मनुष्येष्वभवत् ' [शतपथ ब्रा. अ. १ कांड १० ते १५

सामवेदे छांदोग्योपनिषदि- 'त्रयो धर्मस्कंधाः यज्ञो ऽध्ययनं दानमिति प्रथमः तप एव द्वितीयः ब्रह्मचार्याचार्यकुलवासी तृतीयः ब्रह्मसंस्थो अमृतत्वमेति ' इत्यादिषु परःसहस्रेषु वेदवाक्येषु तत्र तत्र ब्राह्मणादिवर्णाना

ब्रह्मचर्याद्याश्रमाणामवातरजातीना तत्तत्कर्तव्यकर्मणां च सुस्पष्टं निर्देशः समुपलभ्यते । तस्माद्वर्णाश्रमादिव्यवस्था न वैदिकी स्मार्तैव सेति प्रलापो देवानां प्रियस्येति भृशमुपेक्ष्य एव ।

तदिदं निखिलं वेदोपदिष्टं वर्णाश्रमादीना तत्वं संस्मृत्य भगवान् मनुराह—

**चातुर्वर्ण्यं त्रयो लोकाश्चत्वारश्चाश्रमाः पृथक् ।**
**भूतं भव्यं भविष्यं च सर्वं वेदात् प्रसिध्यति ॥ ९७ ॥**

**बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम् ।**
**तस्मादतत्परं मन्ये यज्जंतोरस्य साधनम् ॥९९॥ इति ॥ अ. १२**

स्थितेऽप्येवं वर्णाश्रमादीनामनादित्वे सापेक्षास्त इत्यविवादम् । यतो मानुषादिप्राण्यधीनास्ते । अत आकाशवाय्वादिस्थूलभूतसृष्ट्यनंतरं तेभ्यः क्रमशश्चराचराणां पार्थिवादिशरीराणामुत्पत्त्यनंतरं मानुषशरीरमुत्पद्य तस्य संख्योपचये सति व्यवस्थितव्यवहारसिध्यर्थं सम्यङ्नियमावश्यकतायाः सत्वाद्वर्णाश्रमादिव्यवस्थाऽऽविर्भूता शनैः सुदृढा जातेति सिध्यति ।

वृक्षपाषाणादयः स्थावराः पशुपक्षिकीटादयश्च जंगमाः प्राणिनो यद्वदुत्क्रातिनियमानुसारतः प्रथममयोनिसंभवास्ततो योनिसंभवाः संजातास्तद्वन्मनुष्यप्राणिनोऽपि प्रागयोनिसंभवास्ततः क्रमशो योनिसंभवाः संवृत्ताः । स्त्रीपुरुषसंयोगजाः प्राणिनो योनिसंभवा इत्युच्यंते । यदा तु स्थूलदेहयुतौ स्त्रीपुमांसौ नाऽऽसतुस्तदा विश्वसृडिच्छया सर्वसत्वजनन्या भूतधात्र्या. सकाशादेव भवितारः प्राणिनोऽयोनिसंभवा अभिधीयंते ।

चेतनादात्मतत्वादाकाशस्तस्माद्वायुर्वायोस्तेजस्तेजसो जलं जलात्पृथिवी पृथिव्या ओषध्यादयस्ताभ्योऽन्नम् । अन्नात्सूर्यरश्मिपरिपाकतो रसो रसाद्वीर्यं नाम पृथिव्यंतर्गतं समस्तशरीरबीजम् । तस्मात् कीटादयस्ततः पक्ष्यादयोऽनंतरं पशवः सर्वस्यांते मानवा इत्येवंक्रमेणोत्पत्तिर्भूत्वा स्त्रीपुरुषप्रकारद्वयानंतरं योनिसंभवाः प्राणिनो जायंते । तस्माद् नेति योनिसंभूतमानुषाणा-

वृद्धिमतरा वर्णाश्रमव्यवस्था संप्रवृत्तेति न ब्रूयात्कोऽपि । अतः सा व्यवस्था सृष्टेरपेक्षयार्वाचीनापि तस्या अर्वाचीनत्वं न पंच षड् वा सहस्रवत्सरान्तर्गतम् । बलवत्प्रमाणं विना केनचित्स्वैरं तथोक्तं चेत्तन्न तद्दूराद्धेयं स्याद्विवेकिनामित्यवधेयम् ।

वेदराशेरन्तर्भूतः सोपनिषदो ब्राह्मणभागः स्मृत्यनन्तरकालीन इति तस्मिन् तेषामुल्लेखोऽस्तीति कस्यचित्कल्पिते 'मूलं छेदानुरोधेनेति' न्यायेन क्षणभङ्गित्वमपि यावत्स्मृतीनां कालः संदिग्धानुनिर्णयस्तावत्तदुपजीव्यमन्यत्किमपि निश्चिन्वन्ननुमानकरणं साहसमेव । किंच वर्णाश्रमव्यवस्थाऽर्वाचीना स्मृतिकारैः कल्पितायास्तस्या अनुवादो ब्राह्मणभागादिषु कृत इत्येतत्सर्वं स्वैरं मनोराज्यं बालभाषितवदनुपादेयमपि तया व्यवस्थया राष्ट्रस्य हानिः कुतो भाव्या । तस्याः प्राग्राष्ट्रमत्युच्चावस्थायामासीदित्यस्य न कोऽपि परिचय उपलभ्यते । यदा वर्णाश्रमव्यवस्था नासीत्तदेदं भारतं वर्षं सर्वथा सम्पूर्णायावस्थायामासीत् तस्याः प्रवृत्तिसमयादारभ्य तु क्रमशोऽस्य राष्ट्रस्यावनतिरभूत्तेन वयमाधुनिक्यां विपन्नावस्थायां पतिताः स्म इत्यन्वयव्यतिरेकाभ्यां केनापि प्रदर्शयितुं न शक्यते । यतः कस्यापि राष्ट्रस्येतिहासो द्वित्रिसहस्रवत्सरेभ्यः प्राक्कालीनो विश्वासार्हश्च नैवोपलभ्यते । अस्य भारतवर्षस्य यः स्वल्प आनुमानिक इतिहासो दृश्यते सोऽपि वर्णाश्रमव्यवस्थायाः प्रतिकूल इत्यपि वक्तुमशक्यम् । यदा हि पुराकाले सूर्यसोमवंशीया रामचन्द्रयुधिष्ठिरप्रभृतयो राजानोऽस्मिन् भारते सम्राज आसंस्तदापीयं वर्णाश्रमव्यवस्था सम्यगासीदिति निश्चितं ज्ञायते । यतः सम्राजो सामन्तैर्वा भूपालैर्वा स्वस्ववर्णाश्रमीयाः स्वीयप्रजास्तदीयवर्णाश्रमधर्मानुसारतः 'पुत्रवत्परिपालनीयाः नियामयितव्याश्चेदं राज्ञामावं धार्मिकं कर्तव्यमिति' सर्वेषां सदानीन्तनानां जनानां सुदृढा मतिरासीत्ते राजानोऽपि तथैव वर्तनमकुर्वन् ।'

किंच वेदे स्मृतिषु च यद्वर्णाश्रमाणां वर्णनं समुपलभ्यते तद् सिद्धार्थनिर्देशवद्वर्तते नैव साध्यार्थोपदेशवत् । तेन भूतकालीनलौकिकस्थितेर्निर्देशो

वर्तमानभविष्यत्कालीनलोकस्थितेर्नियमश्चेत्येतदर्थकं तद्वर्णनं बोध्यम्। अत एव वर्णाश्रमव्यवस्थानादिरस्तीति सनातनधर्मानुयायिनो वदंति। अनादिर्नाम स्वाभाविकी विश्वसृष्टिनियमितेति यावत्। अत एव 'चातुर्वर्ण्यं मया सृष्टं' 'सह यज्ञाः प्रजाः सृष्ट्वा' इति गीतायां भगवताऽभिहितम्। ईशनियत्या भवितॄणि निखिलान्यपि कार्याणि स्वाभाविकान्येव। यथाग्नेरौष्ण्यमपां शैत्यमित्यादि। नहि तत्र लोकप्रसिद्धः कार्यकारणभावोऽस्ति। तद्वद्वर्णाश्रमव्यवस्थायाः श्रुतिस्मृत्योश्च न कार्यकारणभावः। अपि त्वौष्ण्यशैत्ये यथा वह्निजलयोर्लक्षके तथा श्रुतिस्मृती वर्णाश्रमव्यवस्थायाः सम्यग्ज्ञापक इति तयोर्लक्षणभावो ज्ञेयः। अर्थाद्वर्णाश्रमाणां तन्मुख्यधर्माणां च बोधो वेदस्मृतिभ्यामेव जायते। नान्येन केनापीति रहस्यम्।

ब्राह्मणादयो वर्णाः स्वभावतः सर्वत्रोत्पद्यंते। अतः सत्वादिगुणप्रकृतिकानां पुंसां स्त्रीणा च जगति कुत्राप्यस्तित्वं सुलभम्। अतः स्वभावत उत्पन्नानां तेषां तत्तत्साधारणधर्मस्योपदेशापेक्षा प्रायो नातीवावश्यिकी। शास्त्रं तु तेषां स्वाभाविकीं प्रवृत्तिं नियमयति। नोत्पादयतीति ज्ञेयम्। मानवानां हितार्थैवाविर्भूतैर्ऋषिभिः पूर्वकल्पीयवर्णाश्रमधर्मान् स्मृत्वा तेषां भगवत्प्रेरणया शब्दैर्निरूपणं कृतम्। त एव वेदाः स्मृतयश्चेति ज्ञेयम्। ननु युष्मदुक्त्यनुसारतो वर्णाश्रमधर्मा मनुष्यमात्रसाधारणा इत्यभिमतं चेद्वर्णाश्रमव्यवस्था वैदिकधर्मस्यासाधारणं तत्वमिति कथं वक्तु शक्यमिति चेदत्रोच्यते।

यद्यपि सत्वादिगुणानुसारतो वर्णाश्रमाश्च प्राणिमात्रसाधारणाः संति। तथापि प्रकृतवर्णाश्रमास्तथा न। ते तु भारतवर्षीयवैदिकधर्मीयेष्वेव मानवेषु व्यवस्थिताः। तेन वर्णाश्रमव्यवस्था वैदिकधर्मस्यासाधारणं स्वरूपमिति वक्तुं न कोऽपि प्रत्यवायः। अध्ययनं युद्धं वाणिज्यं सेवेमानि कर्माणि शांतिः शौर्यं धनार्जनमज्ञत्वाद्येते गुणाश्च यद्यपि यथासंभवं प्राणिमात्रसाधारणास्तथापि केवलेनाध्ययनादिकर्मणा शांत्यादिगुणेन च प्रकृतब्राह्मणादिवर्णानां सिद्धिर्न भवति। शांतिगुणयुतमध्ययनं प्रायः सर्वत्रोपलभ्यते। शौर्याद्युपेतं युद्धादिकं

मपि तथैवानुभूयते । अतः सर्वसाधारणकर्मणा प्राप्यमाणं ब्राह्मण्यादिकं सर्वत्र संभवति । अत एव विठ्ठल विठ्ठलेति ब्रुवंतं शुकं प्रति पक्षिणां मध्ये ब्राह्मणं, युद्धशीलं कुक्कुटं प्रति क्षत्रियम्, पुरीषभुजं वायसं प्रति श्वपचं वदंति प्राकृता जनाः । किंतु वैदिकानां प्रमाणसिद्धांतादिपरिभाषानुसारतो विमर्शे कृते केवलेनाध्ययनादिकर्मणा शांत्यादिगुणेन च प्रकृतवर्णसिद्धिर्न संभवति ।

अपितु गर्भाधानजातकर्मचौलोपनयनप्रमुखसंस्कारैः संस्कृतपित्रोः साकाशाज्जन्म, वेदाध्ययनादिविद्या, संध्योपासनादि नित्यकर्म, शांत्यादिगुणः, शीलं चेत्येतैश्चतुर्भिर्विशेषैरुपेतो मनुष्यः प्रकृतब्राह्मणादिर्भवितुमर्हः । अर्थाद्वर्णत्वाधायके गुणकर्मणी स्तेव नापितु जन्म विद्या कर्म गुणः शीलं चेत्येते चत्वारः समुच्चयेन तत्प्रयोजकाः । यस्मिन्नेतच्चतुष्टयांतर्गतमेकैकं वर्तते तारतम्येनैव स ब्राह्मणो ज्ञेयः । अतस्तत्प्रधानं ब्राह्मण्यम् ।

ननु जन्मविद्याकर्मगुणशीलेषूत्तरोत्तरं ज्याय इत्यभिमतं चेत्केवलेन जन्मना ब्राह्मणाद्यपेक्षया विद्यया ब्राह्मणादिः श्रेष्ठो जन्मविद्याभ्यां ब्राह्मणाद्यपेक्षया कर्मणा ब्राह्मणादिरुत्तमो जन्मविद्याकर्मभिर्ब्राह्मणाद्यपेक्षया गुणशीलेन ब्राह्मणादिः सर्वोत्तम इत्यायातीति चेद्बाढम् । अथापि केवलेन जन्मना ब्राह्मणाद्यपेक्षया विद्यायुतेन तेन ब्राह्मणादिः श्रेष्ठो जन्मविद्याभ्यां ब्राह्मणाद्यपेक्षया कर्मयुताभ्यां ताभ्यां ब्राह्मणादिः श्रेष्ठो जन्मविद्याकर्मभिर्ब्राह्मणाद्यपेक्षया गुणशीलयुतैस्तैर्ब्राह्मणादिः सर्वोत्तम एवेति नैव विस्मर्तव्यम् ।

केवल जन्मनैव केचन ब्राह्मणादयः स्युः । यथा ब्राह्मणादेर्धर्मस्याऽऽचरणाभावेऽप्यस्माकं पित्रादयो ब्राह्मणादय आसन्नतो वयमपि ब्राह्मणादय इत्यभिमानेनेतोऽस्मिन् भारते बहवो ब्राह्मणाः क्षत्रियाश्च संति । केवलया विद्ययापि ब्राह्मणादयः स्युः । यथा परदेशीयविद्याविभूषिता आधुनिकाः केचन ब्राह्मणादीनां शास्त्रविहितान्यग्निहोत्रादीनि कर्माणि यथेष्टं कथमपि कुर्वाणानां ब्राह्मणादिं वेदमूर्तिं वा प्रख्यापयंतोऽपि स्युः । यथा वयमपि ब्राह्मणादयः स्म इति ब्रुवंतो भारतवर्षीया ब्राह्मणेतराः केवलैर्गुणैरपि केचन

ब्राह्मणादयः स्युः । यथा शांतिशौर्यादिगुणैः शीलेन च संपन्ना एतद्देशीयान्यदेशीयाश्च साधवः शिष्टाश्च ।

किंतु वैदिककर्माभिमतानां ब्राह्मणादिवर्णानां सिद्धिः केवलेन जन्मना क्रियया कर्मणा गुणेन वा नैव जायते । अपितु चतुष्टयसमुच्चयेनैव सा संभवति । तादृश एव मनुष्यो ब्राह्मणोऽयं क्षत्रियोऽयमित्यादिमुख्यवर्णबोधकशब्देन निर्देष्टुमर्हः शास्त्रानुसारतः । अतः केवलाय कर्मणे विद्यायै गुणशीलाय वा स्वेष्ट महत्त्वं दत्वा वयमध्यापनादिकं ब्राह्मणादेः कर्म कुर्म इति ब्राह्मणादयः स्मः । ब्राह्मणादेर्विद्याऽस्माभिः कथमप्याप्तेति वयं ब्राह्मणादयः । ब्राह्मणादेर्गुणशीलेऽस्मासु वर्तेते । अतो वयं ब्राह्मणादय इति प्रख्यापनं यद्यपि नायोग्यं तथापि नैव तद्वैदिकधर्मसंमतं प्रकृतं ब्राह्मण्यवर्णत्वप्रयोजकम् । अपितु गौणमेवेत्यध्यापनादिकर्ता ब्राह्मणादीतरो ब्राह्मणादिवर्णीय इत्यभिधातुमनर्ह एवेति बोध्यं शास्त्रं चेत् प्रमाणमभिमतम् ।

नन्विदं युष्माकं वर्णादिव्यवस्था यदा प्रथममेव प्रवृत्ता तदा जन्मना ब्राह्मणादयः कुत्रासन् । तदानीं " चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः " इति वचनाद्गुणकर्मभ्यामेव ब्राह्मणादयो वर्णाः संस्थापिताश्चेदिदानीमपि तथा कर्तुं कः प्रत्यवाय इति चेदुच्यते । ' तुष्यतित्विति ' न्यायेन वर्णव्यवस्थाप्रवृत्तेः प्रागभवप्रतियोगित्वांगीकारेऽपि तदानीतनैर्लोकोत्तरप्रज्ञावद्भिरीश्वरकल्पैः पुंभिर्नानवानां प्राकृतिकस्वभावमालोच्य तदनुसारं वर्णाश्रमव्यवस्था कृता । यस्य पुंसो यस्मिन् कर्मणि स्वभावतः प्रवृत्तिर्दृष्टा तस्य तस्मिन्नेव कर्मणि नियोजनं नियमितम् । निसर्गतः शांतिशौर्यादिगुणसंपन्नानां पुंसां विभजनेन नियोजनानंतरं तेषां तेषां गुणानां कर्मणां च समुच्चयो भाव्य इति वर्णानां जन्मतः स्थिरीकरणप्रवृत्तिः पातिता । तस्माद्यद्यपि तदितरसामाजिकोन्नतिनियमवद्वर्णव्यवस्थाया अप्यादावनियमेनोपक्रमणमासीत्, तथापि पश्चाद्गुणकर्मादीनामनर्थावहः संकरो मा भूत्, आनुवंशिकसंस्कारदार्ढ्यतस्तेषां वृद्धिर्भाव्येति वर्णविभागस्य परिशुद्धं जन्मैवादिमं मुख्यमंगं तैरीश्वरकल्पैः

पुरुषैः प्रतिष्ठापितम् । विश्वसृण्नियमिमनुलक्ष्य तैः कृतव्यवस्थया च वर्णा उत्पत्तिसिद्धाः सन्तीति भावना लोकेषु तत्कालादारभ्य दृढं समुत्पन्ना । ईशान-सामर्थ्यसंपन्नैराधिकारिभिः पुंभिः सा व्यवस्था कृतेति भगवत्कृता सेत्युच्यते इति जानीहि ।

वस्तुतस्तु सृष्टेः प्रवाहतदनादित्वेन प्राथम्याभावात् त्वदुक्ताऽऽशंकैव नोदेति सुविज्ञां मनस्सु । अथापि परीत्या ऽऽरे बोधनीय इति नियममनुसृत्ये-दमुत्तरं बोध्यम् । सृष्टेरनादित्वादेव च भगवानपि 'चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः' 'यः कल्पः स कल्पपूर्वः' इति नियमाद्गतकल्पीयं जन्मसिद्धं वर्णविभागं सर्वज्ञत्वात्स्मृत्वाऽस्मिन्कल्पेऽपि तथैव सत्वादिगुणस्य तदनुसारि-कर्मणश्च विभागमनुसृत्य जन्मसिद्धं चातुर्वर्ण्यं मया परमेश्वरेण सृष्टं नापूर्व-मुत्पादितमित्याह । तस्माज्जन्मसिद्धवर्णादिव्यवस्थायाः श्रुत्युपदिष्टत्वात्सर्वज्ञेश-सृष्टत्वादीशकल्पपुरुषश्रेष्ठैः प्रवर्तितत्वाच्च न तस्यां व्यवस्थायां कोऽप्यधुना-तनो मानुषः कयापि रीत्या कथमप्यधिकारीति निश्चितमवगंतव्यम् । अनीश-त्वादसर्वज्ञत्वात्कीटवद्विनाशादिग्रस्तत्वाच्चेति रहस्यम् ।

इत्थं जन्मनैव वर्णविभाग इति स्थिते विद्याकर्मगुणैस्तस्योपबृंहणं परमवशिष्यते । अस्यामेवावस्थायामानुवंशिकसंस्काराणामुपयोगः सम्यक्त्वेन भवितुमर्हति । ते च संस्काराः जन्मतो वर्णव्यवस्थायां सत्यामेव विकसितु योग्या नान्यथा । अत एव परंपराप्राप्तधर्मज्ञानादिष्वस्माकं योऽभिनिवेशः स युक्त एव ।

विश्वेषां प्राणिनां हितं भाव्यमित्युदात्तभावनया प्रेरिताः संतोऽस्मत्पू-र्वजा अलौकिकसामर्थ्यसंपन्ना ब्राह्मणादय इत्थं वर्णादिव्यवस्थां कृतवंतः । सा व्यवस्थेदानीमनुपयोगिन्यस्त्येव न, अपि तु विघातकैवेति तस्या उन्मूलनमत्या-वश्यकं तेन विना नास्माकमूर्जिताऽवस्था स्यादित्यनेकेषामाधुनिकानाम-दूरदर्शिनां पुंसां विचित्रा भ्रान्तिरस्ति । किंतु यैर्महात्मभिरियं व्यवस्था प्रवर्तिता तेषामुद्देशो न सम्यगासीत्, विपन्नावस्थायामस्माभिः पतितव्यमि-

तीच्छा त्तेषामासीत्, इत्येवमुच्छृंखलव्यवहारो न केवलः प्रमादः। अपि तु कृतघ्नतामूलकधृष्टत्वमात्रद्योतकः स इति ज्ञेयम् ॥

भविष्याः संततेर्हितमिच्छद्भिः पूर्वजैः कृतसुव्यवस्थायाः समर्थनाय स्वीयलोकोत्तराया बुद्धेरायुषश्च सर्वथा व्ययं कुर्वत आचार्यादीनुद्दिश्य ' मूर्खास्त ' इति कालिदासवदपशब्दोच्चारणमंतरेणापि प्राणिनां हितकरी प्रामाणिकी सुधारणा सांप्रतिकैरपि कर्तुं शक्येत्यनादिपरंपराया विच्छेदप्रयत्नमविधाय शनैः कृता तादृशी सुधारणा कुतो न सर्वेषां सुखदात्री स्यात् । अपि तु स्यादेवेत्यवगंतव्यम् ॥

इत्थमियमनादिर्वर्णव्यवस्था विश्वसृजा निर्मिता जगद्धितेच्छुभिर्महात्मभिः प्रवर्तिता शिष्टैश्चानादिकालमारभ्य निर्विवादं परिपालिता तदविरोधिव्यवहारेण दार्ढ्यं प्रापिता प्रतिकूलप्राणिकृततद्विरोधिप्रयत्नान्निष्फलीकृत्य यथापूर्वमद्ययावत् स्थिरीकृता । अत ईश्वरस्य देवस्य च सा सुसंमतेति निःसंदिग्धमवगच्छामः । यदीश्वरस्यासंमतं तद्दैवस्यापि संमतं न भवति । ईश्वरदैवयोः प्रातिकूल्ये किमपि वस्तु स्थिरं स्थातुं न प्रभवति । वर्णव्यवस्थयैवास्माकं समाजः सुरक्षितः सन्मंगलभाक् संवृत्तः । वैदिकधर्मवर्णव्यवस्थयोर्मिथः सापेक्षत्वं साहचर्यं वैतादृशमनुभूयते । यत्र वैदिकधर्मो नास्ति तत्र प्रकृता वर्णा अपि न संति । यत्र ते न संति तत्र स धर्मोऽपि नास्तीति ।

संप्रति वर्णादिव्यवस्थाया बाहुल्येनाव्यवस्थितत्वमुपलभ्यते । केचन द्विजादयो वर्णानां वेदशास्त्रादीनां च परिरक्षणं कर्तुं यथासंभवं यद्यपि यत्नं विदधति । तथापि समाजव्यवस्था तत्तद्वर्णधर्मानुसारं प्रायो न दृश्यते । तेन सनातनधर्मो दुरवस्थामापन्न इवानुभूयते । इदानींतनः प्रत्येकोऽपि मानुषः स्वेष्टस्वैरस्वातंत्र्याभिनिविष्टः संवृत्तः, प्रत्नं समाजबंधनं मास्त्विति सर्वेषां मतिकल्पना, तत्तद्वर्गीयाः कार्याकार्यनियमाः सुदूरं याताः, निखिलोऽपि मानुषसमूह ऐहिकसुखाभासमात्रलोलुपः संदृश्यते । तेन तस्याचरणं नैव धर्मप्रधानम् । किंत्वर्थप्रधानमेव । धर्मप्राधान्यं निरस्य तत्स्थानमर्थप्राधान्येनाक्रांतम् ।

सर्वेषां स्वैरस्वातंत्र्योपोद्बलको धर्मोऽपेक्षितः । अत एव ब्राह्मणादयः सर्वेऽपि वर्णाश्रमधर्मपराङ्मुखा दरीदृश्यंते । तत्रापि ब्राह्मणा आधिक्येन । येषां वर्णाश्रमव्यवस्थापरिपालनमाद्यं कर्तव्यं येषां तत्र मुख्याधिकारोऽस्ति यानुद्दिश्य—

"ब्राह्मण्यस्य हि रक्षणेन रक्षितः स्याद्वैदिको धर्मस्तदधीनत्वाद्वर्णाश्रमादीनाम्" इति भगवत्पूज्यपादाचार्या अवोचंस्तैर्ब्राह्मणैरपि ब्राह्मणसंज्ञायाः कियन्महत्वमस्तीत्येतद्विस्मृत्य विद्याकर्मगुणाना स्वस्मिन्नभावेऽपि केवलेन जन्मना प्रकृतब्राह्मण्यनिष्पत्तिर्जायत इति दुरभिमानं धर्तुमुपक्रांतम् । तर्हि क्षत्रियादिभिस्तथाऽभिनिवेशो धृतश्चेत्तत्र किमाश्चर्यम् । अत एव केवलेन जन्मना मुख्यं ब्राह्मण्यं सिध्यति । तेनैव चेतरेभ्यः श्रेष्ठत्वमायातीति वृथाभिमानवतस्तानुद्दिश्य विद्याद्यन्यतरांगविभूषिता इतरे द्विषंति 'यूयं कीदृशा ब्राह्मणा' वयमेव यथार्थब्राह्मणा इति च ब्रुवंति । विमृश्यमाणे तु नानुचितं तत् तेषां तथा भाषणम् । यतस्तादृशं ब्राह्मणमुद्दिश्य शास्त्रेऽपि 'ब्राह्मणब्रुवो ब्रह्मबंधुः' इति तथाविधाभ्यां शब्दाभ्यां व्यवहारो दृश्यते । इत्थं वर्णव्यवस्थाया अव्यवस्थितेराश्रमव्यवस्थापि विपर्यस्ता संवृत्ता ।

तथाहि—केन कदा कुत्र कस्माद्वा कस्य विवाहः। कदा वाध्ययनं कार्यं केन कदा कस्यामवस्थायां कार्यं किमर्थं वा गृहस्थेन भाव्यमैहिकेतिकर्तव्यतापूर्वानंतरं पारलौकिकं कर्तव्यं कुत्र विधेयमंते पारिव्राज्यं केन किमर्थं स्वीकार्यमित्यादेर्भानं कस्यापि नावशिष्टमिव दृश्यते । अधिकारविषये तु सर्वोऽप्यत्र व्यामोह उपलभ्यते । राष्ट्रकार्याधिकारी कः, शिरसि समाजसुखस्य भारं वोढुं कः पुमान् समर्थः, परदेशे केन गंतव्यं, स्वीयदेशे स्थित्वैव स्वपरहितकरं कार्यं केनानुष्ठेयं, केन वा धर्मोपदेशकेन भाव्यं, कलाविज्ञानादिप्रसारः कैर्विधेयः, पौरोहित्यकर्म कैः कर्तव्यमेवमादिविषये कोऽपि निर्बंधो नेदानीं दृश्यते । यस्य यदभीष्टं स्यात् तद्योग्यताया अत्यंताभावेऽपि कर्तुमुत्सुकः स परिदृश्यते । तेन 'विनायकं प्रकुर्वाणो रचयामास वानरम्' इत्येतन्मापद सर्वत्र नरीनर्ति ।

वर्णाश्रमव्यवस्थाया इत्थं दुरवस्थितेः सर्वोऽपि मानवसंघो दुःसहे भृशं विचित्रे कालचक्रे पतितः। प्रत्येकः पुमान् स्त्री वा नैजाधिकारबाहिर्भूतं कार्यं कर्तुं प्रयतते। किंतु सदिच्छायां सत्यामपि तस्य तस्याश्च भविष्यन् प्रयत्नः प्रायशो निष्फलो भूत्वा तस्य प्रतिकूलः परिणामः प्रथमं वर्णाश्रमेषु भूत्वा ततः सनातने धर्मे भवतीति नाप्रसिद्धमेतत्।

तात्पर्यं, वर्णाश्रमव्यवस्था वैदिकधर्मस्यैवासाधारणं तत्वमित्युद्घोषयामः। तदितरधर्मानुयायिषु केषुचित् दृष्टेष्वपि वर्णगुणेषु जन्मादिभिर्नियमिता वर्णव्यवस्था तेषु नास्तीति सा सनातनधर्मेतरधर्माणां स्वरूपमिति प्रमाणतः कस्यापि वक्तुमशक्यमेवेति बोध्यम् ॥ इति धर्मविमर्शे वर्णाश्रमव्यवस्थाप्रकरणम् ॥

---

# धर्मविमर्शे पूर्वोत्तरजन्मविमर्शप्रकरणम्।

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ॥**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १ ॥**

यस्य यथा सम्यगसम्यग् वा कर्म स्यात्तथा तस्य प्रागुत्तरं चोत्तमाधमं जन्म भवतीति वैदिकधर्मस्य द्वितीयमसाधारणं तत्वम्। प्राक्तनशुभाशुभकर्मानुसारेण इदं वर्तमानं जन्म प्राप्तम्। तथैतज्जन्मीयपुण्यापुण्यकर्मानुसारेणाग्रेऽप्युत्तमाधमं च जन्म भविष्यतीत्येवं सनातनवैदिकधर्मस्य सिद्धांतः। तमिमं वेदसिद्धांतमितरे धर्मा मतानि वा नाङ्गीकुर्वन्ति। यद्यप्याधुनिकः कश्चन पंथा वैदिकं पुनर्जन्मतत्वं स्वीकरोतीव भाति तथापि स्वीयपंथानुयायिनामज्ञजनानां बुद्धिभेदसाधकः स स्वीकार इति ज्ञेयम्। यतः प्रामाणिकाप्रामाणिकयोस्तत्वयोः कथंचित्संकरं विधाय तथा स्वीकरोति तत्पथप्रवर्तको जन इति तदीयपुस्तकेभ्योऽवगम्यते।

ननु सा पूर्वोत्तरजन्मविषयिणी कल्पना केवलं कल्पनैव न तस्या किमपि सोपपत्तिकं प्रमाणं परिदृश्यते। एतादृशकल्पनाविष्करणस्य व्यसनमेवास्ति वैदिकधर्मिणाम्। ते हि वस्तुनो निराकारस्य निर्गुणस्येश्वरस्य साकाराः सगुणा मूर्तयः कल्पयंति। भूतप्रेतपिशाचादीन् कल्पयन्ति। पुण्यपापे कल्पयंति। स्वर्गनरकौ कल्पयंति। अयं स्पृश्योऽयमस्पृश्योऽयं शावाशौच्ययं जननाशौच्येवमादिका विविधा भ्रांताः कल्पनास्ते कुर्वंति। तदंतर्भूतैवेयं पूर्वोत्तरजन्मविषयिणी तेषां कल्पनेति चेत् तत्र ब्रूमः।

सनातनधर्मिणां शास्त्रानुसारिणी काऽपि कल्पना नैव निर्युक्तिका निष्प्रमाणा च। तथासत्यश्रेत्ता एतावत्कालपर्यंतमविच्छिन्नतया नैवातिष्ठन्। तासां समर्थनार्थं च वेदादिशास्त्राणां षण्णां दर्शनानां प्रन्नानां महात्मनां च प्रवृत्तिरपि नैवाभविष्यत्। पूर्वजन्मगोचरं यद्यपि लोकप्रसिद्धं प्रत्यक्षं प्रमाणं नास्ति तथाप्यनुमानादिप्रमाणं न वर्तत इति न। यत किमपि कार्यं कारणमंतरेण न संभवतीति सर्वानुभवसिद्धः सिद्धांतोऽस्ति। ततो जन्मनोऽपि कार्यस्य कारणेनावश्यं भाव्यमेव।

ननु जन्म न कार्यं नापि परिणाम इति चेन्न प्रत्येकस्यापि जतोर्वर्तमानं जन्मकार्यं वा परिणाम एव यत स्तदुत्पद्यते। उत्पद्यमानं च वस्तुमात्रं कार्यं परिणामो वेति सुप्रसिद्धम्। यथा क्षीरं दधि घट पटो वेत्यादि यस्य वस्तुनः प्रागभावःसन्ननंतरं भावः अस्तित्वं प्रासिष्यति। पुनरपि कालांतरेऽभावो भवति। तद्वस्तु कार्यं परिणामो वेति निर्विवादं वक्तुं शक्यते। गोभक्षितस्य तृणादेरेव दुग्धं परिणामः। अद्य गोस्तनेभ्य एव निष्क्रांतं पयः श्वो दधि भवति। तस्यैव दध्नस्तक्रं नवनीतं घृतं च क्रमशो जायते। तद्वन्मृदो घटादिर्बीजाद् वृक्षादिश्च ज्ञेयः। अर्थात् कालादिना परिच्छिन्नत्वं,कार्यस्य परिणामस्य वा चिन्हं भवितुमर्हति। तत्र कालपरिच्छेदो नाम ध्वंसप्रागभावप्रतियोगित्वम्। अत्यंताभावप्रतियोगित्वं देशपरिच्छेदः। अन्योन्याभावप्रतियोगित्वं वस्तुपरिच्छेदः। इत्येवमेतत्परिच्छेदत्रयं क्षीरभूरुहकुंभादौ वर्तते।

तथाहि— क्षीरादिकमुत्पत्तेः प्राङ् नासीत् तदनंतरमपि प्राशनच्छेदनभेदनादौ कृते न स्थास्यति। अत्र वर्तते तत्र नास्ति पटो न घटादिक मिति सर्वप्रसिद्धानुभवात् सिध्यति।

परिणामस्यैव विकार इति नामांतरम्। विकारः प्रत्येकोऽपि परस्पर विभिन्नो भवति। अत एव 'यावद्विकारं तु विभागो लोकवत्' इत्युत्तरमीमांसायां भगवता बादरायणाचार्येण सूत्रितम्। विकारः सर्वोऽपि विभागः- मिथो विभक्तः परिच्छिन्न इति तस्यार्थः। आकाशः पृथिव्यादितो विभक्तः पृथिव्यादिकं चाकाशात् पृथगिति सुप्रसिद्धम्। अतः स विकारः एवं सर्वत्र विकारत्वं द्रष्टव्यम्। प्रत्येकोऽपि विकार उत्पत्तिभागत्रगंतव्यः। अस्मदादीनां शरीरं तदितरेभ्यः पदार्थेभ्यो भिन्नम्। अतस्तद्विकारः। विकारत्वादुत्पत्तिमत्। उत्पत्तिमत्वाच्च कार्यम् परिणामो वा तदिति सिध्यति। एवं स्थिते यद्यत् कार्यं तत्तत्सहेतुकमिति दृष्टं पटादिषु दृष्टांतेष्विति कार्यस्यार्थादुत्पद्यमानस्य शरीरस्यापि कारणेनावश्य भाव्यमित्यायाति। तच्च कारणं कार्यस्य प्रागपेक्षितमिति शरीरस्य यत् कारणं तदपि तस्य प्रागावश्यकम्। किंतु यद्वद्दध्नः कारणं दुग्धं वृक्षस्य च बीजम् प्रत्यक्षं दृश्यते। तद्वच्छरीरस्य कारणं न प्रत्यक्षमुपलभ्यते तत्त्वनुमातव्यमेव। अनुमानं तु दृष्टापेक्षमिति शरीरस्य कारण दृष्टानुसारेणैवानुमातव्यमस्ति। दृष्टं नाम साक्षाज्ज्ञातम्। यद्वि वस्तु वयं प्रत्यक्षं पश्यामस्तेन साकं कस्यचित्संबद्धस्य वस्तुनः कल्पनम्। इदमेव दृष्टानुसारेणादृष्टस्यानुमानम्। कार्यस्य दध्नः पूर्ववृत्तिकारणं क्षीरं यथा प्रत्यक्षम्। तथा क्षीरस्य पूर्ववृत्तिकारणं न प्रत्यक्षम्। यतस्तृणजलादिकमेव क्षीरस्य साक्षात्कारणमिति वक्तुमशक्यम्। तथा सति धेनुदेहाद्बहिःप्रदेशे संघीकृतात्तस्मात्कुतो न क्षीरात्मना परिणामोऽनुभूयते। ततो धेनुदेह एव क्षीरोत्पत्तेः स्थानमिति तृणजलादेस्तत्कारणत्वमुक्तम्। किंतु मानुषींव्याघ्रीत्यादिषु स्त्रीष्वन्नमांसादिभिर्दुग्धोत्पत्तिर्जायते नैव तृणादिनातोऽन्नजलयोरेव सर्वसाधारण्येन दुग्धहेतुत्वं वाच्यम्। एवमपि स्त्रीदेह एवान्नजलयोः क्षीरात्मना परिणामोऽवलोक्यतेनैव पुंदेहे। अतो जरायुजप्राणिषु स्त्रीशरीरमेव दुग्धोत्पत्तेः स्थानंसदन्नं जलं च तस्योपादान_

मिति वक्तव्यम् । इयमपि कल्पनैव । यतः स्त्रीदेह एव दुग्धं भवतीत्येतत्प्रत्यक्षसिद्धमपि जलान्नयोः स विकारः कथं तत्र भवतीत्येतन्नैव प्रत्यक्षसिद्धम् । यद्यपि शस्त्रक्रियापटूना भिषजा कथंचित्प्रत्यक्षं जायत इत्युच्येतथापि जनसामान्याना तदप्रत्यक्षमित्यनुमेयमेव तत्कार्यम् । वंध्यायाः गरेताया वा स्त्रियः शरीरे जलान्नयोर्दुग्धात्मना परिणामो न भवतीति जीवतत्वमपि शरीरान्तर्गतेतरपरिणामवदस्य दुग्धपरिणामस्यापि प्रामुख्येन कारणमस्तीति वाच्यम् । इमाः सर्वाः कल्पना यद्यप्यनुमानम् । अथापि तत्प्रत्यक्षमूलकं दृष्टानुसारि चेति न विस्मर्तव्यं केनापि ।

शरीरनाम्नो विकारस्यापि पूर्ववृत्ति कारण दर्शितमित्यानुमातव्यम् । तदीयास्तित्वनास्तित्वस्य न प्रत्यक्षेण प्रमाणेन ज्ञानमशक्यमेव । यद्यपि शरीरं प्रत्यक्षम् । पर तस्य कारणं न प्रत्यक्षम् । यत प्राचीन जन्म वर्तमानजनुष. कारणमिति शास्त्रसिद्धातः । अत. प्रत्यक्षस्य कार्यस्याप्रत्यक्षं यत् कारणं तदनुमानप्रमाणस्यैव गोचर इत्याऽऽयाति ।

उक्तदृष्टाते क्षीरं यथा प्रत्यक्ष तथा दार्ष्टान्तिके शरीर प्रत्यक्षम् । क्षीरस्योत्पत्तिस्थान स्त्रीशरीरं यद्वत्प्रत्यक्षं तद्वन्मातृशरीरं स्तनस्योत्पत्तिस्थानमपि प्रत्यक्षमेव । क्षीरस्य निमित्तकारणमन्न जलं च यथान्वयव्यतिरेकाभ्यां निश्चीयते तद्वच्छुक्रशोणितं शरीरस्योपादानं कारणमित्यनुमीयते । यतस्तत्संयोगे सत्यत्र प्रतिबंधान्तराभावे शरीरमुत्पद्यतेऽन्यथा नेति नातिदुश्चरम् ।

किंतु वध्यायाः शरीरेऽन्नजलस्य पय.परिणामोयद्वन्नोत्पद्यते तद्वत्तस्मिन् शरीरे शुक्रशोणितस्य शरीराकारः परिणामोऽपि न जायत इति दुग्धस्य दध्यात्मकः परिणामो येन नियमेन भवति तेनैव नियमेनान्नजलस्य क्षीराख्यः परिणामो जायत इति वक्तुमशक्यम् । दुग्धस्य दधिभवने कालः परमपेक्ष्यते। तस्मिन् किमप्याम्लद्रव्यमनिक्षिप्य तथैव स्थापितं चेदपि कालांतरेण तस्य घनीभावो भवत्येव । अतो दुग्धस्य दध्यात्मको विकारः सृष्टिनियममनुसृत्य भवतीति ज्ञेयम् । न तस्य जीवदधिष्ठानापेक्षास्ति । अन्नादेर्दुग्धीभावे तु

जीवदधिष्ठान वध्येतरस्त्रीशरीरमावश्यकम् । गर्भधारणतद्वृद्ध्योरपि तादृशमधिष्ठानमेवापेक्षितम् । तस्माच्छरीराख्यो विकारो न दधिसदृशोऽपितु क्षीरसदृशः किंवा बीजादुत्पद्यमानवृक्षादितुल्यो ज्ञेयः । अतस्तस्य पूर्ववर्तिकारणविमर्शावसरे क्षीरदध्नोर्न्यायमनादृत्य बीजवृक्षयोरन्नक्षीरयोर्वा न्यायमंगीकृत्य विमर्शः कार्यः ।

जलयुतादन्नादुत्पद्यमानो दुग्धविकारो यद्वज्जरायुजजीवत्स्त्रीशरीरस्थानावलंबी तद्वद्बीजाज्जायमानो वृक्षादिविकारोऽपि विश्वंभरास्थानमाश्रित्य लब्धात्मा भवति । सा वृक्षादिविकारैकस्थानभूता विश्वंभरा सजीवैव । अन्यथा स्थावरजीवशरीराणां तस्याः सकाशादुत्पत्तिरेव नाभविष्यत् । अस्मदादिशरीरान्नखकेशादयो येन नियमेनोत्पद्यंते तेनैव नियमेन पृथिव्याः सकाशादोषध्यादयो जायंते । निर्जीवाच्छरीरान्नखकेशादय उत्पत्तिभाजो न भवतीति प्रसिद्धम् । तस्माद्विश्वंभरापि वृक्षादिवत्सजीवेति सिद्धम् ।

सजीवादेव वृक्षाद्यथा नूतना शाखाः प्रतिशाखा पल्लवादयश्च जायंते । तद्वत्पृथिव्याः सकाशादपि प्रतिदिनं नूतननूतनांकुरादय उत्पद्यंते । अतः कस्यापि सजीवशरीरस्योत्पत्तिः सजीवाच्छरीराद्भवतीत्यवगंतव्यम् । दुग्धाद्यद्दधि भवति तद्दुग्धस्याचेतनत्वात्सृष्टिनियमानुसारतः कालांतरे जायमानो यदृच्छया विकारः । तेन दुग्धस्य सुखं दुःखं वा नैव संभवति । तादृग्विधा कल्पनाप्यशक्यास्ति । अत एव दुग्धाज्जाते दधनि वैचित्र्यं न दृश्यते । परमेकस्मात्सजीवशरीराज्जातेष्वन्येषु सजीवशरीरेषु वैचित्र्यं दरीदृश्यते तानि न सदृशानि भवति । यथा तेषामाकारः पृथक् तथा सुखदुःखादिभोगोऽपि विभिन्न एव प्रायशः । तेषां रुचिर्मतिः सामर्थ्यमित्यादिकं सर्वं न समानम् । अतः शरीराणामुत्पत्तिर्यद्यपि सामान्यनियमानुसारतः संभवति । तथापि तत्तच्छरीरस्य जीवानामवस्थास्वत्यंतं पार्थक्यं विद्यते । तेन शरीरस्योपादानं कारणमधिगतमपि तत्तच्छरीरं प्रति 'अयमहं ममैवेदम्' इति ज्ञाता यस्तस्मिन् वर्तते स तेन शरीरेण सहोत्पद्यतेऽथवा तस्मात्पूर्वमनंतरं च विद्यत इत्युत्थितस्य

प्रश्नस्योत्तरप्रदानेनैव पूर्वोत्तरे जन्मनी स्तो न स्तो वेत्यस्य निर्णयोभवितेति समुत्थितस्य तत्प्रश्नस्योत्तरप्रदानायैव विमर्शं कुर्मः ।

अथेदमुत्पन्नं तत एव कार्यभूतं पाचभौतिकं शरीरंप्रत्ययमहं ममेदमिति वा व्याहर्ता तस्मात्पृथगेवास्ति स एवात्मा सर्वेषाम् । आत्मा न शरीरात्पृथगिति देहात्मवादी चार्वाको वक्ते । तस्य निरसन षड्दर्शनकृद्भिर्महात्मभिस्तद्व्याख्यातृभिः पूज्यैराचार्यैर्विस्तरशः कृतमेवास्ति । अस्माभिरपि प्राक्प्रणीत- 'धार्मिकविमर्शसमुच्चयग्रंथस्याद्यभागान्तर्गताऽऽत्मतत्वविमर्शप्रकरणे कृतमेवेति नेह तस्य पिष्टपेषणवत् पुनरावर्तनं कुर्मः । अपितु सर्वथा निर्णीतं शरीरादिभ्यस्तदात्मपार्थक्यं सम्यगुपजीव्य प्रकृत विमर्शं प्रस्तोष्याम ।

नन्वात्मा यद्यपि शरीरादिभ्यः पृथगस्ति तथापि स तदुत्पत्तेः प्रागासीत् पश्चाच्च शरीरनाशेऽपि स्थास्यतीति कुत उच्यत इति चेन्मंत्रब्राह्मणात्मका अपोरुषेयाश्चत्वारो वेदास्तद्व्याख्यातार. पूज्या आचार्या स्मृत्यादिप्रणेतारो महर्षयोऽन्ये च निबंधकृतो विपश्चिदपश्चिमास्तथात्मतत्वसाक्षात्कारवन्तः साधव ' आत्मा नित्य ' इत्यैकमत्येन मुक्तकंठमुपदशन्तीति ।

ननु शब्दप्रमाण तत् । न तत्सर्वेषामेव जनाना समान प्रमाणं भवितुमर्हति । शब्दस्य प्रामाण्यं तु वक्तृणामाप्तत्वावलंबी विद्यते । तेषा यथार्थवक्तृत्वरूपमाप्तत्वं च श्रद्धानुभवाभ्या सिध्यति । तेन वक्तृषु येषा श्रद्धा वर्तते किंवा तेषा भाषिते मिथ्यात्वादिदोषो नास्तीति बहुवारमनुभवेन यैरधिगतम् । तेषामेव जनाना वक्तृणा शब्दः प्रमाणमिति विश्वास । एतेभ्यो द्विविधजनेभ्य इतरे ये जनाः सन्ति तेषा कृते शब्दप्रमाण नोपकारक भवितुमर्हतीत्यत आत्मा नित्यः स च शरीरोत्पत्तेःप्रागनंतरं च स्थातैवेति सर्वेषा निःसंदिग्धज्ञापनाय कानिचिदितराणि प्रमाणानि प्रदर्शनीयानि नित्यात्मवादिनेति चेदत्र वदामः ।

एकस्मात्सजीवशरीरादन्यत्सजीवशरीर यदुत्पद्यते तत्सर्वथा निर्बीज नैवोत्पद्यते । अपितु तत्स्त्रीयोदरे धारयित्र्याः स्वीयांगरसैस्तद्वर्धयित्र्याः प्रसवित्र्या.

शरीरादन्य बाह्य बीजमपेक्षत एव । जरायुजांडजशरीरयोर्बीजमन्यस्माज्जीवच्छरीराद्वर्धयित्र्याः शरीरे प्रविशतीति सुप्रसिद्धम् । उद्भिज्जस्वेदजशरीरयोरयोनिसंभवत्वात्ताभ्यामपेक्षितं बीजमन्यस्माज्जीवच्छरीरात्तदुत्पत्तिस्थाने नायाति । किंतु तयोरपि बीजापेक्षा वर्तत एव । बीजप्रदातुः पितुः परमपेक्षा नास्तीत्येव । तदपि बीज जीवनशक्तियुक्तमपेक्षितम् । सा शक्तिस्तत्र न स्याच्चेत्तस्माच्छरीर परिणामो न जायते । अतः कस्यापि शरीरस्यास्तित्वाय वर्धनाय ऱ्हासाय च जीवनशक्तिर्यथा कारणं तद्वद्गर्भाशयस्थशरीरबीजस्याभिव्यक्त्यादिकाय तदंतर्गता जीवनशक्तिः प्रधानं कारणम् ।

प्राणवायुर्जीवनस्य निमित्तमिति केचन वदन्ति । किंतु तस्यापि नियमन कर्तुं शक्यमेव । यतस्तं प्रतिरुध्य केचन जीवतीति प्रसिद्धम् । ततस्तस्याप्यधिष्ठाताऽन्यः कोऽपि स्यादित्यनुमान तत्र निष्प्रतिबन्धमेव प्रवर्तते । किंच शरीरस्य बीजावस्थासमये तत्रत्यः प्राणवायुरव्यक्त एवास्ते । तद्वत्तत्तदिंद्रियाणां शक्तयोऽपि तदानीमव्यक्ताः सन्ति । अतस्तेष्वन्यतमस्यापि जीवनैकनिमित्तत्वं वक्तुं न पार्यते । तस्मात्ताः सर्वाः शक्तयो यमेकं सर्वाधारमात्मानं रथनाभिमराइवाश्रित्य तिष्ठति । स्वस्वकार्यक्षमाश्च भवंति । स एव शरीरात्मना परिणममानस्य बीजस्यासाधारणं निमित्तमित्यसंदिग्धं सिध्यति ।

तच्च निमित्त शरीरोत्पत्तेः प्रागतएव तस्मात्पृथगस्तीति स्वीकृतिरेव सयुक्तिका स्वस्मिन्नपशुत्वस्य ज्ञापिकाच । अत एव छांदोग्यबृहदारण्यकाद्युपनिषत्सु जीवस्यैतस्माच्छरीरादुत्क्रमणसमये प्राणाद्याः सर्वाः शक्तयस्तस्मिन्नेवात्मनि लीयंते । ततो बीजभूताभिस्ताभिः सहैव स जीवो यथाकर्म यथा च ज्ञान स्यात्तदनुसारतोऽन्यन्नूतनं शरीरं गृहीतुमितो याति । यत्र च स्वीयकर्मानुसारेण तच्छरीरं गृहीतव्यमस्ति । तत्र वृष्टिद्वारा गत्वान्नात्मना परिणमते । केनापि जग्धस्य तस्यान्नस्य यः परिणामस्तदेव देहबीजम् । तस्मादेव देहो जायते । तस्मिन्नयमहं ममायमित्यभिमानेनाभिव्यक्तः स यावदायुस्तिष्ठति । विचित्रं सुखं दुःखं च भुनक्ति । पुनरपि पूर्ववदेवेदं शरीर विसृज्य परं नूतन

गृहांतु यातीति जीवस्य गत्यागत्योर्विस्पष्टं निरूपणं कृत वर्तते। जिज्ञासा चेत्तत एव साकल्येनावगतव्यम्।

शरीरबीजे विद्यमाना चेतना जीवनशक्तिरेवाऽऽत्मा विज्ञेयः। यतः कस्यापि शरीरस्य जीवनमेव सारभूतं तत्वम्। जीवनशून्यशरीरप्रति शरीरमित्यपि वक्तुं न शक्यते। तच्छवमित्युच्यते लोके शास्त्रे च। पदार्थमात्रस्यात्मैव सारभूत इति तत्तद्वस्तूत्पत्तेः प्राक् तस्यास्तित्वमेव स्वीकार्यम्।

नन्वेवं शरीरस्य सारभूतोऽप्यात्मा तस्य प्राङ् नासीदेव। अपितु सृष्टिनियमानुसारं शरीरस्य परिपूर्णतया वृत्त्यनंतरं तस्मिन्नूतन एवोत्पद्यत इति चेन्न। तथा सति नूतनोत्पन्ने तस्मिन्नितरशरीरस्थाऽऽत्मभ्योऽत्यंतं वैलक्षण्य कुतः। तस्यावस्था तदितरजीवावस्थातः पृथक्कस्मात। एकेनैव सृष्टेर्नियमेनोत्पन्नानामनेकशरीरस्थितात्मनां भोगवैचित्र्यं केन हेतुना भवतीत्यादेराक्षेपस्य योग्यमुत्तरमशक्यमेव। सृष्टेरयं स्वभाव इत्युत्तरं तु न सम्यक्। स्वभावो हि जातिनियतः। नह्येकैकस्या व्यक्तेर्पृथक् पृथग्वैचित्र्य स्वभावा भवंति। अनेकासु व्यक्तिष्वुपलभ्यमानः समानो धर्म एव स्वभावो भवितुमर्हः। यथा वन्हिव्यक्तीना दाहकत्वं शैत्य वापाम्। तत्तद्देशग्रामस्थानादिषु स्थिता अप्यनेके वन्हयः स्पर्शे कृते दहत्येव करादिकम्। नत्वेको दहत्यन्य आर्द्रीकुरुतेऽपरोघनीभवतीत्यनुभवोऽस्ति। अतो दाहकत्वं वन्हेः स्वभाव इत्युच्यते। तस्य जातिनियतत्वात। एवमन्यत्रापि ज्ञेयम्। प्रकृतं वैचित्र्यं तु न जातिनियतम्। प्रतिव्यक्तिभिन्नत्वात्। अतो न स्वभावस्तत्। अस्य नियमस्य कुत्रचिद्दृष्टेऽपि वैपरीत्ये तदपवादस्थलमिति विहायान्यत्रास्य सामान्यनियमस्य सावकाशत्वान्निराबाधं प्रसरं ज्ञेयः। यत्र तु सुखदुःखादिभोगवैचित्र्यस्य प्रतिव्यक्तिपार्थक्यमहर्निशमुपलभ्यते तत्र सृष्टेरयंस्वभाव इति कथन प्रलाप एव। किंच यद्वत्पश्वादय प्राणिनः प्राप्तं भोगं प्रायस्तूष्णीमेवानुभवंति। तद्वन्मानुषोऽपि प्राप्युपस्थित सुखादिभोगं तूष्णीमेव भुनक्तीत्यनुभवः स्याचेत्, एवं स्वस्मात्सत्यन्यस्मिन्नाधिक्ये मत्तोऽधिकः सुखी दुःखी वाऽयमिति ज्ञानं तेन च मनस्तापादिक

पश्वादीना यद्वद् व्यक्तं नोपलभ्यते तद्वन्मानुषेष्वप्युपलब्धमभविष्यच्चेत्तर्हि कदाचित् सृष्टेरयं स्वभाव एवेति कथनं प्रलापो नाभविष्यत्। परं न तथोपलभ्यत इति प्रकृतवैचित्र्यस्य स्वभावत्ववाद उत्पतन्नेव हतो बोध्यः। तस्मादस्मदपेक्षयायं सुखी कस्मादयं च दुःखी कुत इति प्रश्ने स्वभावोऽयमित्युत्तरमुत्तराभास एवेत्यवगंतव्यम्।

मानुषपशुपक्षिकीटतरुगुल्मादिजीवाना शरीरेषु यदाकारवैलक्षण्यं दृश्यते। तस्य तत्तज्जातिनियतत्वात्सृष्टिनियमानुसारत्वाच्च स्वाभाविकं तदिति कथन नायोग्यम्। किन्त्वेको जीवः सार्वभौमशरीरे स्थित्वा मानुषानदस्य परा काष्ठामनुभवति। अपरस्तु स्थावरशरीरे जंगमदेहे वा स्थितः सन्नाध्यात्मिकादिदुःखत्रयाग्निदग्धः कथंचित् जीवतीत्ययमपि स्वभाव एवेति प्रलापस्य को वा विचक्षणस्तुच्छता न ब्रूयात्। तस्मात् प्रतिजीवं पार्थक्येनानुभूयमानमत एवासाधारणं भोगवैलक्षण्यं न स्वभावो नापि तन्निर्हेतुकमिति एकामेनाप्यंगीकार्यमितिज्ञेयम्।

अथ किं तस्य प्रतिव्यक्तिपृथक्तयोपलभमानस्य भोगवैचित्र्यस्यासाधारणं कारणमिति प्रश्ने पित्रोः शरीरगतदोष एव संततेराध्यात्मिकदुःखस्य हेतुः। एवं सृष्टिस्थमानुषादिहिंस्रप्राणिना जातिस्वभाव आधिभौतिकदुःखस्य कारणम्। तथातिवृष्टिरनावृष्टिरित्यादिकमाधिदैविकतापस्य निदानमिति केचन वदति। सुखहेतवोऽपि तद्वदेव कल्पयंति ते। किन्त्वेतत्सर्वं सुखादिभोगवैचित्र्यस्य सामान्यं कारणम्। नत्वसाधारणं निदानम्। तत्त्वन्यदेव विद्यते। न हि तेन विना भोगे पार्थक्यमुपपद्यते। तथेतरगतदोषादीना परिणामप्रसक्तिस्तदितरभोक्तरि कुतोभाव्येत्यस्य निश्चितमुत्तरमुक्तकल्पनया नैव लभ्यते। किं च जीवमात्रस्य निसर्गत एव सुखदुःखे इष्टानिष्टे स्तः। अन्यथा वयमपि प्रकृतवैचित्र्यस्य विशेषनश्चिकित्सामविधाय स्वाभाविककोटौ तन्निक्षिप्य कृतकृत्या अभविष्याम। किंतु प्रत्येकोऽपि चेतनः प्रथमस्य प्राप्त्यर्थं द्वितीयस्य च परिहारार्थमहर्निशं प्रयत्नं कुर्वन्नुपलभ्यते। तदेवैकं कार्यमुद्दिश्य प्रत्येकस्य

नियता प्रवृत्तिर्दृश्यतेचेत्तर्हि तत्स्वाभाविकमिति लपितं निरर्थकमेव । यतः स्वाभाविकस्य सिध्यर्थं यत्नोनापेक्ष्यते । न ह्यग्नावौष्ण्यं जले च शैत्यं यत्न-साध्यम् । एवं परिहारायापि न यत्नापेक्षेति बोध्यम् । अत एव ' स्वभावो दुरतिक्रमः ' इति स्वभावतत्वविदामुक्तिः सगच्छते । तस्मात्स विचित्रः फलोपभोगः सुतरामस्वाभाविक एव । अस्वाभाविकत्वाच्च सकारणः परि-हार्यश्च स इति तदसाधारणकारणविमर्शपूर्वकं निश्चयकरणमत्यावश्यकमिति ज्ञेयम् ।

स्पर्शे कृते वह्निर्दहति । तेन दुःख जायते । निदाघसमये शीतोप-चारः सुखकरः शीतकाल उष्णोपचारस्तथेत्यादिकं प्रत्यक्षतः सिद्धम् । किंतु जन्मादारभ्य चरमश्वासनिर्मोकयावद्यद्यत्सुख दुःखं वा वयमनुभवामस्तस्य सर्व-स्यैव कारणानि साक्षान्निर्देष्टुमशक्यान्येव । तत्र यान्यदृष्टफलानि कालांतर-भाविफलानि वा तान्यनुमेयान्येव । विशिष्टदेशकालकुलेषु तादृशपित्रोरुदरे वा जन्मनः कारणं न प्रत्यक्षं भवितु शक्यम् । यतस्तादृशं जननमदृष्टकारणक-मेव । तच्च कारणमनुमानगम्यमेव । तदनुमानं च दृष्टानुसार्यावश्यकं न तद्विपरीतमिति ।

जन्मत एव रुग्णोऽधः पंगुर्दरिद्री च कश्चनमनुष्यः स्वस्मादन्यं निरोगिणं संपन्नमविकलाग सुखिनं नर दृष्ट्वाय मदपेक्षया सर्वसुखी कुत उत्पन्नः । अहं च रोगादिभिर्जर्जरः कस्मादभवम् । तथा स्वापेक्षयापि सर्वथा दुःखाक्रांतं दीनदीन कंचन वीक्ष्य केन हेतुनाऽयं मत्तोऽप्यतिदुःखी संवृत्त-स्तस्मादहं केन वा हेतुना तथा नेति विचारस्तस्य मनसि कदाचिदुदेति । यतः स्वस्मिन्नितरस्मिंश्च वर्तमानन्यूनाधिकसुखभोगतारतम्यस्य ज्ञानं मनुष्यं प्रत्येव भवितुं शक्यम् । स्थावरादिजीववद्धि स प्राप्तामवस्था तूष्णीं नानु-भवति । अपितु यथासामर्थ्यं तस्याः प्रतिकारादिकं कुरुते । तत्कृतप्रति-कारादिकमपि न केवलं पश्वादिप्रतिकारवदाक्रोशरूपम् । तत्कालस्थायी च । अपितु सम्यगुपायात्मकं दीर्घकालस्थायी च प्रायशो दृश्यते । किंबहुना-

मुकमिदं दुःखं ममास्त्विति तत्प्राप्तेः प्रागेव तत्प्रतिकारस्य व्यवस्थां यथामत्यादिसामर्थ्यं कुरुत एव स मानुषप्राणी । तस्मात्प्रतिप्राणिप्रविभक्तसुखदुःखभोगवैचित्र्यस्यासाधारणं कारणं निश्चेतुं मानुषजीव एव समर्थः । अत एव भगवान्महर्षिर्बादरायणः 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इति धर्माद्यलौकिकवस्तुविमर्शे मनुष्यस्यैवाधिकारं सूत्रयामास प्रसंगतः ।

इत्थमुक्तरीत्या विमर्शं कुर्वन् पुमान् प्रथमं मानुषचेष्टैवोक्तभोगस्य निमित्तमिति जानाति । यतस्तदर्थमेव ह्यहर्निशं स प्रयत्न कुरुत इति सुप्रसिद्धम् । स तस्य प्रयत्नः सम्यगसम्यग्वा यथा स्यात्तदनुरूपमेव सुखं दुःख वा फलं प्राप्नोति मानवः । अतोऽस्मिन्ननादिनि संसारचक्रे कस्यापि महतो वा लघुनो वा कार्यस्य विनाकारणमुत्पत्तेरसंभवादिष्टानिष्टभोगवैचित्र्यं प्रति तत्तज्जीवकृतचेष्टैवनिमित्तमिति सुनिश्चितं भवति । एवं दृष्टफलकचेष्टानुसारतः कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्ये निश्चितेऽदृष्टफलकस्यापि कार्यस्य निमित्तं तस्य च तथाविधं निश्चयं विधातुं प्रयतते विवेकी पुमान् ।

विशिष्टदेशकुलादौ जननं प्रति किमपि कारणं स्यादेवेति मतिर्यथोदेति तद्वत्सुखार्थं कृतेऽपियत्ने यत्र तद्विरुध्दं दुःखमेव दृश्यते तत्राप्यदृष्टं किमपि बीजं भवेदितियुक्तैव भावना । यतस्तद्दुःखमपि भोग एव । स च कार्यमिति निष्कारणोऽस्तीति वक्तुं न शक्यते । यद्यत्कार्यंतत्सहेतुकमिति नियमात् । ततः किं तस्य कारणमिति बुद्धिस्तत्रापि भवितुं योग्यैव । एवं केचन जीवा जन्मत एव सुखिनो दृश्यंते । निंद्याऽऽचरणशीलिनोऽपि ते सुखमेव भुंजते । तथा विशेषतः शिक्षणादिकमंतरेणापि केचन विद्वांस इत्युपलभ्यंते । तद्विपर्ययेण प्रशस्यतमाऽऽचरणशीला अपि सज्जनाः प्रायशो दुःखमनुभवंतोऽवलोक्यंते । इत्याद्युपलभमानाना विचित्राणां प्रकाराणा किं वा कारणं स्यादिति जिज्ञासायामुदितायां सारासारविचारविचक्षणः पुमान् दृष्टानुसारतस्तत्स्यकारणस्यान्वेषणं कर्तुमुद्यतो जायत इति नाप्रसिद्धम् । ततः प्राणिनां यत्नोऽर्थात्कर्मैव तत्तद्भोगवैचित्र्यस्य कारणमिति तेषांप्रवृत्तितः स

निश्चिनोति । किंतु सर्वाण्येवकर्माणि न दृष्टफलानि कानिचित्तत्काल-फलप्रदानि कानिचिच्च विलंबेन कालांतरेण वा फलप्रसवानि विद्यंते । अग्निस्पर्शोऽपां प्राशनं जेमनमित्यादीनि कर्माणि दाहतृप्त्युदरपूर्त्याद्याशुफलप्रदानि । धनिकसेवाध्ययनंपवित्राचरणमनाचारवर्तनमेवमादीनि कालांतरफलोत्पादकानि संति । प्रथमानि दृष्टफलकानि द्वितीयानि त्वदृष्ट-फलकानीत्युच्यंते । स्वीयैतज्जन्मन उत्पन्नतयाकार्यत्वात् कार्यस्य च कारणपूर्वकत्वनियमाददृष्टस्य तस्यासंभवादप्रत्यक्षेणैव जननहेतुना भाव्य-मित्यायाति । न चोत्पद्यमानो जीवः स्वोत्पत्तेः पूर्वक्षणे जन्मनः कारण कर्म कुरुत इतिवाच्यम् । देहेंद्रियादिकंविना कर्मणोऽसंभवात् पित्रोः कर्मणा पुत्रस्य जन्म जायत इति चेत् कर्तृतत्फलयोः सामानाधिकरण्येन यः कार्य-कारणभावः शास्त्रलोकप्रसिद्धस्तस्य भंगप्रसंगापत्तिः स्यात । अतस्तत्रागत्या तस्य प्राग्जननमेवाकामेनापि स्वीकार्यमिति प्राप्नोति । तदपि न भोगयो-न्यतर्गतमपितु कर्माधिकारिमानवयोन्यंतर्गतमेवानुनेयम् । तस्माद्विशिष्टजन्मन-स्तत्रत्यभोगवैचित्र्यस्य च समुपपत्त्यर्थमनिच्छाया सत्यामपि दुरभिनिवेशं सुदूरं विहाय वेदोपदिष्ट पूर्वजन्मसिद्धांत ऐहिकामुष्मिकेष्टानिष्टप्राप्तिपरिहारैक-निदानोऽवश्यमंगीकार्य इति सिध्यति ।

प्रकृतार्थबोधको ऋङ्मंत्रश्चेत्थं श्रूयते—

' विधुं दद्राण समने बहूनां युवानं संतं पलितो जगार '

' देवस्य पश्य काव्यं महित्वाऽद्यममार सह्यः समान '

अ ८। अ. १ । व. १६ । मं. ५

अस्यार्थः सायणभाष्ये स्पष्ट इति नेहोच्यते । तथा—

' बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ' इति ।

भ. गी. ४।५

नन्वेवं युष्मदुक्तरीत्या प्राक्कालीनं जन्मोररीकृतं चेत्तत्रत्यभोगवैचित्र्य-सिध्यर्थं तस्मादपि पूर्वं जन्मांतरमनुनेयमापतति । इत्थं तस्मादप्यन्यत्तस्मा-

दप्यन्यदित्यनवस्थादोषान्नैव निर्मुक्तिः स्यादिति चेत् स्यादयं दोषो जन्मपरपरायामादिमत्यां सत्याम्। सा त्वनादिन्येव। अतो न कस्यापि दोषस्यास्मिन्वैदिकसिद्धांते संभावाशंका वर्तते। तथाहि—

अयं वैदिकः पुनर्जन्मवादी परेणोद्भाविताना सर्वेषामप्याक्षेपाणां सोपपत्तिकं सप्रमाणं च निरासं कर्तुं समर्थः। तं निरुत्तरं कर्तुं पराभिमतः कश्चनाक्षेपः स्याच्चेत् 'प्राथमिक जन्म कथं जातम्' अयमेवेत्यनेक आधुनिका विद्वान्याः परधर्मीयाश्च मन्वते। किंत्वयमाक्षेपः प्रश्नो वाऽस्माकं प्रत्नैराचार्यैरुपेक्षित इति नैव। अपितु प्रसगतस्तत्रतत्रास्य प्रश्नस्य तैः सम्यगेव परामर्शः कृतः। सांख्यादिदर्शनेष्वस्याक्षेपस्य विचारो वर्तत एव। परं सकलदर्शनशिरोमणिभूते वेदांतदर्शने सर्वैरप्याचार्यैरयमाक्षेपः समूलं परामृष्टः। तदनुसारत एवायं प्रश्न इदानीं विचार्यते।

'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीयम्'।
'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्'।

इत्यादिश्रुतिभ्योनिःशेषजगदुत्पत्तेः प्राक्कर्मणोऽप्यभावः सम्यगवगम्यते। अन्यथाऽद्वितीयमेक सदेवासीदिति कथं वक्तुं शक्यम्। वक्ति च वेदस्तथेति कर्मणोऽसत्त्वे तदपेक्षा विषमा सृष्टिं करोतीश्वर इत्यपि न संभवति। सृष्टेरनंतरं शरीरादिविभागापेक्षं कर्म स्यात्। यतः शरीरादिद्वैतमंतरा कर्म नैव संभवतीति प्रत्यक्षतः सिद्धम्। तस्माद्विषमसृष्टिं प्रति कर्मणः कारणत्वं कथमभिधीयते भवद्भिः। तथोक्तं चेत्कर्मायत्तं शरीरं शरीराधीनं च कर्मेत्यन्योन्याश्रयदोषप्रसंगः। अतः शरीरादिविभागोत्तरं भाव्यमानं कर्म भविष्यद्वैचित्र्यस्यार्थाद्विषमसृष्टेः कामं कारणमास्ताम्। किंतु तत्पूर्वं कर्मापेक्ष ईश्वरो विषमां सृष्टिमुत्पादयतीति वक्तुं सर्वथाशक्यमेवेति प्रथमा सृष्टिरेकरूपार्थात्समानैवेति प्राप्नोतीति चेदत्रोच्यते।

नैरंतर्येण प्रवर्तमानश्चराचरजगदात्मकः संसार आदिमांश्चेद्भवदुक्तदोषः प्रसज्येत। किंत्वनादिरेवायं प्रपचः। अतो बीजांकुरन्यायेन कार्यकारणभाव-

स्तत्रसम्यगुपपद्यते । अथ नायमनादिरपितु सादिरेव कारणमंतरेणैव चाय-मुत्पद्यत इत्युक्तौ कस्याप्युत्पत्तौ कारणापेक्षाया अभावान्मुक्तजीवस्य पुनरुत्पत्तिप्रसंगेन मोक्षस्याभावः प्रसज्येत । भोगवैषम्यं च विना कारणं जायत इत्युच्येत । तत्सर्वं प्रत्यक्षविरुद्धम् । ईश्वरो वैषम्यस्य कारणमित्यपि न युक्तम् । तस्य रागद्वेषादिराहित्यात्तद्वत्वे त्वनीश्वरापत्तेश्च । प्रलयावस्थायां तत्तादात्म्यापन्नात एवैकरूपाऽविद्यापि वैषम्यस्य कारणं भवितुमनर्हैव । यतो रागद्वेषमोहाख्यक्लेशत्रयस्य वासनाभिः प्रवर्तमानकर्मापेक्षयैवाविद्या वैषम्यस्य कारणं भवति । तदानीं तत्त्रयस्य तद्वासनाप्रयुक्तकर्मणश्चाभावादिति ।

ननु विना कर्म नैव शरीरम् । शरीरं विना च कर्मापि नेति कर्मापेक्षं शरीरं शरीरापेक्षं च कर्मेत्यन्योन्याश्रयदोषप्रसंगः प्रागुक्तो जागर्तीति चेत्तस्मै महानिद्रां प्रदातुमेव बीजाकुरन्यायेन संसारस्यानादित्वं प्रागुक्तं विस्मृतवानसि किम् । श्रुतिस्मृत्यादिष्वपि ससारप्रवाहस्याविच्छिन्नतया प्रवहतः संसारस्य वानादित्वं सम्यक्तयोपवर्णितम् ।

ननु सनातनधर्मोपदेष्टा युष्माकं वेदादिग्रंथराशिरपि जन्मकर्मणोः परस्परं प्रति कारणत्वात्तत्रान्योन्याश्रयदोषापत्तिर्माभवत्विति जन्मकर्मपरंपराया अनादित्वं वर्णयतीति तदेव प्रमाणमुपन्यस्यते भवद्भिः । किंतु यावत्तेनोपवर्णितं तदनादित्वमर्थतः सुस्पष्टं न क्रियते तावदिदं युष्मदुक्तं सर्वं यथार्थमेवेति मुक्तकंठं वक्तुमशक्यं भातीति चेत्तदनादित्वमर्थतः श्रोतुं भव सावधानस्त्वम् ।

आधुनिका बहुश्रुतास्तानुसरंतश्चेतरे जनसामान्या अनादिर्नामाज्ञेय इत्यनादिशद्बस्यार्थं मन्वते । तन्नैव सम्यक् । यद्यपि वास्तविकोऽनादिः पदार्थः प्रत्यक्षस्यागोचरस्तथाप्यनुमानादिप्रमाणविषयो न भवतीति नैव । अनुमानादिप्रमाणेन ज्ञातः पदार्थोऽज्ञेय इति केऽपि प्रमाणकुशला न वदंति । यद्धि वस्तु केनापि प्रमाणेन कोऽपि कदापि न जानाति तदेवाज्ञेयमित्युच्यते । प्रस्तुता जन्मकर्मपरंपरा तदात्मकः संसारो वा नैवाज्ञेयः । अपितु बीजांकुरन्यायेना-

नादिरित्यनुमानप्रमाणेन सम्यग्विज्ञातुं शक्यः । तथाहि—प्रतिज्ञाहेतुरुदाहरण-मुपनयनिगमनं चेति पंचावयववाक्यसमूहात्मको न्यायोऽत्रेत्थं योजनीयः । अयं जन्मकर्मप्रवाहात्मकः संसारोऽनादिरविच्छेदेन प्रवृत्तत्वात् । यो यो ह्यविच्छेदेन प्रवृत्तः स सोऽनादिः । यथा बीजांकुरप्रवाहः । अनादित्वव्याप्याविच्छेदेन प्रवृत्तिमानयं जन्मकर्मप्रवाहात्मकः संसारः । तस्मादविच्छेदेन प्रवृत्तिमत्वात्तथानादिरयं जन्मकर्मप्रवाहात्मकः संसारः । इत्येवंविधन्यायप्रयोगात्मकानुमानप्रमाणेनानादिरिति ज्ञायत एवेत्यनादिशब्दस्याज्ञेय इत्यर्थकथनं भृशमयुक्तं ज्ञेयम् । अस्मिन्ननुमानेऽसद्धेतुकत्वादिशंकानिरासपूर्वकदृष्टांतविशुध्यर्थ्यमेकमाम्रतरुमवलंब्य विमर्शः क्रियते ।

स चेत्थम्—अयं नातिदूरे संदृश्यमानः संफुल्लकुसुमकलिकाविनिसृतमकरंदपानरज्यमानपिककंठोद्भूतपंचमस्वरश्रवणासक्तस्वातरसिकजनस्पृहणीयः सर्वतः शाखोपशाखासु प्रत्यग्रोद्भूताम्रफल आसमंतात्प्रसृतामोदामोदितदिग्विभागः सान्द्रच्छायो रसालतरुः स्वीयबीजादेवोत्पन्न इत्यविवादम् । पुनरप्येतस्मात्तरोरनेकानि बीजानि भवेयुरेव । तेष्वपि बीजेष्वेकैकस्माद्बीजात्पुनरेकैकस्यैतत्सजातीयस्याम्रवृक्षस्य संभवोऽस्ति । तादृशादेकैकस्माद्वृक्षादन्यान्यनेकानि बीजान्युत्पद्येरन्निति रीत्या तत्पूर्वपरंपरायामन्वेषितायां प्रकृतोऽयमाम्रतरुर्यस्माद्बीजादुत्पन्नस्तद्बीजमप्येतत्सदृक्षादाम्रवृक्षाज्जातम् । स आम्रवृक्षोऽपि तत्सदृक्षादेव बीजाज्जातः स्यादित्यनुमानं प्रमाणं तत्र निष्प्रतिबंधं प्रसरति । एवं बीजाद्वृक्षो वृक्षाच्च बीजमितीयं परंपरा प्रकृतायाः सृष्टेः सापेक्षामाद्यामुत्पत्तिं यावद्गच्छति तत्रापि पूर्वं किमिति प्रश्न उत्तिष्ठत्येव । परं सृष्टेः पूर्वं यद्यपीदं द्वैतं नासीत्तथाप्यस्य कार्यस्य कारणभूतेन बीजेन भाव्यमेवेत्यनुमानं तत्रापि लब्धावकाशं जायत एव । यतो विना कारणं कार्यमुत्पद्यत इति कथनं नैव युक्तम् । अतो विचित्रायाः सृष्टेर्विचित्रं कारणं तस्याः प्रागासीदिति निश्चीयते । नहि तेन विना कार्यमुपपद्यते । प्रलयावस्थाकालीनमपि तत्कारणं बीजांकुरन्यायेनैव स्वीयकारणस्य कार्यमिति प्रलयप्राक्कालीनायाः सृष्टेः कल्पना सम्यगुदेति । सत्येवं बीजवृक्षौ द्वावपि स-

स्वकारणापेक्षया कार्ये स्वस्वकार्यापेक्षया च कारणे स्तः । तेन तयोर्द्वयोर्मध्ये कस्य प्राथम्यं कस्य वानंतर्यमिति प्रश्न इदमादाविदं तत इत्युत्तरं यथाऽशक्यं तथा प्रथमतः कर्म तदनंतरं शरीरं किंवा शरीरं प्रथमतस्तदनंतरं च कर्म-तदपि निश्चेतुमशक्यमेव । अतस्तत्परंपराया अनादित्वमनुत्पन्नत्वं स्वाभाविकत्वं बोध्यं गत्यंतराभावादित्यत्रगंतव्यम् । अत एव स्वप्रागभावाधिकरणकालत्वव्यापकस्वसजातीयकत्वं प्रवाहानादित्वं शास्त्रलोकनश्च प्रसिध्यतीति बोध्यम् ।

ननु युष्माभिरप्यततो गत्वानादिरित्यभिधाय तूर्णीभावावलंबनं विधेयं चेदस्माभिः सा परंपराऽज्ञेयेत्युक्तौ भवतां का हानिः । अनादिरिति किमपि स्वाभ्यूहितं नाम दत्वा स्वीयाज्ञानगोपनापेक्षया तन्न जानीमः । किंवाशक्यमेव सर्वथा तज्ज्ञानमिति स्पष्टोक्तौ का व्रीडा युष्माकमिति चेत्तत्रोच्यते । इयं सृष्टिः कस्माज्जातेत्यस्य ज्ञानमशक्यमेवेति जनसामान्यदृष्ट्याऽभिहितं चेत्तन्नायोग्यम् । किंतु कार्यकारणपरंपरायाः सम्यगन्वेषणपाटवं यस्यां विद्यते तया प्रमाणानपेततर्ककुशलधिया नैरंतर्येण प्रवृत्ता कार्यकारणपरंपरा सोपपत्तिकप्रमाणतो विज्ञातेति सा धीरज्ञेयवादमंगीकर्तुं नूनं व्रीडिता भवत्यत्र । कार्यमात्रं कारणपूर्वकमिति व्याप्तौ निर्दोषतया निर्ज्ञातायामस्य कार्यस्येदं कारणमिति विशिष्य ज्ञानाभावेऽपि यस्मादेतत्कार्यं तस्मादस्य कारणेनावश्यं भाव्यमिति प्रागुक्तया धिया निश्चितं विज्ञायते । दृष्टानुसारत एव सा धीः कारणस्य निश्चयं करोति । बीजवृक्षयोर्दृष्टांत एव वैचित्र्यापादकस्य कर्मणोऽनुमानं कारयतीति ज्ञेयम् ।

सृष्ट्यारंभे ‘स रसालस्तरुः कथं जातस्तन्न ज्ञायतेऽस्माभिः । किंवा तज्ज्ञानमशक्यमेवेत्यज्ञत्वसूचकं तद्वचो युक्तम् । किंवा यतः कारणमंतरेण कार्यं कदापि न जायते । ततः स रसालतरुरपि स्वीयकारणादेवोत्पन्न इति सोपपत्तिकं प्रामाणिकं ज्ञानं तत्र युक्तं तद्विचार्यताम् । या बुद्धिर्बीजवृक्षादिकयोः पदार्थयोर्मिथो हेतुहेतुमद्भावेऽन्वयव्यतिरेकादिना सुनिश्चिता । सा बुद्धिरयमाम्रवृक्षः स्वीयबीजादेवोत्पन्न इत्येव ब्रूयात् । तद्बीजं कुत आगतमिति

प्रश्ने तस्य कारणादिति पूर्वसृष्ट्युत्पन्नाम्रवृक्षस्य कल्पनां च कुर्यात् । इत्येवमग्रेऽपि कल्पयंती सा बुद्धिः कल्पनाप्रवाहस्य विश्रांतिस्थानं नैव पश्येत् । तदा स प्रवाहः सुज्ञेयो वाज्ञेयः किमपि न ब्रूयादपितु स प्रवाहोऽनादिरर्थात्स्वाभाविक इत्येव युक्तं निश्चयं कुर्यादिति समायाति । कार्यकारणपरंपरानादिरेवेत्युक्त्या सार्वत्रिकस्य कार्यकारणभावस्यानादरो नैव जायते । किमप्येकं वस्त्वादौ विनाकारणमेवोत्पद्यत इत्युक्तौ तु तस्य सर्वानुभवसिद्धस्यानादरो दोषः प्रसज्यते । तदपेक्षया जन्मकर्मपरंपरानादिरिति कथनमेवाधिकं समंजसं विज्ञेयम् । परमात्मनोऽचिंत्यानंतशक्तिमाश्रित्य सा सुखेन स्थातुमर्हति । किंचेदं सर्वं कथमुत्पद्यते तन्न जानीम इत्युक्तौ परमेश्वरकृपया लब्धप्रज्ञायाः सम्यगुपयोगोऽस्माभिर्न कृत इति भवति । प्रथमतो जन्म वा कर्म वेति विशेषतोऽज्ञातमपि यज्ज्ञातुं शक्यं तदर्थं यत्नो विधेय इत्येवोचितं तत्र । प्राथमिकं कर्म कुत आगत तदज्ञातमपि सृष्टेरनंतरं जायमानं सुखं दुःखं वा स्वीयकर्मणः फलमिति प्रत्यक्षं दृष्ट्वापि प्राग्जन्मनोऽस्वीकारो भृशं दुराग्रह इति ज्ञेयम् ।

नन्वेतस्मिञ्जन्मनि जायमान दुःखं पूर्वजन्मकृतपापकर्मणः फलमितिचेद्यस्तद्दुःखं ददाति सोऽनीतिमानित्यवश्यवाच्यम् । यतोऽपराधी यदा दंड्य इति निश्चीयते । तदा त्वयेदमकार्यं कृतमतस्त्वा दंडयामीत्युक्त्वा दंडः क्रियत इति व्यवहारतः सिद्धं न्याय्यमेव तत् । अतो यद्दुःखं कारणं विनैव भवतीत्यस्माकं प्रतिभाति तद्यदि प्राक्कृतकुकर्मणः फलं तर्हीश्वरेण तथोक्त्वा तद्दातव्यम् । किंतु भोगसमये कस्यापराधस्येदं फलं नन्वैतत्र ज्ञायतेऽस्माभिरनुक्तत्वादेव । किं च दुःखं यदि पापकर्मणः फलं तर्हि परिशुद्धाचरणशीलास्तुकारामप्रभृतयः सत्पुरुषाः कुतो दुःखिन आसन्निति श्रूयंते । दृश्यते चेदानीमपि दुःखिनः केचन तादृशाः पुरुषाः कस्मादेव तन्न ज्ञायते । अतो नावश्यकता प्राग् जन्मन. प्रतिभातीत्याक्षेपं केचन कुर्वंति । तत्रोच्यते—

यद्यप्ययमाक्षेप आपाततोऽवितथ इव भासते । तथापि विमृश्यमाणे निःसार एवेत्यसंदिग्धम् । तथाहि—सुखं दुःखं वा शुभाशुभकर्मांतरेण न

संभवतीति वर्तमानजन्मन्यनुक्षणंसंप्राप्तानुभवेन सम्यङ् निश्चिते तेनैव सर्वानुभवसिद्धाव्यभिचारिनियमेन जन्माव्यवहितोत्तरक्षण एव प्रायशोऽनुभवगोचरसुखदुःखोपपत्त्यर्थं प्राग्जन्मनः प्रत्यक्षत्वाभावेऽपि तत् प्राचीनं जन्म तत्रत्यं चेदानीमनुभूयमानसुखदुःखैकनिदानंकर्म दृष्टानुसार्यनुमानप्रमाणेन प्रमितं कुर्मः ।

अपराधस्य कथनं विना दंडपातनं न न्याय्यमिति यदुक्त तत्र ब्रूमः। लौकिका नीतिः सा लोकैःप्रस्थापिता। परमेश्वरेणापि तामनुसृत्य जगतो व्यवस्था कार्येति कथनं तु पारमेश्वराधिकारगोचरप्रभूताज्ञानप्रभवं ज्ञेयम्। विचक्षणोऽपि नियुक्तो मनुष्योऽनेकवारमन्यायं कुरुते । सोऽनपराधिनमपि दंडं कर्तुं शक्नोतीति नियुक्तेनाधिकारिणापुरुषेण दंड्यंप्रति तत्कृतापराधं विना दंडो न कार्य इति नियमो लोकैः प्रस्थापितः। परं यस्मिन् पक्षपातस्तत्प्रयुक्तान्यायस्य च गंधोऽपि न वर्तत एतादृशेन सर्वज्ञेनेश्वरेणापि तथा वर्तितव्यमिति लपितं किमपि विचित्रमेव वैदुष्यं ज्ञापयतीत्येवज्ञेयम्।

किं च त्वयेदमकार्यं कृत ततोऽहं त्वां दंडयामीति सर्वशक्तिमतेश्वरेण यद्यपि साक्षान्नोक्तम्। अथापि तज्ज्ञानार्थं कोऽपि पंथा न स्थापित इति न । तत्कृपया मानुषमात्रेण सदसद्विवेकबुद्धि संपादिता। तस्याः शक्तेस्तेन सम्यग्विनियोगः कृतश्चेन्मया प्रागिदं कर्म कृतम्। तस्यैवेद फलं भुनज्मीत्येवं प्रातिस्विग्रूपेण ज्ञानासंभवेऽपि किमप्यकार्यं मया कृतं स्यात्। तेनैवेदं विशिष्टं दुःखं जायत इति सामान्यतो ज्ञान भवितुं शक्यम्। एवं जिज्ञासाबुद्ध्या तेन शास्त्रं दृष्टं चेदपि तस्याकार्यस्य यथार्थं ज्ञानं भवेदेव। किंबहुनाअहमेवत्थ दुःखी कस्मादभवामिति प्रश्नो विवेकिना पुरतः कृतश्चेदप्यशुभाचारस्य सामान्यतो ज्ञानं स्यादेव।

किचान्यत् – ईश्वरो यद्यस्मदादिवत्सशरीरोऽभविष्यत्। तादृशेन च तेनास्मदपराधमनुक्त्वैव दंडः कृत इति च यद्यभविष्यत्तर्ह्यसावनीतिमानि-

स्यपि कदाचिद्वक्तुं शक्यमभविष्यत् । किंतु शरीरादिरहित एव स स्वीयाचिंत्यशक्त्यैतज्जगत्सूत्रं संचालयति । तेन तत्कृतालौकिकव्यवहारो लौकिकनियमैर्नियमयितु सर्वथाऽशक्यमेवेति बोध्यम् ।

यच्चोक्तम्– दुःख यदि पापकर्मणः फलं तर्हि यावज्जीवं सद्वर्तनैकशीलास्तुकारामप्रभृतयः साधवः कुतो दुःखिन आसन्निति तत्रोच्यते । तुच्छतरपदार्थसक्तमाक्षिकावत्सासारिकदुःखसभिन्नसुखलवलोलुपप्राणिसामान्यदृष्ट्या यद्यपि ने साधुपुरुषा दु.खिन इति भासंतेकेषाचित्तथापि वस्तुतस्ते स्वयं न तथेति जानीमः । अन्यथा तैरितरजनवद्दुःखप्रतिकारे यत्नः कुतो न कृतः । तादृशो यत्नस्तै· कृन इति नैव श्रूयते । किंच ते मनसि दुःखिनश्चेत्तेषामाननारविंदेभ्यो विकसितसरोजारविंदविनिःसृतमकरंदवन्मधुरतरा तापत्रयप्रशमयित्री जगदानदप्रदात्री सुपथप्रदर्शयित्री च सरस्वती नैव निःसृताभविष्यत् । तैः प्रायशः स्वीयविपन्नावस्थाया उल्लेखमकृत्वा य· सर्वेभ्य· शर्मप्रद उपदेशः कृतः सोऽपि तेषा दुःखस्याभावमुपोद्बलयति ।

किंच शुभाचरणशीलानामपि तादृशाना सज्जनाना वस्तुतो दुःखमासीदेवेति भवतोऽभिनिवेशश्चेत्तस्मादपि ज्ञापकाद्धेतोस्तेषा पूर्वजन्मैव सुदृढं जायते । यतस्ता कल्पना विना तादृशाना महात्मना दुःखं कुतो भाव्यमित्यस्यासदिग्धमुत्तरं सर्वथाऽशक्यमेवेति ज्ञेयम् ।

एतावता प्रागुत्तर च जन्म विद्यत इद यद्यप्यनुमान तथापि तन्न्यायोपेतं प्रमाणपूतं चास्ति । तद्वदेतद्विचित्राचिंत्यजगद्विषयिण्यस्तत्र तत्र लोकेषूपलभ्यमाना या अनेका· कल्पनाः संति तासु सर्वास्वपीयं पूर्वोत्तरजन्मकल्पना ज्यायसी प्रमाणानपेता च वर्तते । व्यवहारदृष्ट्या समालोचनं कृतं चेदपि मनुष्यमात्रेण विशेषत उत्तमवर्णीयेन मानुषेण पुण्याचरणं कार्यम् । पापाचरणं नैव कर्तव्यमित्युपदेशः पूर्वोत्तरजन्मनः कल्पनायां कृतायामेव कर्तुं शक्यः कृतस्य कर्मणः फलमिह जन्मनि नोत्पन्नमप्याग्रिमजन्मन्यवश्यमेव भोक्तव्यमिति दृढाया भावनायां सत्यामेव त्वं शुभाचरणं कुर्वन्नशुभाचरणं मा

कुर्वित्युपदेशः कर्तुं योग्यः सफलश्च बोध्यो नान्यथा। एव रहसि किमप्यकार्यं केनचित्कृत तदन्येनाज्ञातमपि तदतर्यामिना स्पष्ट ज्ञायत एव। अतस्तस्य फलमनागतमपि परत्रावश्यं भोक्तव्यमियं भीर्मनसि न स्याच्चेत् पापकर्म-वर्जनं पुण्यकर्मानुष्ठानं च सुतरामशक्यम्। केवलाया नीत्याः शिक्षणेन निखिलं पापाचरणं निरसितुमशक्यम्। तद्वदेतस्मिञ्जन्मनि यद्दुःखमनु-भूयतेऽस्माभिस्तत्प्राग्जन्मन्यनुष्ठितकर्मण. फलमित्यधिगममंतरेण कोऽपि शांत-चित्तेन तत्सोढुमुद्यतो न स्यात्। अपितु मयैव दु खिना कस्मादासितव्यम्। इतरवन्मयापि यथेष्टं कार्यमकार्यं वा कर्मकृत्वा सुखभुजा कुतो न भाव्यमित्य-भिसधाय तथा वर्तनेन जनसमूहे भृशमस्वास्थ्यमुत्पादयेत्। तादृश प्राणसंकट-मिदानीमनुभूयत एव सर्वैः प्रतिपदम्। तस्मात् पूर्वोत्तरजन्मपरंपरायाः स्वीकारः केवलया पारमार्थिकदृष्ट्यैवावश्यक इति न। अपित्वैहिकदृष्ट्या-प्यत्यंतं हितकरोऽस्तीति बोध्यं विचक्षणैरिति। इत्थमुपपत्युपेतं प्रमाणसिध्दं च पूर्वोत्तरजन्मनोऽस्तित्वं सनातनवैदिकधर्मस्य द्वितीयमसाधारणं तत्वं विद्यत इति ज्ञेयम्। अथावशिष्टतत्वद्वयस्य विमर्शं प्रस्तोष्यामः॥

---

# धर्मविमर्शे
## आत्मनो नित्यत्वविमर्शः।

**नासतो विद्यते भावो नाभावो विद्यते सतः।**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥**

**भ. गी.**

आत्मनो नित्यत्वं ससारस्य चानर्थत्वमित्येतत्सनातनवैदिकधर्मस्यासा-धारण तत्वद्वयं विद्यते। वस्तुतः पूर्वोत्तरजन्म स्वीकुर्वतो वैदिकधर्मस्यात्म-नित्यत्वं पृथक् तत्वमस्तीत्युक्तेर्नावश्यकता। यत आत्मा नित्यश्चेदेव तस्य पूर्वो-

त्तरजन्मनः संभवो नान्यथेतिसत्यमेव । अथाप्यन्ये केचन धर्मा आत्मनो नित्यत्वं स्वीकृत्यापि तस्य प्रागुत्तरं च जन्म नांगीकुर्वंति । अपरे केचनात्मानं विकारिणं ब्रुवंति । अन्ये त्वात्मा शरीरेणसहोत्पद्यते तन्नाशे च विनश्यतीति जल्पंति । परं भगवान् वैदिको धर्मः शरीरेण साकमात्मोत्पद्यते किंवैकमेव जन्म गृहीत्वा कृतार्थो भवतीति नैव मनुते ।

किंच मरणोत्तरं स्वीयशुभाशुभकर्मानुसारत. सुखावस्थायां दुःखावस्थाया वा जीवेनावश्यं स्थातव्यमिति मन्वता केषाचिदात्मनो नित्यत्वविषयिणी भावना निःसंदिग्धा न दृश्यते । मृत्योरनतरं हि तस्य सुखावस्था दुःखावस्था वा किमेकविधैवास्ति किंवाऽनेकविधा वर्तत इत्यस्य ते विशेषतो विमर्शं कदापि न कुर्वंति । वैदिकास्त्वादावात्मा नित्य इति सिद्धातमनेकाभिरुपपत्यादिभिर्द्रढयित्वा तदनंतरं तस्य प्रागुत्तर च जन्म तदुपजीवि द्वितीयं तत्वमित्युपदिशंति । आत्मनोऽनित्यत्वे तु पूर्वोत्तरजन्मविचारस्यावसर एव न विद्यते । तस्य नित्यत्व एव स विचारोलब्धावकाशो बोध्यः।।

किं चात्मनो नित्यत्वं विना विहितं कर्म कर्तव्यं निषिद्धं च परित्याज्यमित्युपदेशो नैव संभवति । अत एवात्मा नित्य इति वैदिकधर्मस्यासाधारणं तत्वमित्युच्यतेऽस्माभिः । भगवता वासुदेवेनापि—

**" न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ "**

इत्यात्मनो नित्यत्वं विस्पष्टमेवोपदिष्टमर्जुनाय। परं केवलया प्रतिज्ञया न किमपि वस्तु संसिध्यनि । तदर्थं लक्षणप्रमाणे आवश्यके । तदुक्तम्—

' मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणादिति '

तत्रादौ प्रमाणं विमृशामः । ' नासतो विद्यते भावो नाभावो विद्यते सतः । ' इदं गीतावचनमेवात्मनो नित्यत्वे प्रमाणं बोध्यम् । अस्मिन् वचने वैदिकानामत्यर्थं संमत एकः सिद्धांतो भगवता निर्दिष्टः । स चेत्थम्—

असत्पदार्थस्य कदाप्यस्तित्वं न संभवति । सद्वस्तुनश्च जात्वपि नास्तित्वं नास्ति । आत्मा सन् विद्यते । अतस्तस्य नास्तित्वमसंभवीति । स कुतः सन्निति चेत्तस्य नास्तित्वे प्रमाणाभावादेव सः सन् । तदुक्तम् —

‘ अस्त्यात्मा नास्तित्वे साधनाभावात् ’

सांख्य द. अ. ६

ननु सर्वज्येष्ठप्रत्यक्षप्रमाणतोऽनुपलंभ एवात्मनो नास्तित्वे साधनमिति चेन्न । इंद्रियार्थसन्निकर्षोत्पन्नं प्रत्यक्षं सर्वप्रमाणेभ्यः श्रेष्ठमित्यनेके स्थूलदृशो ब्रुवंति । किंतु समीक्ष्यकारिणो विपश्चितोऽपरीक्षितप्रत्यक्षस्य प्रामाण्यमेव न मन्वते । अपितु योग्याबाधितार्थगोचरप्रत्यक्षानुमानयोः प्रमाणत्वं स्वीकुर्वंति ते । आत्मा तु कृतहान्यकृताभ्यागमस्मृत्यनुपपत्त्यादिदोषप्रसंगाद्देहेंद्रियादिभ्यो व्यतिरिक्तो रूपरसादिगुणरहितश्च । अतो न चक्षुरादिबहिरिंद्रियजन्यप्रत्यक्ष-विषयस्तदयोग्यत्वादेवेति न तत्तस्यनास्तित्वे साधनम् । तादृशप्रत्यक्षाविष-यत्वेऽपि न सर्वथाप्रमाणाविषयः । अहमस्मि । अहं जाने । अहं सुखीत्यादि-ज्ञानसुखादिविशेषवत्तया मानसप्रत्यक्षविषयत्वात् । एवं ज्ञानसाधनं चक्षुरादी-द्रियं सकर्तृकं करणत्वात् यद्यत्करणं तत्सकर्तृकं छिदिक्रियाकरणकुठारवदि-त्याद्यनुमानप्रमाणेनापि तस्यास्तित्वं सिध्यति । परदेहादौ तु रथगत्या सारथि-वत् प्रवृत्यादिर्लिंगेनानुमीयते । अतस्तस्य नास्तित्वमसंभवि । किंच स्वस्या-स्तित्व आत्मा कदापि शंकितो नोपलभ्यते । अहमस्म्येवेति स्वविषयकं साक्षा-ज्ज्ञानं तस्य सर्वदास्तीति स्वानुभवप्रमाणेन सः स्वयमेव सिध्यति । अर्थात्तस्या-स्तित्वे तस्यानुभव एव प्रमाणम् । तेन च प्रमाणमूर्धन्येन संसिद्ध आत्मा नास्तीति वक्तुं केनापि सर्वथाऽशक्यमेवेति निश्चीयते ।

इत्थमात्मनोऽस्तित्वे प्रमाणोपपत्तिभ्यां निश्चिते स नित्योऽनित्योवेति प्रश्ने नित्य इत्युत्तरं ब्रूमः । तच्चात्मनो नित्यत्वं पूर्वोत्तरजन्मसिध्यर्थं प्रागुप-वर्णितमपि स्थूणानिखननन्यायेन दृढयितुं प्रकारांतरमाश्रित्य पुनर्विचार्यते ।

यद्धि वस्तु देशेन कालेन वस्तुना च परिच्छिद्यते नाम मर्यादीक्रियते तद्वस्त्वसत्-- सद्भिन्नमनित्यमिति सुप्रसिद्धम् । यथा घटपटादिः पदार्थः ।

स देशेन परिच्छिन्नः। यतो यत्र वर्तते ततोऽन्यत्र तस्याभावोऽस्ति। अयमेव देशपरिच्छेदस्तस्य अत्यन्ताभावप्रतियोगित्वं हि देशपरिच्छेदस्य स्वरूपम्। आत्मा तु न तथा। यतः किमपि वस्तु गृहीतं चेत्तत्सत्सदिति सत्वोपेतमेव प्रतीयते। यथा सन् घटः सन् पटः सन् गौः सन्नश्व इत्यादि न सद्विहायानुभवपथमागच्छति। अतः सत्वं न घटादिवत्परिच्छिन्नम्। अपितु प्रतिवस्त्वस्तित्वेन प्रतीयमानसत्वममर्यादितमेव। तन्नास्तीत्येतादृशं स्थलमेवास्यां जगत्यां न विद्यते। अभावोऽपि सन्नभाव इत्यस्तित्वेनैव प्रतिपदं प्रतीयते। अतः सतोऽत्यंताभावप्रतियोगित्वाभावादपरिच्छिन्नत्वं बोध्यम्। अपरिच्छिन्नत्वाच्च तस्य नित्यत्वमिति सदेवात्मेति प्रागुक्तमेव। 'सदेव सौम्येति श्रुतेः' 'सदिति निर्देशो ब्रह्मणः' इति स्मृतेश्च।

एवं यद्वस्तूत्पादविनाशशालि तदेव कालेन परिच्छिद्यते। यथा स एव घटादिः पदार्थ उत्पत्तेः प्राङ्नासीन्नाशोत्तरं च न भविष्यतीति पूर्वोत्तरकालेन परिच्छिद्यते। ध्वंसप्रागभावप्रतियोगित्वं हि कालपरिच्छेदः। सदात्मा तु न तथा। यत आत्मस्वरूपमर्थात्तद्भिन्नं सत्व न कदाप्युत्पद्यते विनश्यति च। केवलं घटाद्यनित्यवस्त्वाश्रयेण प्रतीयत इत्येव। निराकारत्वात् स्वयं न प्रतीयते। व्यक्त्याश्रयेण प्रतीयमानजातिवच्चंद्राश्रयेण प्रतीयमानग्रहवद्वा साकारं वस्त्वेवैंद्रियकज्ञानविषयं भवति। तदपि न सत्वं विहायार्थादुभयोः सहैव प्रतीतिर्जायते। एवमपि साकार वस्तु जन्मनः प्राङ्नाशोत्तरं च नैव प्रतीयते। अतस्तत्कालेन परिच्छिन्नम्। अर्थाध्द्वंसप्रागभावप्रतियोगीति युक्तितः सिध्यति। सत्वं तु न तथा। तद्घटादिपदार्थोत्पत्त्यनंतरं तेन सह प्रतीतमपि तन्नाशोत्तरं न प्रतीयत इति न। ध्वस्तेतरविद्यमानपदार्थेन सह प्रतीयत एव। किमधिकेन यत्र भूतलादौ किमपि वस्तु नास्ति तत्राप्यत्र सर्वेषामभावोऽस्तीति सत्वं प्रतीयते। अतस्तत् तदितरवस्तुना सह नोत्पद्यते न च विनश्यति। अपितु तदाश्रयेण प्रतीयते केवलं केत्वादिग्रहवदित्येव सुष्ठम।

किं च यस्य पूर्वमभावः सन् पश्चाद्भावो विद्यते तदेव वस्तूत्पन्नमिति प्रसिद्धिः। सत्वस्य तु सद्रूपतया तस्य प्रागभावो नास्ति। साकारवस्तुन

एव प्रागभावो विनाशश्च अनुभवपथमागच्छति । अतस्तदेवोत्पद्यते विनश्यति च । नैव निराकारं सत्तादृशमिति कालेनापरिच्छिन्नं तत् । अपरिच्छिन्नत्वादेव नित्यमिति बोध्यम् ।

एवं यः पदार्थः सजातीयविजातीयस्वगतेतिभेदत्रयविशिष्टः स एव वस्तुपरिच्छिन्नो ज्ञेयः । एकस्मिन् वस्तुनि तत्सजातीयाद्वस्त्वतराद्यो भेदः स सजातीयभेदः । यथा वृक्षे वृक्षातरस्य भेदः । तस्मिन्नेव वस्तुनि विजातीयाद्यो भेदः स विजातीयभेदः । यथावृक्षे पाषाणस्य भेदः । तस्मिन्नेव वृक्षेस्वावयवपर्णपुष्पफलादीना भेदः स्वगत भेदः। इदं भेदाना त्रय सावयवे वस्तुन्येव तिष्ठनि । अतस्तस्मिन्नेवान्योन्याभावप्रतियोगित्वात्मको वस्तुपरिच्छेदः स्यात्तु प्रभवति । न तु निरवयवे सदात्मनीति तस्य केनापि परिच्छेदेनापरिच्छिन्नत्वात् परिच्छिन्नस्यैवानित्यत्वनियमात् सर्वत्रास्तीति शब्देनोल्लिख्यमानं सद्वस्तु नित्यमेवेति सिद्धम् ।

किंच न्यायदर्शनेऽपि तृतीयाध्यायस्य प्रथमाह्निके—

‘ पूर्वाभ्यस्तस्मृत्यनुबंधाज्जातस्य हर्षशोकभयसंप्रतिपत्तेः ’ इत्येकोनविंशतिसूत्रमारम्य ‘ वीतरागजन्मादर्शनात् ’ इति पंचविंशतिसूत्रपर्यंतेन सूत्रसप्तकेन सद्रूपस्यात्मनो नित्यत्वं प्रसाधितं दृश्यते । तथाहि— आत्मा देहादिभ्यो भिन्न इत्यस्य निरूपणं कृत्वा स नित्योऽनित्यो वेति प्रश्नमुत्थाप्याभिहितम्—विद्यमानं वस्तुजातं नित्यमनित्यमिति द्विविधमुपलभ्यते । तेन विद्यमान आत्माऽऽकाशादिवन्नित्य उत घटादिवदनित्य इति संदेहे तस्य निवृत्तिरात्मास्तीत्येतावन्मात्रेण न जायते । अपितु देहोत्पत्तेः प्राक् तन्नाशोत्तरं चापि स विद्यत एवेति समुपपत्तिमन्निरूपणेनैव स्यादतस्तदेव निरूपणं प्रस्तूयते ।

अचिरमेवोत्पन्नं किमप्येकं बालकं हर्षविषादभयाद्यन्यतमावस्थायास्तन्निमित्तस्य च परिचयाभावेऽप्यकस्माद् हृष्यति विषीदति बिभेति वेति तस्य मुखप्रसादमुखमालिन्यमुखविकृत्यादिना दृश्यते । अपत्यानि जन्मदारभ्य स्वभादौ हसंति रुदंति बिभ्यति वेत्येतत्तेषा जनन्यादयः सम्यग् जानंति ।

गोवत्सा अपि स्वप्ने बिभ्यतीति कदाचिदनुभूयते । पक्षिणामपत्यानि जन्मप्रभृत्येव स्वीयशरीरं संरक्षंति । ओतुस्तोकैर्नेत्रोन्मीलनसमकालमेव तत्समीपगमने कथं तिरोहितैर्भाव्यमेतत्सम्यगेव ज्ञायते । इत्येवं परिदृश्यमानहर्षविषादभीतिस्वसंरक्षणादिप्रकारेभ्यः प्राप्तजन्मनि तदानीमननुभूतानामपि तत्तन्निमित्तानां प्राग् जन्मनि समागतानुभवजन्योद्बुद्धसंस्कारजन्यस्मरणेन हर्षादीनि कार्याणि जायंत इत्यवश्यं वक्तव्यतया प्रागुत्तरजन्मवत आत्मनो नित्यत्वं निराबाधं सिध्यति ।

अत्रेत्थं प्रयोगाः । (१) विमना बाल्यावस्था हर्षादिमदात्मवती स्मितादिमत्वात् । (२) स्मितादिमानात्मा तत्स्मृतिमान् तेन विना तदनुपपत्तेः । (३) स्मृतिमानात्मा तन्निदानसंस्कारवान् संस्कारमंतरेण स्मृतेरसंभवात् । (४) संस्कारवान् स पूर्वोत्पन्नानुभववाननुभवं विना संस्कारस्यानुत्पत्तेः । (५) तादृशानुभववानात्मा प्राग्विद्यमानशरीरवान् तेन विनानुभवादेरसंभवात् । (६) तच्चानित्यम् । उत्पादविनाशशालित्वात् । अत्र सर्वत्र यौवनाद्यवस्था दृष्टांततया ग्राह्या ।

पातंजलयोगदर्शनेऽपि कैवल्यपादे सद्रूपस्याऽत्मनो नित्यत्वं भग्यंतरेणोपदिष्टम् । तथाहि— केनचिन्मानुषेण स्वीयकर्मानुसारतो मार्जारजन्म लब्धंचेत्तस्मिन् बैडाले जन्मन्यपि तदव्यवहितप्राक्कालीनमानुपजन्मीयानुभवजन्यवासनैवाभिव्यक्ता भवेत् । न तु कालांतरजन्मीयानुभूतावस्था । यतो-ह्योऽनुभूतावस्था विशेषतः श्रमं विना स्मर्तुमर्हा । कालांतरजन्मीयानुभूतावस्थायाः स्मरणं तु प्रयत्नसापेक्षम् । व्यवहितमेवाभिव्यज्यते नाव्यवहितमित्यत्र विनिगमकं नास्ति किमपीत्याशंकायामाह भगवान् पतंजलिर्महर्षिः—

'जातिदेशकालव्यवहितानामप्यानतर्यं स्मृतिसंस्कारयोरेकरूपत्वात्' इति । जननदेशकालादेर्व्यवधानेसत्यपि स्मृतिसंस्कारयोः सामानाधिकरण्यनियमादानंतर्यमस्तीति समासतः सूत्रार्थः । विस्पष्टार्थस्त्वित्थम्—

अस्मिन्ननादिसंसारचक्रे स्वस्वकर्मानुसारं तासु तासु योनिषु बंभ्रम्यमाणै-र्जीवैर्दीर्घतरेण कालेन सा सा पूर्वयोनिः प्राप्यते । एकदा मानुषजन्मप्राप्त्य-नंतरं पुनरपि तज्जन्मप्राप्तिं यावन्मध्य इतराण्यनेकानि जन्मानि लिप्सायामसत्या-मपि तेन भोक्तव्यानीत्युत्सर्गः । तानि च जन्मान्येकस्मिन्नेव स्थाने काले कुले वा भवेयुरिति नैव नियमः । तेन द्वयोः समानजन्मनोः समानदेशत्वा-दिकं न संभवति । अत एकदैकजन्मप्राप्त्यनंतरं पुनर्यदा तज्जन्मप्राप्तिर्भवति तदा तस्मिञ्जन्मनि तत्सजातीयपूर्वजन्मसंबंधिन्यो वासना मध्ये व्यवधान-बाहुल्येऽप्यभिव्यक्ता भवंति । अंतरा तासामनभिव्यक्तिस्तु तद्योग्यशरीराभावा-देवेति ज्ञेयम् । स्मृतिसंस्कारयोरेकरूपत्वात्— सामानाधिकरण्यनियमात्तयोर्द्वयोः समानजन्मनोरानंतर्यमस्त्येव । व्यवधानेन तन्नापगच्छति । यत्रानुभवस्तत्रैव तज्जन्यः संस्कारः । यत्र संस्कारः स्मरणमपि तत्रैवेति ज्ञेयम् । अनुभवोत्पन्नः संस्कार एव वासना । अतीतसुखादेःस्मरणेनापि सुखाद्यनुभवः संभवति । तस्मात्पुनः संस्कारो जायते । संस्काराच्च स्मृतिर्भवति । तेनानुभवः संस्कारात्मना परिण-मते । संस्कारश्च स्मृत्यात्मनेत्येकमेवांतःकरणं तदुपहितः सद्रूप आत्मा वानुभवसंस्कारस्मरणानामनुसंधातेति संसिध्यति ।

प्रतिजन्म विद्यमानमंतःकरणं स्वसजातीये प्राग्जन्मनि निर्वृत्तसंस्कार-मेव व्यंजयितुं प्रभवति । नानिर्वृत्तम् । यतस्तद्यस्मिञ्शरीरे स्थित्वा यस्याव-स्थाया अनुभवं गृह्णाति पुनस्तज्जातीयशरीरांतरे गमनं विना तस्मिन् प्रागु-त्पन्नसंस्कारा अभिव्यक्ता न भवंतीति नियमोऽस्ति । तस्माद्विशिष्टजन्मी-यानुभवजन्यः संस्कारस्तत्सजातीयजन्मन्येवाभिव्यक्तो भवतीति सिद्धांतो विज्ञेयः ।

इत्थमात्मा नित्य इति तर्कदृष्ट्यापि संसिध्यति । आत्मनो नित्यत्वेऽन्या अपि बह्व्यो युक्तयः संति । तासु कासांचिद्दिग्दर्शनं कुर्मः । कस्यापि वस्तुनो विनाशस्तद्विरोधिबाधकपदार्थादेव जायत इति व्यवहारतः प्रसिद्धमेव। मूषकस्य विनाशो मार्जारसर्पादिभिः क्रियते । कालपरिच्छिन्नपदार्थस्य विनाशः

कालेनापि जायते। आत्मा तु प्रत्येकस्य नैसर्गिकं स्वरूपमित्याकारनाशेऽपि स्वरूपस्यार्थादात्मनो नैव नाशः। यतः पदार्थतत्स्वरूपयोर्न विरोधः। ओतुना मूषकशरीरे विनाशितेऽपि तयोः स्वरूपे सति भेदाभावात् ओतुः स्वरूपं मूषकस्वरूपस्य विघातकं न भवति। वस्तुमात्रस्याव्यभिचारिस्वरूपं नित्यमिति कालोऽपि तद्विनाशयितुमसमर्थ एव। सावयवपदार्थस्यावयवविभागे तत्संयोगनाशात् पदार्थस्य विनाश इत्युच्यते। आत्मनस्तु निरवयवत्वावयवविभागप्रयुक्तस्तस्य विनाशो नैवास्ति।

किंच यावदेक स्वतःसिद्धं स्वप्रकाश निर्विभागमत्यच्छं व्यापकं च ज्योतिः पाचभौतिके शरीरे वर्तते। तावदहमिदं करिष्याम्येतन्न करिष्याम्येनं हन्म्येनं रक्षिष्यामि मत्पुरतः कोऽन्यः पुमान् निर्भीकतया स्थातुं शक्त इत्यादयुच्चैरुद्घोषयन् महताऽऽवेशेन बद्धपरिकरो भवति। परं तदव्यवहितोत्तरक्षण एवाकस्मान्निर्दिष्टे वस्तुतो निर्मले ज्योतिषि—

**'वासांसि जीर्णानि यथा विहाय**
**नवानि गृह्णाति नरोऽपराणि।**
**तथा शरीराणि विहाय जीर्णा-**
**न्यन्यानि संयाति नवानि देही॥'**

इति भगवदुक्तरीत्या तस्माच्छरीराच्छरीरान्तरं गृहीतुं बहिरुत्क्रांते सति प्राक् सावेगं तेनोक्तं सर्वमेवास्तं याति। तच्छरीरमप्यशुच्यस्पृश्यं सत् क्षितौ विपर्यस्तं पतति। काष्ठलोष्ठादिवत्तुच्छतां गच्छति। चंदनकुसुमदुकूलादिभिर्विभूषिते वह्निना दग्धे कुठारेण खंडशश्छिन्नेऽपि च तस्मिन् न सुखं दुःखं वानुभवति। एतादृश सर्वाशुचिनिधानं शरीरं वांतवत्संत्यज्य झटिति बहिर्निर्गतस्य प्रागुक्तज्योतिषोऽत्यंताभावः कैश्चिन्निरर्गलैरुक्तोऽप्यस्मादृशैर्वक्तुमशक्यः। 'अमर्त्यो जीवो जीवापेतं वाव किलेदं म्रियते' इत्यादिश्रुतेः। 'वासांसि जीर्णानी'ति प्राङ् निर्दिष्टभगवदुक्तेः—

' यावज्जीवो निवसति देहे
कुशल तावत्पृच्छति गेहे ।
गतवति वायौ देहापाये
भार्या बिभ्यति तस्मिन् काये ॥

इति भगवत्पूज्यपादोक्तेश्चेति विज्ञेयम् ॥

एतावतात्मा नित्य इति सिद्धम् । सनातनवैदिकधर्मस्य च तदेकमसाधारणं तत्वमित्यपि संसिद्धम् । अथ संसारस्यानर्थत्वमिदमप्यस्य धर्मस्यासाधारणं चतुर्थं तत्वं विद्यते । तत् कुत इत्यस्येदानी विमर्शं कुर्मः ॥

---

# धर्मविमर्शे
## संसारस्य दुःखमयत्वविमर्शः ।

**दुःखांगारकतीव्रः संसारोऽयं महानसो गहनः ।**
**इह विषयामृतलालसमार्जार मा निपत ॥१॥**

जननमरणप्रवाहमुख्य. संसारो दुःखात्मक इति सर्वेषां वैदिकाचार्याणां साधुपुरुषाणां चैकमत्येनोपदेशोऽस्ति । तथाहि–

' प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ' इति न्यायदर्शनसूत्रम् ।

' धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायाभावानां पदार्थानां साधर्म्यवैधर्म्याणां तत्त्वज्ञानान्निःश्रेयसम् । ' इति वै. द. सूत्रम् ।

'अथ त्रिविधदुःखात्यंतनिवृत्तिरत्यंतपुरुषार्थः ।' इति सांख्यदर्शन-सूत्रम् ।

'अथ योगानुशासनम् । योगश्चित्तवृत्तिनिरोधः । तदा द्रष्टुः स्वरूपेऽवस्थानम् ।' इति योगदर्शनसूत्रम् ।

'अथातो धर्मजिज्ञासा '। 'अथातो ब्रह्मजिज्ञासा ।' इति पूर्वोत्तर-मीमासासूत्रे ।

एवं षण्णा दर्शनाना प्रवृत्तिर्मोक्षार्थमिति सुस्पष्टमेव । स च मोक्षो नाम दुःखात्सर्वथा निर्मुक्तिस्तस्यात्यंतनिवृत्तिर्वेति सुव्यक्तम् । सा च निवृत्ति-र्ज्ञातत्वोपलक्षितात्मरूपेत्यन्यदेतत् ।

चराचरात्मकेऽस्मिन् सर्वस्मिञ्जगति मूलतो दुःखं न स्याच्चेत् तस्माज्जीवस्य निर्मुक्त्यर्थं तदत्यंतनिवृत्यर्थं वा शास्त्रस्यप्रवृत्तिर्नैवाभविष्यत् । सा तु नियतोपलभ्यते । सर्वमपि शास्त्रजातं दुःखनिवृत्त्युपायं समुपदिशति । यद्यपि मोक्षस्वरूपे तदुपाये च विप्रतिपत्तयः परिदृश्यंते । तथाहि--

चार्वाकः स्वातंत्र्यं मृत्युर्वा मोक्ष इति ब्रूते । आत्मन उच्छेद एव मोक्ष इति शून्यवादी बौद्धः कथयति । ज्ञानसतानननिवृत्या निर्मलज्ञानोदयो मोक्ष इति विज्ञानात्मवाद्यपरो बौद्धः प्राह ।

आवरणभंगो मोक्ष इत्यार्हतमतानुयायी जैनो ब्रवीति ।

आनंदमये परमात्मनि जीवस्य लयो मोक्ष इति त्रिदंडिभिक्षोर्मतम् ।

लिंगशरीरध्वंसो मोक्ष इति द्वैताद्वैतवादी भट्टभास्करः प्रतिपादयति ।

केवलं सर्वकर्तृत्वं विहाय वासुदेवस्येतरेषा सर्वज्ञत्वादिगुणानां प्राप्त्या भगवतो यथार्थस्वरूपस्यानुभवो मोक्ष इति विशिष्टाद्वैतवादी रामानुजः ।

जगत्कर्तृत्वलक्ष्मीपतित्वश्रीवत्सांकितत्वैतात्त्रितयं विहाय भगवतो ज्ञानेन प्राप्यमाणं यद्दुःखरहितं पूर्णसुखं स एव मोक्ष इति द्वैतवादी माध्वः ।

द्विभुजकृष्णेन सह तदंशभूतजीवानां गोलोके लीलानुभवो मोक्ष इति शुद्धाद्वैतवादी वाल्लभः ।

परमैश्वर्यस्य प्राप्तिर्मोक्ष इति पाशुपतमतम् ।

चंद्रचूडशरीरप्राप्त्या पार्वत्यालिंगनं मोक्ष इति कापालिकः ।

परिपूर्णात्मताया लाभो मोक्ष इति प्रत्यभिज्ञावाद्यभिनवगुप्ताचार्यः ।

पारदरसपानेन देहस्थैर्ये सति जीवन्मुक्तताया लाभो मोक्ष इति रसेश्वरमतम् ।

कारणेन सहैकविंशतिदुःखध्वंसो मोक्ष इति नैय्यायिकः ।

कारणेन सह पापस्य निवृत्तिर्मोक्ष इति तदेकदेशिमतम् ।

दुःखात्यंताभावो मोक्ष इति प्राचीननैय्यायिकाः ।

दुःखस्यानुत्पत्तिर्मोक्ष इति वैशेषिकाः ।

स्वर्गसुखप्राप्तिर्मोक्ष इति मीमांसकाः ।

दुःखसाधनदेहस्य नाशे सति नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिरित्यपि केचन मीमांसका आहुः ।

नित्यसुखसाक्षात्कारो मोक्ष इति कुमारिलभट्टाः ।

दुःखस्यात्यंतिकप्रागभावपरिरक्षणं मोक्ष इति प्राभाकराः ।

परापश्यंतीमध्यमावैखरीति चतसृणां वाचां मध्ये ब्रह्मस्वरूपायाः परावाण्याः साक्षात्कारो मोक्ष इति पाणिनिमतानुयायिनो वैय्याकरणाः ।

प्रकृतेर्लये संजाते पुरुषस्य स्वीयरूपेणावस्थान किंवाऽहंकारनिवृत्ताचौदासीन्यस्य प्राप्तिरथवा तापत्रयस्यात्यंतिकनिवृत्तिर्मोक्ष इति कापिलसांख्याः।

निर्लेपपुरुषस्य कैवल्येनावस्थानं मोक्ष इति पातंजलाः ।

संततोर्ध्वगतिर्मोक्ष इति केचनार्हतमतानुसारिणः । निर्विघ्ना चित्संततिर्मोक्ष इति केचन बौद्धाः ।

वस्तुतो ब्रह्माभिन्नस्य जीवस्य नाहं ब्रह्मेत्याविद्यकमिथ्याज्ञानस्य निवृत्तौ सत्यां स्वीययाथात्म्यसाक्षात्कारस्तादृशसाक्षात्कारोपलक्षित आत्मा वा मोक्ष इत्यद्वैतवेदांतिनः प्रतिपादयंति।

एवं सांप्रतमपि ये धर्माः पंथानश्चोपलभ्यंते तेषामप्यत्रैकमत्यं तर्कशास्त्रीयांतिमपदार्थवदेवावगंतव्यम्। तेषु केचनैहिकोत्कर्ष एव स्वीयं साध्यं मन्वते। केचनास्या सृष्टौ केनापि प्रकारेण श्रैष्ठ्यसंपादनमेव स्वस्याऽऽद्यं ध्येयं स्थिरीकुर्वंति। केषांचित्तु धर्मः कुतोऽवश्यक इत्यस्य ज्ञानाभावेऽपि स आदरणीयो नानादरणीय इति मतं दृश्यते। सोऽहिफेनगुटिकेत्यपि केचन प्रलपंति। इत्येत्र सर्वेषामेतेषामंतिमं ध्येयं यद्वत् पृथक् पृथग् विद्यते तद्वत्तस्य तस्य ध्येयस्य साधनान्यपि पृथगेव संति। केचनेश्वरानुग्रह एव स्वीयध्येयसिद्धेः साधनमिति ज्ञात्वा नैकविधानि तदनुग्रहसाधनानि लोके प्रख्यापयंति। केचनात्मज्ञानं कर्मतत्त्वविवेको ध्यानं समाधिरित्यादीनि स्वीयसाध्यस्य साधनानीति निश्चित्य स्वस्वमत्यनुसारतः कथंचित्तदन्यतमावलंबनं विदधति। परोपकारः पुण्यायेत्युक्तेः 'सेवाधर्मः परमगहनो योगिनामप्यगम्य' इत्यभिहितत्वाच्च परोपकारः सेवा वायमेव धर्मो ज्यायानिति मत्वा स्वार्थैकदृष्ट्या तत्कर्तारः प्राचुर्येणोपलभ्यंते। केचनैहिकं विविधविषयोत्थं सुखमेव मुख्यतः साध्यमिति निश्चित्य तत्साधनसंपादनमेव धर्मस्तदेवास्माकमाद्यं कर्तव्यमिति ब्रुवंति। अथाप्येतेभ्यः सर्वेभ्यः प्रकारेभ्यः संसारस्यानर्थत्वमयत्नेनैव व्यक्तं भवति।

तथाहि—चार्वाकमारभ्य मोक्षगोचरा ये ये प्रकाराः प्राक् प्रदर्शितास्तेषां सर्वेषां मूलेषु सुखमेव प्रकाशते। चार्वाको हि विषयसुखमेव पुरुषार्थं मनुते मरणमेव च मोक्ष इति निर्भीकतयोच्चैर्वदति। तेन तन्मते सुखमेव साध्यमिति सिध्यति। तल्लाभोपायस्तु तदनुषक्तदुःखस्य परिहारः। स च परिहारो नीत्यौषधान्नवस्त्रादिषु वस्तुषुमध्ये येन संसिध्येत्तस्य संपादने केनापि प्रकारेण प्रयतनमेव धर्म इति प्राप्नोति। मरणोत्तरं पुनर्जन्म गृहीतुरात्मनोऽभावाज्जन्ममरणपरंपरायाः प्रमुक्तिरेव मोक्ष एतदेव सत्यं चेत् स मोक्षः कालक्रमेणा-

क्रमेण वा विना यत्नं सिध्यत्येव । तदर्थं प्रयत्नेन नैव किंचित्प्रयोजनम् । अपितु यावज्जीवं सुखप्राप्त्यर्थमेव यत्नः करणीय इति देहात्मवादिनो लौकायतिकाः प्रवदंति । जन्ममरणपरंपरायाः संसारत्वं तस्यचानर्थत्वं ब्रुवतो वैदिकधर्मीयान् ' स्थूलमतयः पामरा इमे ' इत्युपहसंति च । किंतु तैरपि सुखमेवापेक्ष्यत इति तैरवश्यं वक्तव्यम् । यदीह जगति दुःखस्यात्यंताभाव एवेत्युच्येत तर्हि सुखेन भाव्यमिति बुद्धिस्तदर्थं च कस्यापि प्रवृत्तिरेव नाभविष्यत् । सा तु नियतं भवत्येव । नापि केवल मनुष्याणामेव । अपितु पशुपक्ष्यादीनामपि सा परिदृश्यते । तेन प्रत्येकस्यापि जंतोर्दुःखानुभवोऽस्तीति वाच्यम् । तन्निवृत्त्यर्थमेव तेन सुखमपेक्ष्यत इत्यप्यगत्या वक्तव्यम् । अस्मिञ्जगति दुःखं न स्याच्चेत् सुखेच्छापि नैव भवेत् । सा तु सर्वस्यापि भवतीति प्रसिद्धम् । तन्मूलकः प्रयत्नोऽपि सुप्रसिद्ध. । अतो दुःखमेवानर्थः सुखं च पुरुषार्थ इति प्राणभृन्मात्रस्य प्रवृत्तितः संसिध्यति ।

बौद्धा अपि शाश्वतिकसुखसिध्यर्थमेवात्मन उच्छेदमिच्छंति । चार्वाकमपेक्ष्य ते विवेकिन इति यावद्देहात्मनोः संयोगोऽस्ति तावत् प्रकृतसुखस्य प्राप्तिरशक्येति वदंति । अत एव नयोर्वियोगमभिलषंति ते । किंच मायादेवीसुतेन बुद्धेन सृष्ट्यंतर्गतं दुःखं साक्षादनुभूतम् । ततस्तेन स्वीयशिष्येभ्यः ' सर्वं दुःखं दुःख ' मित्युपदेशः कृतः । जैनैरपि संसारस्यानर्थत्वं सम्यग् ज्ञायते । तत एव त आवरणभंगं संततोर्ध्वगतिं वा वाच्छंति । त्रिदंडिप्रभृतयः सर्वे ईश्वरास्तित्ववादिनस्तु तापत्रयप्रशमनायैवाऽऽनंदमयेनेश्वरेण सह तादात्म्यमिच्छंति । नैयायिकास्तु दुःखध्वसमेव मोक्षमिच्छंति । आस्तिका वैदिकाश्च परमानंदप्राप्त्यर्थमेव कर्मोपासनां ज्ञानं वा संपादयंति तदर्थं वा प्रयतंते च । मीमांसका अपि विशिष्टं सुखमेव स्वर्गं मन्वते । एतावता संसारोऽनर्थकरो दुःखमय इत्यत्र सर्वेषामैकमत्य विद्यते । न वैमत्यमिति ज्ञेयम् ।

अस्यां सृष्टौ सर्वेभ्य एव मानवेभ्यः सन्मार्गप्रदर्शनार्थं भगवत्प्रेरणया समुत्पन्नाः साधुपुरुषा जगत्प्रपंचो दुःखमय इति स्वानुभवं समुपवर्णयंति ।

यच्च तत्र सुखमिव भासते वस्तुतो तन्न सुखम् । अपितु भाराद्यपगमेऽहं सुखी संवृत्त इतिवद्दुःखनिवृत्तौ सुखारोपः सः । तदुक्तम्—

**' प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः । ' इति ।**

सुशांतेन मनसा सम्यग् विमृश्य स्वीयानुभवः प्रत्येकेन मर्त्येन परीक्षितश्चेत् प्रतिपदं समधिकं दुःखमेव मयाऽनुभूयत इति तस्य निश्चयः स्यात् । प्रातरारभ्य यावत्सायं जागृतिमारभ्य सुप्तिपर्यंतं च यद्यत् त्रिविधं कर्म करोत्ययं मानुषः प्रायशस्तत्तत्कर्म तस्येच्छाविरुद्धमेवावलोक्यते । तथाहि—

प्रत्यूषे सुमधुरां सुप्तिं विहायोत्थाने दुःखमेवानुभूयते । तन्न कृतं चेच्छरीर आलस्यमारोग्यविपर्यासः पूर्वेद्युः समारब्धकार्यस्यासमाप्त्या हानिरित्यादिनिमित्तकदुःखस्य प्राप्तिः । विद्यार्थ्यवस्थायां वर्तमानाना बटूनां पालकादिशिक्षया क्रीडाद्यासक्तिं विहाय विद्याभ्यासक्लेशः, गृहाश्रमिणा वित्तार्जनादि दुःखम् । धनिनां धनवृद्धिलोकमान्यत्वादिचिंताजन्यं दुःखम् । सेवकानां सेव्योपदेशानुसारतो वर्तनप्रयुक्तं दुःखम् । देहाद्यारोग्यपरिरक्षणप्रयुक्तं दुःखम् । व्याधिग्रस्ते तु देहादौ भृशं दुःखमेव । नियंतुर्नियमनप्रयुक्तं दुःखम् । नियम्यस्य पारतन्त्र्यमूलकं दुःखम् । इष्टवियोगे दुःखम् । तत्संयोगेऽपि तस्य स्थैर्यादिचिंताप्रयुक्तं दुःखम् । इष्टवस्तुसंपादने क्लेशः संपादितस्य परिरक्षणे क्लेशस्तस्य विनाशे तु निरवधिकं दुःखम् । एतावता दुःखसंकुलेऽस्मिञ्जगति सुखं खपुष्पायमाणमित्युक्तिर्नात्युक्तिरित्यवगंतव्यम् ।

स्निग्धकवोष्णस्वाद्वन्नाशने सुगंधिशीतलोदकपाने च सुखं जायते । किमप्येकं समुन्नतिकारकं तूर्णं निर्वर्तनीयं स्वीयं कार्यं स्वयमेव यत्नतः संसाधितं चेद् भृशं समाधानं कृतकृत्यता च समनुभूयते । चिराय शिरोनिहितभारं भूम्यादावधः संस्थापिते सुखं प्रतीयते । नितांतभ्रमणेन श्रांतः कोऽपि सांद्रशीतलतरुच्छायायां क्षणमुपविष्टश्चेत्तेनात्यर्थं सुखमनुभूयते । पुत्रे संजाते हर्षः समुत्पद्यते । अत्युत्तमकाव्ये गाने वा श्रुते सहृदस्य पुंसो मोदः संजा-

यते । निदाघसमयेऽत्यच्छशीतलोदकं व्यंजनवाय्वादिकं सुखावहं भवति । हेमंते प्रातःकाले जागृत्यव्यवहितोत्तरक्षण एव तल्पादनुत्थाय तत्रैव किंचिदुत्तेजकमपि परिणामेऽहितकारि बहुमूत्रमधुमेहहृद्रोगमदाग्नित्वात्रदौर्बल्यादिदुःसाध्यव्याध्युत्पादकं शिष्टजनैर्विगर्हितमत्युष्णं चाहापानादिकं साप्रतिकं सत्कर्म सम्यगनुष्ठितं चेत् सुखं जायते इत्यादिक सर्वमापाततः स्थूलदृशां याथार्थेन प्रतिभातमपि सुसूक्ष्मदृष्टयो विवेकिनः पुमांसः सापेक्ष तादृश सुखं न तत्त्वतः सुखम् । केवलं दुःखापगमः स इति विज्ञाय तेन दुःखनिवृत्तौ सत्यां तदुपायं क्षणिकसुखाभासं च दुःखपक्ष एव निक्षिपंति । आकंठजग्ध्या परितृप्तस्य कस्यापि पुरतः स्वाद्वन्नमुपस्थापितं चेन्मुहूर्तात्प्राक् पीयूषवद्भासमानं तदेवान्नं तस्य गरलवद्भातीति प्रसिद्धं किल । अतो विषयेंद्रियसंयोगज सुखं न वास्तवं सुखम् । अपितु तस्मिंस्तद्बुद्ध्यात्मक आभासः सः । तमेवाज्ञानतः प्रमेति मन्वते विषयलोलुपाः प्राणिनः । ततः ससारः सुखमय इति च प्रवदंति । किंतु परिणामे दुःखदः स इति न जानंति । जानंतोऽपि वा शुष्ककीकसजग्ध्यासक्तप्राणिविशेषवत्तन्मनसि नानयंति । विवेकिनो धीरनरास्तु तादृशं सापेक्षमाभासं मनसा दु खकोटावेव विनिक्षिप्य तस्मान्निर्मुक्तिमभिलषंति । तदर्थं च यत्नातिशयं विदधतीति विशेषो बोध्यः ।

इत्येवं संसारस्य—जनिमृतिप्रवाहात्मनः प्रपंचस्यानर्थत्वं व्यक्तं विज्ञायते । इतरे धर्मा. पंथानश्च यद्यपि कंठतस्तथा न कथयंति । तथापि तेषां वर्तनविशेषतस्तदनुमीयत एव । तथाहि— यदि संसारे दुःखं नास्तीत्येवोच्येत । स्याच्चेदपि स्वत एव निवर्त्स्यतीषदेव तदित्यभिमन्येत । तर्हि धर्मस्य किं प्रयोजनम् । ईश्वरशरणतायाः किं फलम् । तस्य भक्तिः कुतोऽनुष्ठीयते । पूर्वस्यां पश्चिमायां वा दिशीश्वरस्यास्तित्व प्रकल्प्य निराकारः स इति मत्वा तत्पुरतो नम्रीभावस्य किमुद्देश्यमित्याद्यनेके प्रश्नाः प्रादुर्भवंति । तेषा समुचितमुत्तरं तु दुःखनिवृत्तिः कल्याणं समुन्नतिः शत्रुविनाशो वेत्यादिकमेव देयमापतति । अर्थाद्दुःखनिवृत्तिरित्येव समायाति । एवमपीतरे धर्माः पंथानश्च प्राधान्येन मुक्त्यर्थं नैव प्रवृत्ताः । ऐहिकोत्कर्ष एव तेषा प्रधानमुद्देश्यम् । सनातनधर्मस्य

तु परमतात्पर्यीभूतो मोक्ष एव । ऐहिकोन्नतिस्तुग्रामं गच्छंस्तृणं स्पृशतीति-वदानुषंगिकीर्ति विशेषः ।

ननु वेदराशौ सर्वत्र लिप्साप्राचुर्यमेव परिदृश्यते । तद्यथा—भो अग्ने मह्यं तेजो देहि । वायोऽस्मभ्यं सामर्थ्यं देहि । वरुण पशून् देहि । रुद्र-ममापत्यानि मा हिंसीः मच्छत्रून् विघातयेत्याद्याः प्रार्थना लिप्साप्राचुर्यस्या-साधारणं चिन्हमित्यनेक आधुनिका ब्रुवंति । तदनुसारिणश्चास्मदीयास्तथा व्यव-हर्तारः परिदृश्यंते । बाढम् । किंत्वेतादृश्यः प्रार्थना वैदिकधर्मस्य प्राथमिक बाल्यकालीनं स्वरूपमिति नैव जानंति ते । तस्य परिणतं रूपं तूपासना । परिणततमं स्वरूपं च ज्ञान वा नैष्कर्म्यमेवेति न बुध्यते तैः पल्लवग्राहिपांडि-त्याभिमानिभिः । अत एवोपासनाकाडं ज्ञानकाड च न वास्तविको वैदिक-धर्मोपदेशको भागः । अपितु पश्चाद्वेदे प्रवेशितोऽशः स इत्युच्चैः प्रलपंति ।

ऐहिकोत्कर्षः स्वर्गप्रभृतीनि च वैदिकधर्मस्यानुषंगिकाणि फलानि । अत एव निष्कामधर्मानुष्ठानस्य पर्यवसान चित्तादिविशुद्धिद्वारा परमपुरुषार्थे मोक्षे भवतीति संदृश्यते श्रुत्यादिषु । ऐहिकोत्कर्षः स्वर्ग इत्यादिकमेव तस्य धर्मस्य मुख्यं फलं चेद्वेदादिषु तदेव केवलमुपदिष्टं परिदृश्येत । नैव तथोप-लभ्यते । अपितु सत्वशुद्धिसदृक्षं पृथगपि निष्कामधर्मानुष्ठानस्य स्वतंत्रं फलं प्राधान्यतस्तत्र तत्रोपदिष्टमुपलभ्यते । तद्यथा—

**' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति**
**यज्ञेन दानेन तपसाऽनाशकेन ॥ १ ॥**

**यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥**

**एतान्यपि तु कर्माणि संगं त्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥**

तथा भारते नारदवाक्यमित्थं दृश्यते—

**'एभिर्विशेषैः परिशुद्धसत्वः कस्मान्न पश्येयमनंतमीशम् ।**
**तत्पारमेष्ठ्यस्य वचो निशम्य गच्छेति तं नारदमुक्तवान् सः ॥**

इति च । तस्माद्वैदिकधर्माचरणस्योपासनस्य चानर्थान्मुक्तिरेव प्रधानमुद्देश्यं फलमपि प्राधान्येन सैवेति ज्ञेयम् । परमुक्तविधया संसारो दुःखबहुल इत्यधिगतं चेदेव तत्सर्वमुपपद्यते नान्यथेति वैदिकधर्मस्य तदुपबृंहकाणां शास्त्रादीनां च तदेव विशेषतः प्रतिपाद्यम् । तेनैतत् सनातनधर्मस्यासाधारणं तत्त्वमिति संसिध्यतीति विज्ञेयं सारासारविचारशीलैरिति ।

तात्पर्यम्— यद्यप्ययं वैदिकः सनातनो धर्मो विशिष्टचातुर्वर्ण्यचातुराश्रम्यपुनर्जन्मात्मनियत्वसंसारानर्थत्वप्रभृतिभिरसाधारणैस्तत्त्वैः स्वेतरधर्मादिभ्यो विशिष्टोऽर्थात्पृथगथाप्यनादिपरंपरया तदनुसारिणां भारतीयजनानां तत्तद्वर्णादिनियताचारविशेषं विहाय तदनुसारीणां सर्वेषामेव च मानवानामैहिकोत्कर्षद्वारामुष्मिककल्याणप्रदो विद्यते । यत अनादेरस्य धर्मस्य सम्यक् प्रवर्तकाः प्रत्नतमाः सर्वज्ञकल्पा जगद्धितेच्छवो महर्षय आसन् । धर्मोऽयं जगतः सुस्थितेर्हेतुः पुंभिः स्त्रीभिश्च यथाधिकारमाचरितश्चेन्नायमितरवत्संकुचितदृष्टिःमदमत्सरादिदोषभूमिर्वा । जिज्ञासूनां स्वीयधर्मस्य नीतेश्च विशेषतोऽधिगमोऽस्य धर्मस्य सम्यगभ्यासेन भविष्यति । नीतिर्हि नह्येतस्मात्पृथग्विद्यते । अपि तु तदंतर्भूतैवेति ज्ञेयम् । ऐदानींतनः समयः साकल्येन वैदिकधर्माचरणस्याननुकूलोऽपि 'यदल्पमपि तद्बहु' 'स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्' इति भगवद्वचनानुसारतः स्वस्वधर्माचरणं यावच्छक्यं जनतया कृतं चेत्तस्याः कल्याणमीशकृपया भविष्यतीत्युक्त्वालंकुर्म इति शम् ॥ श्रीः ॥

**क्व धर्मो बहुगंभीरे क्वोत्तरत्राविवेकता ।**
**अतः परंपराप्राप्तमार्गो धर्मः सनातनः ॥ १ ॥**

## ॥ श्रीः ॥

# ॥ पूज्योत्सवविमर्शः ॥ (७)

विविधोपचारकरणैर्पूज्यप्रतिमोत्सवो नित्यम् ।
पूज्यकथासंश्रवणं महोत्सवः सत्यवादश्च ॥
—श्रीशंकराचार्याः ।

अथोच्चावचमिदं जगदेकं विशंकट कुटुंबं विद्यते ।

तस्यास्य कुटुंबस्य सर्वज्ञः सर्वशक्तिः परमेश्वरोऽद्वितीयः कार्यधुरंधरो विराजते ।

एतत्कुटुंबांतर्भूतानामसंख्याना कौटुंबिकानां योगक्षेमावाजस्येन भाव्यौ तैरनुष्ठितानि कर्माणि निपुण निरीक्ष्य तेषु यानि सम्यंचिस्युस्तेषा तत्कर्तॄणां च प्ररोचनं विधेयम् । यान्यभद्राणि तानि पुनर्न यथा भवेयुस्तथा तेषां नियमनं कर्तव्य । तैः सर्वैः परमेशप्रवर्तित नीतिपथमनतिक्रम्य मिथः प्रेम्णा वर्तितव्यम् । तथैतेन विश्वकुटुंबेन धर्मनीत्याऽऽनंदानां मातृमंदिरेण भवितव्यम् । एतदर्थं स विश्वसृट् परमेश्वरः सर्वदा जागरूकास्तिष्ठति । निजेष्वसंख्येषु कौटुंबिकेषु तेषा तेषा स्वभावानुरूपं पृथक् पृथग्वर्गान् कृत्वा प्रतिवर्गं तत्तदौत्पात्तिकगुणकर्मानुसारं वर्तनस्योत्तमान्नियमान्प्रवर्तयति स प्रजापतिः । तत्प्रवर्तितानां वर्तननियमाना 'धर्मपंथान' इति नामातरम् । यथा नियमाना वर्गीकरणं करोति तथा यस्य वर्गस्यार्थे ये नियमाः कृतास्तदनुकूलमावश्यकं च पृथक् पृथक् कोष्ठं विश्वात्मके स्वकीये गृहे निवासाय तेभ्यो ददाति ।

यद्वल्लघुकोष्ठे नीरनालिका आनीयंते—तद्वत् विशालेषु तेषु तेषु कोष्ठेषु सरितः समानीय जलस्य सौकर्यं विदधाति । अशितुमावश्यकमन्नं दद्यादीदृशं कुसूलमपि केदारात्मना तत्र तत्र निर्माय तेभ्यो ददाति । केनाप्यन्येनान्यस्य

कोष्ठस्योपरोधो नैव कार्यस्तेषा सीमाविवादश्च न भाव्य एतदर्थं तत्तत्कोष्ठस्याऽऽसमतान्स परमेश्वरः शैलभित्ती रचयति। तथा तेषां कौटुंबिकानां मिथो गमनागमनादिव्यवहारसौकर्यार्थं तासु भित्तिषु महाति द्वाराणि स्थापयति। इत्थंभूतानां कोष्ठानां लोकव्यवहारे देशः प्रातो वेति संज्ञा वर्तते।

एतेषु निसर्गतो विरचितेषु कोष्ठेषु यत्र येषामनादिकालमारभ्य पितृपितामहादिपरंपरया योजनाभूत् तत्रैव तैः सुखं स्थेयमिति परमेशितुराज्ञा वरीवर्ति। सर्वेषा तुल्यमेव कुशलं भाव्यमितीच्छायाः सत्वेन निर्दिष्टव्यवस्थाया नियंतुः कोऽपि पक्षपातो नासीन्नास्ति न भविष्यति च। किंत्विदं तस्य निःपक्षपातित्वं कैश्चिददूरदर्शिभिर्देवप्रियैर्नैव ज्ञायते। तत एव ते क्षुद्रातिक्षुद्रे महत्त्वाऽऽकाक्षाचक्रे परिभ्रमंति। तेषां निवासायं यः कोष्ठः परमेश्वरेण निर्दिष्टस्तेन तेषां तृप्तिर्न जायते। अन्येषा कोष्ठान् बलादपहृत्य गृहीतुं दुर्बुद्धिस्तेषामुत्पद्यते। ततो यो बलीनि न्यायेनैते दुर्बुद्धयः स्वजातीयानेवाऽऽक्रम्य तान्स्वायत्तान्कुर्वंति। तदनंतरं स्वाभ्यूहिता वर्तननियमा एव सर्वोत्कृष्टा इति स्वैरं निश्चित्य त एव नियमा जनैः परिपालनीया इत्याग्रहेण बलात्कारं कर्तुं प्रवर्तंते। इत्येवं भगवदिच्छाविरुद्धो लोककल्याणप्रतिकूलश्चोपघातो यदोद्भवति विश्वकुटुंबस्य सुव्यवस्थायाश्च शैथिल्यं जायते तदा तमनर्थकरमुपघातमुन्मूलयितुं न्याय्यं पथानं प्रवर्तयितुं च—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत।**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम्॥**

इति नैजप्रतिज्ञानुसार विश्वपालकः पृथक् पृथगंशैराविर्भूय तानि तानि भद्राणि कृत्यानि करोति। ता ईश्वरांशभूता एव विभूतय ईश्वरावतारा दिव्यपुरुषा वेत्युच्यंते लोकैः। तेषां प्रशस्ततमैः कृत्यैर्वर्तनैश्चाग्रे पथप्रदर्शका इतिहासाः संभवंति। इत्यैतिहासिकाः पुरुषश्रेष्ठास्त इत्यपि केचन ब्रुवंति। एतादृशानां महात्मनामायुर्न स्वार्थाय भवति।

अपितु जगत्कल्याणसिध्यर्थं तेऽवतरंति। तेषु पारमेश्वरीयतेजस आधिक्याच्छारीरं वाचिकं मानसं वा तेषां कृत्यं सामान्यजनापेक्षयोच्चतममनुभूयते।

तेषा हस्ताः केवलं स्वोदरपूर्त्यै न व्याप्रियंते । अपित्वन्यायमुन्मूल्य न्यायमंकुरयितुं नित्यमुद्युक्तास्ते तिष्ठति । तेषा दृष्टिः स्वार्थमनवलोक्य सदा जगतः कुशलमेव समवलोकयति । किंबहुना—

" स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवाते वृत्तिरेवंविधैव ॥ " किंवा

" भवो हि लोकाभ्युदयाय तादृशाम् " इत्थंभूतस्य तेषां महात्म्यस्य विद्यमानत्वात् तदीयं दिव्यसामर्थ्यं क्षुद्रैराधुनिकैर्मर्त्यैर्ज्ञातुं न शक्यते । तेषां बौद्धिकादिः पराक्रमः सामान्यलोकानामशक्यकोटिप्रविष्ट इव भासते । तदीयमहत्कृत्यानां वर्णन कल्पिता कादंबरीति मन्वते । नूनं सुव्यक्तमेवेदं—यत कस्याचित् कूपदर्दुरस्य पुरतोऽगाधजलसंचारिणो महामत्स्यस्य शौर्यवर्णनं कृतं चेत् तेन तदशक्यमेवावबुध्येत । क्षुद्रग्रामसीमाया मंदं वहंती कुल्यैव येन चिरायावलोकिता तस्यातःकरणे महोदधेः कल्पना कथं प्रविष्टा स्यात् ।

एवं स्वार्थांधेन मत्सरादिदोषाक्रातचित्तेन कुपथा महत्त्वमाकांक्षता मर्त्यवृंदेन परहितैकदृष्टीना निरपेक्षाणा समुदात्तहेतूनां लोकोत्तराणां विभूतीनां दिव्यं महत्त्वमधिगंतुमशक्यमेव । तदुक्तम्—

" वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति " ॥ इति ॥

अथापि तैरनुष्ठितानि भव्यानि कर्माण्यालोच्य पूज्यतमास्ते महात्मान इति सुशीलैः सलीलमधिगंतुं शक्यते । श्रीरामचंद्रस्यदक्षः पराक्रमोयद्यप्यशक्यस्तथापि तत्कृतदुर्वृत्तध्वंसेनेयं सर्वंसहा सुलभसंचारा संवृत्तेत्यनुभवसिद्धं वस्तु मत्सरिणं विहाय कः पुमान्नांगीकुर्यात् । आदिकवेर्वाल्मीकिमहर्षेर्वागिव वागन्येषां यद्यप्यसाध्या अथापि ललितललितया सरसया सालंकारया प्रसन्नगंभीरया परमपवित्रया तया वाण्या जगत्त्रये चिराय महानुपकारः कृत इति सुप्रसिद्धम् ।

इत्येवमादिपुरावृत्ते समालोचिते लोकोत्तरैः पुंभिः समनुष्ठितानि लोकोत्तराणि कृत्यानि कर्तुं सामान्यजनो यद्यप्यसमर्थस्तथापि तेषां कर्मणां सुपरिणामं दृष्ट्वा तत्कर्तॄणां दिव्यं महत्त्वं सुशीलेन तेनाधिगम्यते इति व्यक्तमेव। अत एव प्रायः समस्तो जनः पारमेश्वरतेजः संभूतासु विभूतिषु सादरं पवित्रं प्रेम कुरुते। यत्र तादृशं प्रेम वर्तते तत्र स्वभावत एव पूज्यभावः समुत्पद्यते। अवतारिपुरुषाणां कर्माणि भुवनाभयदातॄणि संतीति तेषु पुरुषोत्तमेषु मानुषाणां विशेषतः पूज्यं प्रेम वर्तते। तच्च वर्धिष्ण्वप्यस्ति। आदावीशावतारा एत इत्यधिगच्छंति लोकास्ततः परमेश्वराभिन्नत्वेन तान् संमानयंति पूजयंति च।

तैर्यावाञ्जगत्युपकारः कृतः स्यात्तावाञ्जनसमूहस्तेषु पूज्यभावं स्थापयंति। जगदुपकारकैस्तेषां कृत्यैर्जनमनांसि विशुद्धप्रेमजलेन सदृब्धानि भवंति। ततो जगन्मंगलानि तेषाममलानि चरित्राणि भक्त्या गायंति प्रेम्णा तन्नामसंकीर्तनमनुतिष्ठंति। यत्र यत्र ते महात्मानोऽगच्छंस्तानि स्थानानि क्षेत्राणि भवंति। यासु सरित्सु सरस्सु च स्नानाद्याह्निकं कर्म तैराचरितं तानि सर्वाणि तीर्थान्यभवन्। यस्मिन् दिने तेषामाविर्भावोऽभूत् तस्मिन् दिने तान् स्मारं स्मारं जनमनांसि निरतिशयभक्त्या परिप्लुतानि जायंते।

तेषां निःसीमोपकृतिरूपादृणादशतो विनिर्मुक्तिर्माभ्येति भावयन् लोकनिवहः कृतज्ञतया तेषां यथासामर्थ्यं पूजनमाचरति। भजनं कुरुते। उच्चैर्जयजयकारं ब्रूते। एकाग्रतया तेषां पूततमानि कृत्यानि गायन् प्रेम्णा तल्लीनो जायते। तेषां महोत्सवं विधातुं प्रवर्तते करोति कारयति च।

किमर्थमेते महोत्सवाः कर्तव्याः किं तेषां महत्त्वमित्याद्यधिगंतुमुपरिनिर्दिष्टेयमुत्सवानां समुत्पत्तिर्मनस्यवश्यमानेतव्या। आपत्काले केनाप्युदारमतिना समुपकारः कृतश्चेत्तस्य प्रत्युपकारेण संभावनं सदा कृतज्ञता धारणं वा मानुषजातेरयमौत्पत्तिको धर्मो वर्तते तथोपकारकर्तरि कदापि कृतघ्नतामविधाय कृतज्ञतयैव वर्तितव्यमिति नीतिशास्त्रतत्त्वमप्यस्ति। इममेव नैसर्गिकं मानुषधर्ममनुसृत्य नीतिशास्त्रानुसारेणेयमुत्सवानुष्ठानप्रथा पुराकालमारभ्य प्रवृत्ताऽस्ति।

स्वाभाविकीखल्वियमुत्सवप्रथा । केनचिदुपकारः कृतश्चेत्तद्विषयिणी कृतज्ञता यद्वत्स्वयमेवोत्तिष्ठते नैव तदर्थं तया व्याख्यानप्रवचनादेः कोलाहलो-ऽपेक्ष्यते तद्वत्स्वैरवृत्तीनामुच्छास्त्रपौरुषेण सनातनार्यधर्मे ग्लानिमुपगते तेषां तत्पौरुष प्रतिरुध्य दिव्यसामर्थ्योपेतया स्वीयवाण्या तान् हतबलान् कृत्वा यैः सनातनार्यधर्मस्य जीर्णोद्धारः कृतस्तेषां श्रीमदाद्यशंकराचार्याणा तथा चिराय पारतन्त्र्याग्नौ ददह्यमानं भारतवर्षं तस्मादग्नेरुद्धर्तुं घोरधारं भवानीनामकं खड्गं स्वीयकरे दृढं धृत्वा तत्सहायेन तस्माद्वह्नेरुद्धृत्य स्वातंत्र्यामृतवृष्ट्या-प्यायितं तेषा शिवछत्रपतिप्रभृतीना वीराणामियमुत्सवानुष्ठानस्य प्रथा स्वयमेव प्रवर्तते । तेषां शंकरभगवत्पादप्रभृतीनामहात्मनामुत्सवाः सर्वेषां मनोमंदिरे प्रायशो नित्य प्रवृत्ताः सत्येव । तेषा महत्वप्रख्यापकानि व्याख्यानानि तत्रा-खंडं प्रचलंति । हस्तयोरुज्वल नीराजनदीपमादाय कृतज्ञतापुरंध्री तेषा परः-सहस्राणि जगन्मंगलप्रभवाणि चरित्राणि प्रकाशयति । तेषामेते । महोत्सवाः स्वयंभुवः संतीत्येव केवल न किन्त्वेकवारं ते प्रवृत्ताश्चेत्ततः केनापि निर्मत्स-रेण ते निसेध्दुं न शक्यंते । सद्गुणानां मूल्यं मनुष्यमात्रेण यदाऽधिगतं तदारभ्य ते प्रवृत्ताः । यावत्तन्मूल्यं विस्मृतं न भवेत्तावन्निष्प्रतिबधं ते भवे-युरेव ।

कृतज्ञताबुद्धिसंभूतेयमुत्सवानुष्ठानपद्धतिर्न्यूनाधिकभावेन सर्वत्र प्रच-लिता दृश्यते । देशकालपरिस्थित्यनुसारतः करणीयाः प्रकारा यद्यपि विभिन्नाः संति । अथापि मौलिकं तत्व न कुत्रापि भिद्यते । श्रीरामचंद्रेण दुर्वृत्तान् राक्षसान् हत्वा यज्ञादिश्रौतकर्माणा निर्विघ्नता संपादिता । ऋषयो निर्भयाः कृताः । धरित्री खलभाररहिता सुखसचारा च कृता । इति कृतज्ञतया वयं रामजयंत्युत्सव यथासभव कुर्मः । जगद्गुरुणा श्रीमच्छंकरेण सर्वतः प्रसृतं सर्वनाशकरं नास्तिक्यं दिव्यवाक्सामर्थ्येन सुतरा निरस्य जनतायाश्चित्तं धर्म-श्रवणं कृतम् । ज्ञानदीपः प्रज्वलितः । धर्मस्य जीर्णोद्धारो विहितः । ब्राह्मण्यं संरक्षितम् । यथासंभवं चातुर्वर्ण्यं चातुराश्रम्यं च संस्थापितम् । धर्मसंस्थाश्च विनिर्मिताः । इति कृतज्ञतयैव श्रीशंकराचार्यजयंत्युत्सवं निर्वर्तयामः ।

चिराय पारतंत्र्यग्रस्तातएव दीनदीना महाराष्ट्रभूर्येनासामान्यशौर्य-चातुर्येण तेजस्विना वीरवरेण तस्माद्दुर्ग्रहाद् दूरुनं मोचिता तस्य शिवछत्र-पतेर्जयंत्युत्सवः कृतज्ञतयेवेदानीं प्रचलितो दृश्यते । इत्थं तत्तद्देशे क्रियमाणाः सर्वे उत्सवाः कृतज्ञतामूलका एवेति नात्र संदेहः ।

वयमुत्सवेष्वर्चनपुराणकीर्तनादिकं कुर्मः कारयामो वा । पाश्चात्त्या व्याख्यानानि ददति । यवना रुचिराण्युष्णीषकंचुकादीनि परिधाय नैक-विधान् दीपांश्च प्रज्वाल्योत्सवं निर्वर्तयंति । इत्थमुत्सवाना बाह्यस्वरूपाणि यद्यपि पृथक् पृथक् परिदृश्यंते । तथाप्यांतरः कृतज्ञताहेतुः सर्वत्रैक एव ।

स चांतरो हेतुः प्रायो बाह्यस्वरूपैर्व्यज्यते । देशकालपरिस्थित्यनु-सारतः 'भिन्नरुचिर्हि लोकः' इति रुचिवैचित्र्यानुसारतश्च बाह्यस्वरूपेष्व-वश्यंभावि पार्थक्यं दृष्ट्वा जनसमूहः प्रथमं चकितो भवतीति नाश्चर्यम् । कीर्तनपुराणाद्यनुष्ठानात्मिकायाः संस्कृतपद्धत्याः किंचिच्छैथिल्येन यदा भजन-पद्धतिः प्रवृत्ता तदा चरणयोः क्षुद्रघटिकावलयं बध्वा एकस्मिन् हस्ते वीणामन्यस्मिंश्च करतालं ( चिपळ्या ) धृत्वा " तुझे नामीं प्रेम देईं अखंडित । नेणे तपव्रत तदा कांहीं " इत्युच्चैः करुणरवं कुर्वन् भक्तचूडा-मणिस्तुकोबारायः श्रीपांडुरंगस्य पुरतः " ब्रह्मानंदी लागली टाळी । कोण देहातें सांभाळी ॥ " इत्येवस्यामवस्थाया जनैः प्रथमत एव संदृष्टः । तदा तस्य करुणरवसमकालमेव जनाना मनांसि युगपद्भक्तिरससंदब्धानि यद्यप्यभवन्—

" वैराग्यें डोलविला माथा जेणें मुनींद्र सघाचा "

एतादृशं तं भगवद्भक्तमवलोक्य लोचनानि सात्त्विकप्रेमाश्रुसंपूरितानि संजातानि । तथापि तामपूर्वां पद्धतिमनुमोदितु तादात्त्विकी जनता समर्था नाभवत् । शापमूढावस्थाया शकुंतलाया रमणीयतमं लावण्यमवलोक्य राज्ञो दुष्यतस्य " न च खलु परिभोक्तुं नैव शक्नोमि हातुम् " इति यथावस्थाऽऽ-

सीत् । तादृश्येवावस्थोत्सवस्य बाह्य नूतनं स्वरूपं दृष्ट्वा जनसामान्यस्य भवति । तेन चात्यंतमाकुलो भवति जनसंघः । परं तस्मै विसंस्थुलाय जनसमूहायोत्सवस्य वास्तव स्वरूपं प्रतिबोध्य क्षुब्धताया निराकरणं पुरुषधौरेयाणामाद्यं कर्तव्यं वर्तते । पारंपरीकपद्धत्यनुसारतः पुराणकीर्तनभजनादयः प्रकारा उत्सवे भाव्या इति भावना साहजिकीति सत्यम् । तत्स्थाने व्याख्यानादिकं चेत् स आधुनिको विलक्षणः प्रकार इति बुध्वा जनसमूहश्चकितः स्यादेव । परं स इत्थं बोधनीयः। रुचिवैचित्र्यानुसारतः सांप्रतमुत्सवेषु व्याख्यानादयः प्रकारा यद्यप्यनुष्ठीयंते । अथापि तैः कीर्तनादिभिश्च साध्यमुद्देश्यमेकमेवास्ति । तथाहि– भगवद्भक्तिः, स्वधर्मनिष्ठा, नीतितत्परता, आस्तिक्यम्, नास्तिक्यनिरसनम्, इत्यादिकमेव पुराणकीर्तनादीनां प्राधान्येनोद्देश्यम् । व्याख्यानप्रवचनादिकमप्याधुनिकलोकरुच्यनुसारं तदर्थमेव क्रियते । उत्सवेषु विशेषतः स्वदेशोन्नतिः स्वसमाजोन्नतिः स्वाभिमानोन्नतिरित्यादिकमपि व्याख्यानादीनामुद्देश्यं विद्यते । तच्च न केषामप्यनभिमतम् । सत्येवं कुतो यूयं चकिता भवथ । हितकार्यैवेदं सर्वेषाम् । अथापि युष्मद्रुच्यनुसारेण कीर्तनादिकमुत्सवेषु भवद्भिरनुष्ठितं चेत्तदप्यस्माकमिष्टमेव । यथासंभवं तदपि कार्यमिदं चानुष्ठेयम् । पारकीयेयं रीतिरिति न मनस्यानेयमपितु कृतज्ञतामूलका निर्दिष्टोद्देश्यिका लोकरुच्यनुसारं रूपांतरेण परिणता कीर्तनादिपद्धतिरेवेयमिति जानीथ । पुराणाद्यपेक्षया व्यापकेयं रीतिरित्यस्या विशेषोऽप्यस्ति ।

तात्पर्यम्—यया कया वा पद्धत्या भवतु । पूज्यानां महात्मनामुत्सवा यथासंभवं कार्या इति निष्कर्षो ज्ञेयः । अथ त उत्सवाः केवलं कृतज्ञतयैव कर्तव्या इति न । यथा सूर्यः कार्यविशेषसिध्यर्थमेवोदेतीति वक्तुमशक्यं तथैते उत्सवाः प्रयोजनविशेषसिध्यर्थं विधेया इत्यप्यभिधातुमशक्यमेव । तथाहि--किं सहस्ररश्मिरिदं विश्वं प्रकाशयितुमुदेत्युत निखिलप्राणिसमूहायाऽऽवश्यकीमुष्णता दातुमाविर्भवत्यथवा पद्मानि प्रफुल्लयितुमुदेति किंवा क्षारं सागरोदकं रश्मिभिराकृष्य जगदाप्यायनाय तन्मधुरं कृत्वा मेघैर्वर्षयितुमुदयगिरेः

शिखरमारोहति । आहोस्वित्तत्कालोत्पन्ननीलनीरदमालासमुद्भूतानंतधाराशरविकीर्णेनामिमां विश्वंभरा सुकोमलहरिततृणाकुरवतीं विधातुमुदेति किंवा नैशं ध्वातमुन्मूलयितुमात्मानं प्रकटयति । अथवा संध्यावंदनसमये भूसुरैरुत्क्षिप्तं मंत्रपूतं वारि रश्मिभिरादातुं तेषा सम्मुखमागच्छति। उत तत्वदर्शिनामपवर्गमार्गं प्रदातुं समुदेति । तद्वदेते महात्मनामुत्सवाः कृतज्ञतायाः प्रदर्शनार्थं विधेया उत तेषां स्मारकाणि चिह्नानीतिकर्तव्या आहोस्विदुत्तरसंततेः सद्गुणानामादर्शस्थानीयाः स्युरित्यनुष्ठेयाः । अथवा दुष्कृत्यानामपजयः सत्कृत्याना च विजयः कथं जायत इति ज्ञापनार्थं कर्तव्याः । किंवा–उत्सवप्रियत्वं मानुषाणां स्वाभाविको धर्म इति हेतोस्ते कार्या इत्यादेः प्रश्नजातस्येदमेकमेवोत्तरं प्रश्नोक्तप्रयोजनसमुदायसिध्यर्थमेवैते कर्तव्या उत्सवा इति। भास्करो हि विशिष्टैककार्यसिध्यर्थं नैवोदेति । अपितु निर्दिष्टसमस्तकार्यप्रसिध्यर्थमेवाविर्भवति । तद्वत् सर्वेषामेवैतेषां प्रयोजनानामेतावन्महत्त्वं विद्यते । यत्तदन्यतमस्य कस्याप्येकस्य प्रयोजनस्य सिध्यर्थं श्रमातिशयं सोढ्वैत उत्सवाः कर्तव्याः । एतैरुत्सवैर्जगतः स्वरूपमनेकदान्यथासंवृत्तमुपलभ्यते । तान् महात्मनो दिव्यपुरुषान् दृग्गोचरान् कुर्वंतीम उत्सवाः । तेषामनुत्तमा गुणाश्चित्ते प्रस्फुरिता भवंति । तेषां प्रतिकृत्यादिदर्शनेन प्रेक्षकांतःकरणेषु विशिष्टा स्फूर्तिरुत्पद्यते । तेषां विमलं पुरावृत्तं जनताया मनसि सद्गुणानां मुद्रणं विधातुमसाधारणं साधनं ज्ञेयम् ।

उत्सवास्तत्र मुद्रापयितारो बोध्याः । 'उत्सवप्रियत्व' मानवाना स्वभावः । स्वभावानुनिष्पादिन्यः किल मनोवृत्तय. । ततस्ता उद्दीपयित्वा यत्सुशिक्षणमुत्सवैर्दीयते तदन्यैः साधनैः सौलभ्येन दातुमशक्यम् । उत्सवेष्वेतेषु प्रेक्षकेभ्यो 'यूयं तेषां महात्मनामिव वर्तनं कुरुध्वम्' इति कथनस्य नावश्यकता। तदानीं तेषां प्रतिकृत्यादिदर्शनसमकालं प्रेक्षकांतःकरणेषु दैविकशक्तेः क्षणमात्रं वा भवतु प्रादुर्भावो भवत्येव । तस्य सुपरिणामो नियतं स्यादेव । मूर्तिपूजकानामस्माकमयमनुभवोऽस्त्येव । योऽनुभवः प्रतिव्यक्तिचित्ते वर्तते सोऽनुभवस्तादृशव्यक्तिसंघटिते समुदायेऽपि वरीवर्तीति किं पृथक् कथनीयमस्ति ?

तात्पर्यम्— कृतज्ञतायाः संसिध्यर्थं लोकोत्तराणां महात्मनामुत्सवाः सांप्रतिकैर्जनैरवश्यं कर्तव्याः । तैः सत्पुरुषैर्जगदुपरि ये परःसहस्रा उपकाराः कृतास्तेषां स्मारकाणि चिह्नानीति ते कार्याः । अनादिपरंपरया प्राप्ताः संतीत्यनुष्ठेयास्ते । सदुपदेशामृतं वर्षयंतो मेघाः सद्गुणानां साक्षात्स्वरूपाणि । सन्मनोवृत्तीनामुद्दीपकानि रसायनानि । युवभ्यः सुशिक्षणप्रदातारस्ते शिक्षकाः। प्रत्नाना महात्मना जागरूकाणि पुरावृत्तानीति ते महोत्सवाः सपादनीयाः । तेभ्यः प्रागुपवर्णितानीष्टानि प्रसिध्यंतीति ते कार्याः । कृतेभ्यस्तेभ्यो न काऽपि क्षतिरिति कर्तुं योग्यास्ते । किंच "प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः" इति शासनात तेषामकरणे श्रेयः प्रतिबद्धं स्यात्तन्माभवत्विति ते महोत्सवा नियतं कर्तव्याः । अस्माभिराधुनिकैर्भारतीयैस्तु स्वधर्माभिमानशून्यतया परकीयसंस्कृतिलोलुपतया च योग्यकृतेरभावादविश्लथं गले पतितायाः सर्वथा ऱ्हासकारिण्या अवनतिराक्षस्य उन्मूलनं विधातुं समुन्नतां चावस्थां संप्रातुं समनुष्ठेयास्ते महोत्सवाः । यतस्तेषामनुष्ठानं स्वदेशाद्युन्नतिकारकं सुकरं साधनं समुल्लसतीत्यावेद्यालं कुर्म इति शम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

## ॥ श्रेयस्करोपायविमर्शः ॥ (८)

**विना वेदधर्माश्रयं चेशनिष्ठाम् ।**
**समुद्धर्तुमिच्छंत्यहो देशमेके ॥**
**कथं भूमिबंधं विना मंदिरं ते ।**
**न जाने निबध्दुं समर्था भवेयुः ॥१॥**

अथ पुराकाले साम्राज्यप्राप्त्यर्थमेकदा देवासुरयोः संग्रामः प्रवृत्तः । तत्र श्रैष्ठ्यार्थं विवदता देवानां मध्येऽनेके विप्रतिपन्ना आसंस्ते च मिथोऽ-

स्पर्धंत । तेषु वसुगणोपेतोऽग्नी रुद्रगणोपेतः सोमो मरुद्गणोपेत इंद्र आदित्यगणोपेतश्च वरुण इत्थं चत्वारः पक्षाः प्राधान्येनाभूवन् । प्रत्येकोऽपि मदुक्तमेव सत्यं श्रेयस्करं चेत्युच्चैः प्रतिपादयामास । तेषामिदं परस्परवैमत्यं सर्वथा हानिकरं, नानेन कदापि साम्राज्यप्राप्तिः स्यादित्यालोच्य देवेंद्रः प्रजापतिसकाशं गतः । प्रजापतिः किंचिदालोच्येंद्रेण संज्ञानीष्टिं कारयांबभूव । तेन परस्परं श्रेष्ठ्याय विवदद्भिः सर्वैरिंद्रस्य महत्त्वमग्रणीत्वं चांगीकृत्य मिथो वैमत्यं सुदूरं निरस्तम् । विजयं च लब्ध्वा साम्राज्यमासादितम् । इयं ' संज्ञानी ' इष्टिरित्थं समर्थाऽस्ति । यदन्योऽन्यस्मिन्--वर्तमानं वैमत्यं निरस्य सम्यगैक्यमुत्पादयति । अतो येषु सर्वनाशकराः पक्षोपपक्षाः स्युस्तैरियमिष्टिः कृता चेत्तेष्वैक्यं संसिध्येत् । समुद्दिष्टं कार्यं च संभविष्यति । इति कृष्णयजुर्वेदीयतैत्तिरीसंहितायामुपदिष्टम् । तद्यथा--" यः समानैर्मिथो विप्रियः स्यात् तमेतया संज्ञान्या याजयेत् । अग्नये वसुमते पुरोडाशमष्टाकपालं निर्वपेत् । सोमाय रुद्रवते चरुम् । इंद्राय मरुत्वते पुरोडाशमेकादशकपालम् । वरुणायाऽऽदित्यवते चरुम् । इंद्रमेवैनं भूतं ज्यैष्ठ्याय समाना अभिसंजायते । वसिष्ठः समानाना भवति " इति ।

तै. सं. अ. २। प्रपा० २। अनु० ११॥

सांप्रतमस्मिन्भारतेऽपि वर्षे इत्थं दुःस्थितिरुत्पन्ना परिदृश्यते । तथाहि—कॉंग्रेस, लोकशाही, जहाल, मवाळ, परिवर्तनी, सनातनी, ब्राह्मण, ब्राह्मणेतर, स्पृश्य, अस्पृश्य, हिंदुसभा, जातपाततोडकसंघ, जीवदयासंघ, गोरक्षकमंडल, सत्यशोधकेत्यादयोऽनेके पक्षोपपक्षाः प्रचलिताः संति । ते सर्वे स्वराज्यप्राप्त्यर्थं प्रयतंते च । परंत्वेकस्याग्रणीत्वं मतं चापरो नानुमन्यते । प्रत्येकोऽप्यहं श्रेष्ठो, बुद्धिमान्, दूरदर्शी, लोककल्याणकारी, देशभक्तः समाजसेवक इत्यभिमन्य स्वेतरस्य सदसद्दोषोद्घाटनकार्य एव स्वीयं सामर्थ्यं व्ययीकुरुते । अनेन मिथो वैमत्येन जनतायाः कंठावरोधनं भूत्वा प्राणस्य निर्याणप्रसंगः प्राप्तोऽस्ति । प्रत्येकोऽपि स्वस्वमत्यनुसारेण स्वैरं पृथक् पृथगुपायं साग्रहमुद्भावयति । " कश्चन राजकीयकार्यालयेषु ( कौन्सिल ) बहि—

ष्कारं निक्षिपतेति ब्रूते । अपरस्तान्यात्मसात्कृत्वा राजतंत्रं प्रतिबध्नीतेति वदति । अन्यो वर्णाश्रमजातिधर्माननुलक्ष्य स्वस्वधर्मेण वर्तध्वमिति कथयति। कश्चनास्पृश्यतां सर्वथा निवारयतेति साग्रहं प्रलपति । कश्चन राजसभाया विनंतिपत्राणि ( अर्ज ) शिष्टमण्डलानि च प्रेषयतेति सूचयति । अपरो राज्ञा कृपया यद्दीयते तदादौ स्वीकृत्य ततोऽधिकप्राप्त्यर्थं चिराय विवादम् कुरुतेत्युपदिशति । भाडवलशाहीं मूलतो विनष्टां कुरुतेति कोऽप्युद्गिरति । अपरो महात्मा धर्मबिर्म सब् झूट मिथ्यैवेदमाडम्बरमर्थाडाकूसीयम् सब्गोलंकारमन्तरेण राष्ट्रोन्नतिः स्वाराज्यप्राप्तिश्च कदापि न स्यादिति साभिनिवेशम् प्रब्रूते । " इत्येवमस्मिन् सर्वत्र सम्प्रवृत्ते कोलाहले सुसम्बद्धैकमार्गस्य निश्चयात्यन्ताभावादिष्टसिद्धिर्नितरां दुर्लभा संवृत्ता । अस्य बीज तु निर्दिष्टेष्वेषु पक्षोपपक्षेषु कुत्रापि स्वधर्मश्रद्धेश्वरनिष्ठे न स्तः । यत्र ते वर्तेते स इतरेषा दुराक्रमणेनेष्टं कार्यं कर्तुं न प्रभवति । वस्तुतो विचार्यमाणे प्रत्नतमकालादारभ्य भारतवासिना सनातनवैदिकधर्मावलम्बिना साम्प्रतं हिंदुशब्दसम्बोध्यानामार्याणामिदं पितृपितामहाद्यविच्छिन्नपरम्परागतं स्थावरं रिक्थं यद् भारतवर्षं वा हिंदुस्थानम् । नान्यस्य कस्याप्यत्र निवसतोऽपि—

**प्रामाण्यबुद्धिर्वेदेषु वैविध्यं जात्युपास्ययोः ।**
**साधनानामनेकत्वमेतद्धिंदुत्वलक्षणम् ॥**

इत्यभिजनोक्त्यनुसारेण श्रुतिस्मृतिपुराणशिष्टाचारप्रामाण्यं स्वीकृत्य तदनुसारं यावच्छक्यंवर्तनमेतदसाधारणं हिंदुत्वलक्षणं चेद्वेदादेरप्रामाण्यप्रतिपादनं, जात्युच्छेदे निरर्थकः प्रयत्नः, धर्मस्य सदाचारस्य चोल्लंघनम्, नैसर्गिकास्पृश्यताया उत्पाटनयत्नः, कुविवाहः, इत्यादिकं धर्मबाह्यवर्तनं हिंदुत्वाभिमानिभिः कथं कर्तुं शक्यम् । क्रियते चेद् व्यर्थ एव तेषा स हिंदुत्वाभिमानः । वेदादिष्वैकालेन विश्वास इदमेव तु हिंदूनां हिंदुत्वस्य मूलबीजम् । विना बीजं फलप्राप्त्यै प्रयतनं तु कस्यैद लक्षणमिति ज्ञातुमशक्यमेव । येनाद्याप्यस्मासु कथंचिद्धिंदुत्वं वर्तते तेन सर्वथा प्रमाणभूतेन वेदादिसच्छास्त्रेणोपदिष्टोपायः स्वेष्टसिध्यर्थं हिंदुभिः कर्तव्य इत्येवोचितम् । हिंदुत्वस्य संरक्षणायै-

तावत्कालपर्यंतं यैः प्रयत्नः कृतस्तैः सर्वैरिदमेवानुष्ठितमिति पुरावृत्तं नामेतिहासः कथयति । समर्थरामदासस्वामिभिर्हिंदुत्वरक्षणार्थं रात्रंदिवं प्रयतंतं श्रीशिवरायं प्रति– " भगवतोऽधिष्ठानं दृढीकृत्य धर्मतः स्वदेशोन्नत्यै कोऽपि यत्नः कृतश्चेदवश्यं सिद्धिं प्राप्स्यथ " इति महामन्त्रः समुपदिष्टः । तस्मिन्मंत्रे भरं दत्वैव क्षत्रकुलचूडामणिना श्रीशिवरायेण हिंदुपदबादशाही समुट्टंकिता । ऐदानींतनेषु पक्षोपपक्षेषु मध्ये भगवदधिष्ठाने स्थिरं स्थित्वा जनतायाः श्रेयस्करोपायप्रदर्शकः सनातनः पक्ष एवैको विद्यते । तस्य तथा दृढं विश्वासोऽस्ति । तदन्तर्गतैकः पुमानित्थं सूचयति । मिथोवैमत्यनिरसनपूर्वकैकमत्यसिध्यर्थं भगवद्वेदोपदिष्ट एवोपायो हिंदुत्वाभिमानिभिर्जनैः कर्तव्यः । स चोपायः —

" संज्ञान्या इष्टेरनुष्ठानम् " परमेयेष्टिः सर्वैः कर्तुमशक्या । य आहिताग्नयोऽग्निहोत्रिणस्तैरेवेयं कर्तुं पार्यते । नैवेतरैरनग्निमद्भिर्गृहस्थैरपि । तस्या आधानसिद्धाग्निसाध्यत्वाददीक्षितेष्वाहवनीयादिवैताग्नीनामसत्वात् । अतः प्रकृतामेतामिष्टिं कर्तुं शास्त्रेन येषामधिकारोऽस्ति ताञ्जातपुत्रान् कृष्णकेशानग्निहोत्रिणः प्रति तां कर्तुं प्रवर्तयित्वा तेषां सर्वप्रकारं सहाय्यकरणमात्रं सर्वैः कर्तुं शक्यम् । अग्निहोत्रिभिरपि स्वार्थमर्थाद्व्यक्तिहितं क्षणमात्रं पश्चात्कृत्य समष्टिहिते दृष्टिरवश्यं देया । यतोऽनेन ब्राह्मणवर्णेन न केवलं स्वार्थैकदृष्टिना भाव्यमपितु यथा जनतायाः कल्याणं स्यात्तथा स्वार्थं विसृज्यापि राष्ट्रहिताय तेन प्रयतितव्यम् । तदर्थमेव स उत्पन्नोऽस्तीति शास्त्रं कथयति । तदुक्तम्—

" तं हि स्वयभूः स्वादास्यात्तपस्तप्त्वाऽऽदितोऽसृजत् वेदधर्माभिवाह्याय सर्वस्यास्य च गुप्तये " इति । इतिहासोऽप्येतदेवाऽऽवेदयति । तस्माच्छ्रौताग्निमद्भिर्भूदेवैरतत्वतो देशहिताय प्रयतता पुरुषाणा वैमत्यनिरसनपूर्वकैकमत्य.सिध्यर्थं वसंतादयुक्तकाले यथाविद्ध्येकादशदिनपर्यंतं प्रत्यहमियं संज्ञानीष्टिः श्रद्धया विधेया । इतरैश्च सर्वैः सामर्थ्यानुसारं तदिष्टिकर्तृभ्यो द्रव्यादिकं दत्वा सहाय्यं कार्यम् । एवं कृते— " परस्परं भावयंतः श्रेयः

परमवाप्स्यथ।" इति भगवतः सम्यगाश्वासनमस्तीति तन्न विस्मर्तव्यं केनापि।

अस्या विकृतीष्टित्वेन कादाचित्कत्वादपरिचितत्वेऽपि यत्रास्या विधानमस्ति ततो विशिष्टद्रव्यदेवस्तास्वरूपमवगत्य "प्रकृतिवद्विकृतिः कर्तव्या" इत्यतिदेशवाक्यप्रमाणतः प्राप्तकृतपूर्वोत्तरागैरुपेतैवेयमिष्टिः कार्या। अस्या इष्टेर्विधायकतैत्तिरीयसंहितांतर्गतं वचनजातमध्यायादयुल्लेखपूर्वकमादावेव लिखितमास्ति। ततोऽप्यस्या इष्टेः स्वरूपं ज्ञातुं शक्यम्। द्रव्यदेवते यागस्वरूपमिति शास्त्रसिद्धांतः। देशहितार्थं स्वराज्यप्राप्त्यर्थं च ये ये यत्नाः सांप्रतं क्रियंते प्रायस्ते सर्वेऽपि धर्मश्रद्धाशून्या भगवदधिष्ठानरहिताश्च संतीत्ययशस्विनो जायंते। परमेश्वराधिष्ठानपूर्वकं वेदविहितोपाया अधिकारिभिः कृताश्चेदवश्यमिष्टसिद्धिर्भवतीति प्रत्नेतिहासः स्पष्टं कथयति। ईश्वरेऽविश्वस्य तदुक्तमुपायं चाकृत्वा काममितरे प्रयत्नाः कृता अपि निष्फला एव ते भवंतीत्यैदानींतनः पंचाशद्वत्सरीयेतिहासः प्रत्यक्षमनुभवं ददात्येव। द्वादशवत्सरं यावदव्याहतः कृतो यत्नः सफलो भवतीत्यस्माकं शास्त्रं सूचयति। वेदशास्त्रादिविद्यायां द्वादशभिर्वत्सरैः प्रावीण्यं लभ्यत इत्यनुभवो वर्तते। सत्येवं तपचतुष्टयादप्यधिककालपर्यंतं नैरंतर्येण प्रचलिताः प्रयत्ना इष्टफलदा न जायंत इत्यतस्तेषु किमपि महद्वैगुण्यमस्तीति निःसंदेहमवगम्यते।

तच्च वैगुण्यं धर्मश्रद्धाराहित्यं भगवदधिष्ठानराहित्यं चेदमेव। अत एव यशो न लभ्यत इति सिध्यति। तस्माद्वस्तुतो लोकहितेच्छुभिः स्वसुखनिरभिलाषैः प्रधानपुरुषैरेतत्सर्वं समालोच्य यत्र यत्राग्निहोत्रिणः स्युस्तान् प्रकृते कर्मणि सोत्साहं प्रवर्तयितुं वित्तादिसाहाय्यं विधाय नारायणकल्पवेदोपदिष्टोऽयं 'संज्ञानी' इष्ट्यात्मको लोककल्याणकार्युपायोऽवश्यं कारयितव्य इत्यात्रैवालं कुर्म इति सर्वं शिवम्॥ श्रीः॥

## ॥ श्रीः ॥

# ॥ वेदविद्विमर्शः ॥ (९)

**एकोऽपि वेदविद्धर्मं यं व्यवस्येद्द्विजोत्तमः ।**
**स विज्ञेयः परो धर्मो नाज्ञानामुदितोऽयुतैः ॥**

**म. १२।११३**

अथ भगवता सर्वज्ञेन सर्वशक्तिमतेश्वरेण सृष्ट्युत्पादनसमये सृज्यमानाना जीवविशेषाणामभ्युदयनि.श्रेयसयोः साधकतमः सनातनो धर्मोऽपि वेदात्मना प्रकटीकृत.। सोऽयं वेदो ज्ञानात्मनः परमेश्वरस्य वाङ्मयी मूर्तिर्विराजते । विश्वेषा जीवाना साक्षात् परंपरया वा समुत्धर्त्री मंत्रमयी देवता विद्यते । देवपितृमनुष्याणा तत्सनातन चक्षुरुल्लसति । सर्वेषा भूताना धारकं पोषकं च तदद्भुतं शास्त्रं समुज्जृंभते। नरं नारायणयिता स सद्गुरुर्ज्ञेयः । किंचिज्ज्ञानामत एवासमर्थाना मानुषाणा प्रत्यक्षानुमानाभ्या भवितुमशक्यस्यातींद्रियज्ञानस्य समुत्पादकं प्रकृष्ट प्रमाणं वरीवर्ति । वेदादेव वर्णानामाश्रमाणां च सिद्धिर्भवति ।

यज्ञदानतपोपासनज्ञानाना निगूढ रहस्य वेदेनैव सुप्रकाशितम् । देवर्षिसिद्धसत्पुरुषप्रभृतिभिर्महात्मभिर्वेदैकशरणतयैवाऽऽत्मन उद्धारः संसाधितः। वेदोदितं सनातनं धर्मं सरक्षितुमेव पारमेश्वराः क्रियाशक्त्यवतारा ज्ञानशक्त्यवताराश्च तस्मिन् तस्मिन् समये सम्यक् प्रादुर्भूता. । प्रपंचविषयेऽपि—

**सेनापत्यं च राज्यं च दंडनेतृत्वमेव च ।**
**सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥**

इति निर्णयः स्मृतिकारैः प्रदत्तः । एवं नि.श्रेयसाभ्युदयसंसाधकयोर्ज्ञानकर्मणोः प्राधान्येनोपदशकर्तुर्वेदस्येदानीं भीषणो विपर्यासः प्रचलितो

दृश्यते । तेन च विपर्यासेन वैदिकधर्मश्रद्धोन्मूलितेव समवलोक्यते । अतस्तन्निराकरणमत्यावश्यकमिति भगवंतं वेद प्रणिपत्यैव यथामति प्रयत्यते ।

अन्यदेशीयैर्मानुषैरपौरुषेयमत एव सर्वथा निर्दोष भगवंतं वेदं दुर्विदग्धतया दूषितुमुपक्रमः कृतः । तमनुगच्छद्भिराधुनिकैर्भारतीयपुरुषैः स्वराष्ट्रीयाभिमानतस्तेषां मतानि यद्यपि खंडितानि तथापि तेषामैतिहासिकदृष्ट्या संशोधनपद्धतिं तदनुकूलतत्वान्यंगीकृत्यैव सर्वं लेखन कृतं वर्तते । तेन तद्वाचनादिकाले विदेशीयाना मतखंडनतश्चित्तं सुप्रसन्नमपि तस्मिन् सर्वस्मिन् लिखनजाते बादरायणजैमिनिप्रभृतिभिर्महर्षिभिः प्रवर्तिताया वेदार्थमीमांसायाः पूज्यपादश्रीशंकराचार्यमुख्यैरीश्वरावतारभूतैः पुरुषश्रेष्ठैः प्रतिष्ठापितानां वैदिकधर्मतत्त्वानां च विपर्यासमवलोक्यात्यंतं व्यथते चेतः । केनाचिद्वैदिकसप्रदायशून्येनापि वेदविन्मन्येनान्यदेशीयेन पुसा खिस्ताब्दात्प्राक् षट्शतमारभ्य द्वादशशतवत्सराभ्यंतरे वेदोत्पत्तिकालः स्वकृतपुस्तके प्रोक्तः । तस्य खंडनाय तिलकोपाव्हैर्बालशर्मभिः केनाप्यनिर्वचनीयेन गमकेन खिस्ताब्दात्पूर्वं सार्धचतुःसहस्रसमाभ्यः प्राग् वेदाविर्भावकालः प्रकटीकृतः । अर्थादनेन लिखनेन वेदस्यापौरुषेयत्वं निर्दोषत्वं च सहजत एवोपेक्षितं भवतीति किं पृथग्वाच्यमस्ति ।

विदेशीयैः पुंभिरयं वेदश्चिरायाशिक्षितावस्थाया वर्तमानानां पुरातनानामार्याणां जीर्ण इतिहासोऽस्तीति विपर्यस्त प्रकल्प्य तेषामार्याणां लवणमपरिचितमासीत् । उदधिरज्ञातस्तैः । अश्वमारोढुमपटवस्त आसन् । संख्याज्ञानं तेषामत्यल्पमभूत् । केशादीनां प्रसाधन वेशभूषादेश्च कल्पनमनार्येभ्यस्तैर्गृहीतम् । एवमादिकं प्रलपन " मुखमस्ती "ति न्यायेन तैः कार्यम् । तन्निरासार्थं चाधुनिकैर्भारतीयैर्विद्वद्भिः " ऋग्वेदकालीना आर्याः पंचनद (पंजाब) प्रदेश अवर्तन् । तत्राधिक्येन लवणस्योत्पत्तिर्भवतीति तेषा परिचितमेवासील्लवणं नापरिचितम् । ये च सागरस्योल्लेखाः संति ते समुद्रस्यैव न सरिताम् । यतः क्षेपणीशतयुतया नावा ते तत्र तत्राटनमकुर्वन् । रुद्रसूक्ते " एकाचमे-

तिस्रश्च ने " इत्याद्युल्लेखतः सख्याज्ञानं तेषा सम्यगेवासीदिति विवदितव्यम् । "
एतादृशे विवादे भारतीयाना स्वदेशाभिनानो यद्यपि कथचिद्व्यक्तो भवति
तथापि तौ द्वावप्यैतिहासिकदृष्ट्यैव वेदमवलोकयत इति पर्यवस्यति । यैर्वेद-
मंत्रैर्यज्ञादिकं पवित्रं कर्म कृत्वा शाश्वतिकाभ्युदयसाधकं पुण्य संपादनीयम् ।
तेभ्यो मंत्रेभ्यो निर्दिष्टैतिहासिकवृत्तनिष्कासनाय वेदमवलोकयंत्या दृष्टौ विप-
रीतः संस्कारो जायत एव । तथाहि– वेदोऽयमैदानींतनेतिहासवदेवाति-
प्राक्कालीनमानवसमूहस्येतिहासोऽस्तीति कल्पना दृढमूला चेद्वेदाः पाप-
नाशकाः । वेदमन्त्राणामध्ययनेन पुण्य समुत्पद्यते । स्वस्मिन् गूढतया वर्तमानाया
भव्यशक्तेर्विकासो जायते । पारलौकिकं रहस्यमधिगतं भवति । कर्मणः
पुनर्जन्मनश्च सिद्धान्तोऽधिगतो भवति । एवमाद्याश्चित्ते विद्यमाना भावनाः
शनैः शनैस्तिरोहिता जायंते । ततस्तत्कालीनेतरमनुष्येभ्यस्तत्कालीना आर्याः
संस्कृता आसन् किंवा निहीनसंस्कृतियुता नासन्नित्यत्रैव तस्याभिमानस्य परि-
समाप्तिर्जायते । ततः कृष्णशुक्लयजुर्वेदादौ तु कृष्णवर्णाना गौरवर्णाना च
मानुषाणा कलहः । मधुविद्या नाम मधुमक्षिकाः संगृह्य ताभ्यो मधुसपादनस्य
कलेत्याद्या विचित्राः कल्पनास्तर्कवितर्काश्चाविर्भवंति । तदुद्देश्यका जल्पा अपि
गभीरतया प्रचलति । देवा असुराश्चेमौ मिथः कलह कुर्वाणौ द्वावार्यानार्ययोः
पक्षावास्ताम् । महर्षेः कश्यपस्य कास्पियन्समुद्रेण, यातुधानानामायर्लंडेन,
डेनाना दनुभिः साकं कथंचिदनवस्थितं संबध कृत्वा तत्कालीन भूगोलमि-
तिहास च लिखितुमुपक्रमो भवति । इदमितिहासभूगोलयोर्लिखनं प्रायश इत्थं
दृश्यते । तत्कालीना आर्यास्तत्कालीनेतरमनुष्येभ्यः श्रेष्ठा भासमाना अपि
साप्रतिकया प्रकामं पुरतो गतया दृष्ट्याऽनुत्तमा एव भासेयुः । इतिहासा-
पेक्षया नितात महांतो वेदाः । इयं भावना यथा विनष्टा स्यात्तथाधुनिकाना
विद्वन्मन्याना वेदार्थज्ञानस्य पर्यवसानं परिदृश्यते । ईदृग्विधेन वेदार्थविवर-
णेन सनातनधर्मीयाणामस्माकं कर्मोपासनाज्ञानाना क उपकारः सिध्येत् ।
तदपेक्षया वेदार्थस्याज्ञानमेव वरमिति कथनप्रसंगः प्राप्नोति । परमित्थं कथन-
मप्यसांप्रतमेव । यतस्तेन कथनेन स्वैरं प्रवृत्ताया वेददूषककर्मापरनाम्न्यैति-

ह्यासि रुतुच्छतरचिकित्सायाः प्रतिरोधः कथं स्यात् । तस्मात्-बादरायणजैमिनि-मुख्यैर्महर्षिभिर्भगवत्पूज्यपादश्रीमच्छंकरप्रभृतिभिस्तत्त्ववेद्भिः समर्थश्रीरामदास-ज्ञानेश्वरएकनाथतुकारामहंसराजप्रमुखैः सत्पुरुषैश्च ययापूततमया भावनया वेदः समवलोकितो मीमांसितश्च । यत्तस्य निरुपम महत्त्वं चित्ते दृढं कृत्वा भूदेववृंदैनैतावत्कालपर्यंतं प्राणादप्यधिकेन यत्नेन संरक्षितः ।

तस्य प्रत्येकमक्षरं भगवन्नामेति भावनया सादरमधीतः । यथाविधि मंत्राणां सिद्धिं विधाय दिव्यशक्तिसंपादनार्थं दुःसहं तपोऽनुष्ठितं धार्मिकैः । तामतिशयेन पूज्यामन्वर्थां वेदविषयिणीं पवित्रां भावनां प्रदातारो वेदविदः सांप्रतमत्यावश्यकाः । तदुक्तम्—

**" तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।**
**वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मना ॥**
**आत्मज्ञाने शमे च स्यान्नियतं यत्नवान् द्विजः ।**
**एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः ॥ "**

स्वस्ववर्णाश्रमधर्मानुष्ठानात्मकेन तपसा गुरुकुलवासगुरुशुश्रूषणादिभिर्व्रतैरुपनिषत्सहितो मंत्रब्राह्मणात्मको वेदः शिक्षाद्यंगषट्कयुतो ब्राह्मणेन वर्णतोऽर्थतश्चाध्येतव्यः । तत्रापि शमदमादिसाधनसंपत्तावात्मतत्त्वविद्यायां च विशेषतो यत्नः कार्यः । यतस्तेनैव ब्राह्मणजन्मन. साफल्यं सिध्यति । भगवान् व्यासमुनिरपि—

**" ब्राह्मण्यं बहुभिरवाप्यते तपोभिस्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।**
**स्वाध्याये तपसि दमे च नित्ययुक्तो मोक्षार्थी कुशलपरः सदा यतस्व ॥"**
**इत्युपादिशति ।**

एतादृशो वेदविदेकोऽपि लब्धश्चेत् तेन जगतः कुशलं सिध्येत् । नाङ्गैर्वेपरीत्येन वेदं जानद्भिः परःसहस्रैर्वा तस्याशा कर्तुं शक्या । यतो वेदेष्वैतिहासिकीं दृष्टिं कुर्वता तु वेदकाले नगराणि कीदृशान्यासन् । वस्त्रालंकारादयः कथमभवन् । स्त्रीणां केशभूषावेषादयः कथमासन् । आर्याणां

शत्रवः के मित्राणि च क अभूवन्। द्राविडेभ्यस्तैरार्यैः किं गृहीतम्। अनार्याः कथं जितास्तैरित्यादि विदितं भवेत्। ततस्तत्रैवासज्य तेषा मतिरन्यथैव प्रवहेत्। परमस्माभिस्तु ये तत्त्वतो वेदमवलोकयंतः प्रवृत्तिनिवृत्तिधर्मयोर्याथात्म्यं वेदेभ्य एवाधिगत्य तदनुसारं सुविशुद्धाचरणेन स्वस्यान्येषां च जीवितं सफलं कुर्युस्तादृशा वेदवेदोऽपेक्ष्यंते। एतादृशान् वेदवेत्तॄन् निर्मातुं वेदशास्त्रपाठशालाभिः सर्वात्मना यत्नो विधेय इत्यावेद्यालं कुर्म इति सर्वं शिवम्॥ श्रीः॥

---

॥ श्रीः ॥

# ॥ आत्मयज्ञविमर्शः ॥ (१०)

**आत्मनि स्वप्रकाशाग्नौ चित्तमेकाहुतिं क्षिपेत्।**
**अग्निहोत्री स विज्ञेयश्चेतरे नामधारकाः ॥१॥**

**॥ स. सं. १२ ॥**

अथ ये परमार्थवस्तुनः संप्राप्त्यै प्रयतंते तैरिदमेकं रहस्यं मनसि दृढं धार्यम्।

"ध्येयं यावन्महत् प्रयत्नोऽपि तावत्परिमाणः कार्य एव। तथा त्यागोऽपि ध्येयपरिमाणानुसारी कर्तव्यः।"

मनुष्यः प्रायशः कथंचित् किंचिदेव साधनानुष्ठान विधाय तावतैवाहंकारग्राहग्रस्तः सन् व्यर्थमेवोच्छूनो जायते। तेनैव दोषेण तस्य प्रयत्नाः शिथिला भवंति। मोहाधीनश्च स भवति। पर्यवसाने समुन्नतिस्तु सुदूरं गच्छत्येव। ततोऽयं तपस्वी चिरमवनतिगर्त एव पतति। एतादृशमनर्थावहं

मिथ्यागर्वोद्धतत्वमधीरत्वं वा परमार्थमार्गेऽत्यंतमनुपकारि । तत्र हि–चित्तवृत्तिं सुस्थिरां कृत्वा सुशांतेन मनसा सुदीर्घः प्रयत्नश्चिराय विधेयो भवति । एवं महान् त्यागोऽपि तत्र भृशमावश्यकः । "तेन त्यक्तेन भुंजीथाः । त्यजतैव हि तज्ज्ञेयम् । त्यागेनैके अमृतत्वमानशुः ।" इत्यादिश्रुतेः ।

स च त्यागो न केवलं यथा– विश्वजिद्यागादौ स्त्रीपुत्राद्यतिरिक्त तत्कालविद्यमानं धनवस्त्रादि भौतिकं द्रव्यं त्यज्यते तद्वदपित्त्वात्मनोऽप्यस्मिन् परमार्थवस्तुप्राप्तिमार्गे त्यागो विधेयः । अत एव संध्योपासनप्रयोगांतर्गतमंत्राचमने "इदमहं माममृतयोनौ सूर्ये ज्योतिषि जुहोमि स्वाहा" इति मंत्रेण– "अथ य एष आदित्यमंडले पुरुषो दृश्यते०" तथा– "अंतस्तद्धर्मोपदेशात्" इति श्रुतिसूत्राभ्यां समुपवर्णिते सूर्यमंडलांतर्गतामृतज्योतिस्स्वरूपे परमात्मनि-अहं- स्वयमर्थाज्जीवात्मनो हवनं करोमीत्यात्मयज्ञः समुपदिष्टः ।

अस्यात्मयज्ञस्य निरहंकारवृत्तेर्वाभ्यासः "अष्टवर्षं ब्राह्मणं, एकादशे राजन्यं, द्वादशे वैश्यं उपनयीत ।" इति वेदेनोपनयनसंस्कारोत्तरकालमारभ्य प्रत्यहं सायंप्रातर्द्विवारं विहितसंध्योपासनायां कौमार्यवस्थामारभ्यैव यावज्जीवं कर्तव्यत्वेनोपदिष्टः । ब्राह्मणमुद्दिश्य शास्त्रेण प्रतिपादिताः सर्वे धर्मा आचाराश्च तेन ब्रह्मज्ञानार्हेण भवितव्यमेतदर्थमेवोक्ताः ।

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः ।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ इति स्मृतिः ।**

अस्यार्थः । वेदाध्ययनमधुमांसादिवर्जननियमसायंप्रातर्होमत्रैविद्यव्रतदेवर्षिपितृतर्पणपुत्रोत्पादनपंचमहायज्ञज्योतिष्टोमादियज्ञैश्चेयं तनुः शरीरं ब्रह्मज्ञानार्हं क्रियते । अर्थादुक्तयावद्धर्मानुष्ठातुरेव ब्रह्मविद्यायामधिकारो नान्यस्येत्यर्थः ।

विना त्यागममरपदप्राप्तिर्दुर्लभेत्युक्तमेव । अत आत्मयज्ञमंतरा ब्रह्मसाक्षात्कारः स्वप्नेऽप्यसंभवी । नन्वमृतपदप्राप्तिर्वा भवतु ब्रह्मसाक्षात्कारो

वाऽऽस्ता किंतु तत्र त्यागो भृशमावश्यक इत्युक्तं प्राक् । इदानीमात्मयज्ञस्यावश्यकतोच्यते । तत्कथं प्रतिज्ञातार्थत्यागोऽप्रतिज्ञातार्थोपादानमिदमनुष्ठीयत इति चेन्न । महान् त्याग एवायमात्मयज्ञो नाम । परदेवतातादात्म्यमुद्दिश्य व्यष्ट्याऽऽत्मद्रव्यत्यागस्य विधेयत्वात् । देवतोद्देशेन स्वीयद्रव्यत्यागस्य यागपदार्थत्वात् । अतो न पदार्थाज्ञानमूलकस्य त्वदुक्तदोषाभासस्यात्र प्रसक्तिः । अस्तु । प्रकृतमुच्यते । अस्य भारतवर्षस्याविच्छिन्नपरंपरया तन्निवासिनामस्माकं वा दुरदृष्टमेतादृशम् । यत्–

**न तिष्ठति तु यः पूर्वां नोपास्ते यस्तु पश्चिमाम् ।**
**स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥**

इति स्मृतेः प्रमादतोऽकरणे पञ्जतौल्यदायिनामप्रमादमनुष्ठाने तु प्रकृतब्राह्मण्याऽऽपादकाना संध्योपासनादिनित्यकर्मणा स्मरणमपि न क्रियते प्रायशो ब्राह्मणजात्यभिमानधारिभिः । अनुष्ठानं त्वत्यंत दूरमेव । नित्यकर्मण्यनादरस्तदुपेक्षणं चाय बुद्धिपुरःसर आत्मघात एव । स मा भवत्विति शास्त्रविहितं संध्योपासनादि नित्यं कर्म निःश्रेयसार्थिनाधिकारिणा नियमेनानुष्ठेयम् । तेन चित्तक्षेत्रे सदसद्विवेकस्य बीजान्युप्तानि भवेयुः । क्रमेण च तान्यंकुरितानि भूत्वेशकृपया बीजावापकर्त्रे सुफलान्यपि दद्यु. ।

**" भक्त्या त्वनन्यया शक्यमहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन० "**

इति यद्भगवतोक्तमर्जुनं प्रति तस्यायमर्थः-- नीहारसाम्यं दधन्मायाख्यं यद् भगवतो विचित्रं वासस्तेन भगवानावृतः । तस्य वाससोऽपनयनं विना भगवतः पारमार्थिकं स्वरूपं द्रष्टुमशक्यम् । अत एव— " हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये " इत्युपवर्णितं वेदेन ।

तच्च मायाभिधानं वसनं भगवतोऽनन्यभक्त्यैव दूरीकर्तुं पार्यते । सा च भक्तिः "सा परानुरक्तिरीश्वरे" इति भक्तिसूत्रोपदिष्टा वेदितव्या । तदनुकूलशारी-

रादिक्रियात्मिकाऽपि शास्त्रोपदिष्टा तथा ज्ञेया । इत्थं मायाऽऽवरणे निःसारिते भगवत्तत्त्वसाक्षात्कारः समुल्लसति । "तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति । तस्मादादावनन्यभक्त्या भगवंत प्रसाद्य ततस्तन्निकटे तत्साक्षात्काराभ्यर्थना सादरं विधातव्या । भक्तिप्रेम्णः परिपूर्णतासनकालमेव मायावासश्च्युतं भवतीति ज्ञेयम् ।

**"स भूमिं विश्वतो वृत्त्वा" "मया ततमिदं सर्वम् ।"**

इति श्रुतिस्मृतिभ्या चराचरेऽस्मिञ्जगति भगवान् सदात्मना सर्वत्रैवास्तीति निश्चीयते । किंतु तथाऽधिगमार्थं मनसा विशेषतोऽभ्यासः कार्यः । तत्प्राग्यत्र यत्र भगवतो विशिष्टांशेन संस्थितिः शास्त्रेण प्रतिपादिता तत्रैव यथाधिकारं विशेषतश्चित्त नेयम् । यथा—सर्वेषा हृदयमंदिरे भगवानस्त्येव । अथापि बालकैः पित्रोर्दैवताबुद्धया सेवा कार्या । स्वस्माज्ज्येष्ठा देववन्नमस्कार्याः । दारैर्भर्ता देववत्सेव्यः । गृहस्थेनातिथिः सत्कार्यः । वेदशास्त्रसंपन्नाना सद्वृत्ताना द्विजाना सादरं शुश्रूषा विधेया । साधवो देवबुद्धया वंदनीयाः । सज्जनाश्च यथायथं सभावनीयाः । इत्येवमभ्यासः क्रमशो वर्धितश्चेत्सर्वत्रैकः परमात्मा समुल्लसतीति भावना स्वीयस्वान्ते शनैः शनैः सुस्थिरा भवेत् । स्थावरं जगमं वा यं प्राणिनं वयं पश्यामस्तत्र भगवद्दर्शनस्यांतरायभूतमिदमास्ति यत्तस्य प्राणिनो गुणदोषावेवास्माभिर्दृश्येते । न तत्परतो विद्यमानं भगवत्स्वरूपं दृश्यते । प्राणिगतो दोषो ज्ञानद्वारा तदीयदिव्यस्वरूपज्ञानेऽन्तरायः । अतस्तस्य दोषस्य दर्शनं मा भवत्विति शास्त्रीयदृष्टेरेवांगीकारः कर्तव्यः । यदर्थं देवद्विजगुरुप्राज्ञाना पूजनं श्रद्धया विधेयम् । प्रेम्णादरेण च येषां प्राणिना दोषान् विस्मर्तुं शक्नुमो येषा चोपकृती सद्गुणांश्च प्रस्मर्तुं शक्नुमस्तेष्वाऽऽस्थितदेवभावस्य प्रतीतिः शीघ्रं भवितुमर्हति । अतस्तथाविधोऽभ्यासः सदा चित्तेन कार्यः । एवं चेदसंशयमुपकारः स्यात् । गुणदोषात्मकोपाधेः परतः स्थितस्य सच्चिद्रूपस्य प्रतीत्यर्थं गीताया दशमाध्याये भगवता याः स्वीयविशिष्टविभूतयोऽर्जुनाय कथिताः । तासु विभूतिषु

देवभावदर्शनाभ्यासे श्रद्धया विहितेऽभिलषितेष्टसिद्धिः स्यादेवेति शास्त्रप्रामाण्यान्निश्चीयते। स्वीय मनः सर्वदा भगवच्चरणारविंदसंचिंतनासक्तं यथा स्यात्तथा प्रयत्नः कल्याणेच्छुनालस्यं विहायानुष्ठेयः।

"मन्मना भव" इत्यर्जुनं पुरस्कृत्य सर्वान्प्रति भगवतोपदिष्टम्। अतस्तदर्थम्--

**श्रवणं कीर्तनं शंभोः स्मरणं पादसेवनम्।**
**अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्॥**

इति शास्त्रोपवर्णितनवविधभक्त्यंतर्गतार्चनभक्तेर्विशेषतो निरूपणं कृतम्। तद्यथा—स्वेष्टा भगवतः प्रतिमा विधाय यथाविधि तस्याः पूजनं शरीरमनसी भगवन्निकटे नेतुमेकः सुलभोपाय.। एतादृशार्चनभक्तौ मानसार्चनस्यापि महिमा विशेषतः कथितः। मनसैव नैकविधानभ्यर्हितानुपचारान् प्रकल्प्य सभक्त्युद्रेक तेषां भगवति समर्पणम्। इदं मानसमर्चनं यथा प्रतीयते तावन्न सुलभम्। यतो वयम्— प्रतिमाया. पूजनकाले मुखेन मंत्रानुच्चारयामो मनस्त्वन्यत्रैव कुत्रचिद्धावति। अस्माकं हस्ताः परमेश्वराय गंधपुष्पाद्युपचारसमर्पणे व्याप्रियंते। तदानीमेव मनो निरर्थकं कुत्रचिदटति। मानसपूजाया मनसस्तादृशं स्वैरवर्तनमशक्यम्। मानसार्चने हि या प्रतिमा मनसा प्रकल्पिता तस्या पूजासमाप्तिपर्यंतं मनसि सम्यक् स्थितिरपेक्षिता। मनः सुनिर्मलं प्रसन्न चेदेव तेन मनसा निर्मिता भगवन्मूर्तिः सर्वोत्कृष्टा स्यात्। सद्गुणाना परां काष्ठा ज्ञातु मनः समर्थं चेत्तादृशान् गुणान्विचिंत्य तैरुत्तमैर्गुणैः सपन्नो भगवानिति ध्यानं कर्तुं सुकरम्।

मानसार्चने पूजोपचारा मनसैव कल्पनीया इत्यस्मिञ्जगति य उत्कृष्टाः पदार्थास्तानुपचारतया प्रकल्प्य भगवते तेषां समर्पणं कर्तुं वयं शक्नुमः। इत्येवंरीत्या भगवतः स्वरूपस्य गुणाना चारित्रस्य च सुचिंतनं सहृदयस्यैव मानवोत्तमस्य शक्यम्। उक्तभगवदर्चने यस्य मन. सोत्साहं रमते। भगवत्स्वरूपेऽततः क्षणमात्रमपि तादात्म्यं च प्राप्नोति । स पुमान् धन्य

इति मुक्तकंठं ब्रूमः । मानसोपचारसमर्पणं यावत् यस्य मनसः पुरतो भगवन्मूर्तिः सुस्थिरा तिष्ठेत् तेनैवेमं मानसपूजायाः समयमुत्तरोत्तर वर्धयित्वा स्वीय मनः पवित्रतमं समुन्नत च कर्तुं शक्य स्यात् ।

**नलिनीदलगतजलमतितरलं तद्वज्जीवितमतिशयचपलम् ।**
**विद्धि व्याध्यभिमानग्रस्तं हरति निमेषात्कालः सर्वम् ॥**

इति भगवत्पादीयोक्तेरस्माकमायुर्भृश मर्यादितम् । सा मर्यादाप्यनिश्चिता । कालः कदा कथ चाक्रम्याऽऽयुस्ततु छिंद्यात्तत्केनापि ज्ञातुमशक्यम् । एतस्या दुःस्थितौ सदसद्विवेकवता मानुषेण भगवत्कृपया संप्राप्तस्य मर्यादितस्यापि नैजायुषः कालस्य स्वीयभव्यार्थं विनियोगः कार्यः । आत्मनोऽधिकः कालो निरर्थकवाग्व्यवहारे परनिंदाया वा व्ययीभवति । स तु वाण्याः कालस्य चापव्यय एव । नैजाऽऽयुषो हानिरेव मा । क्षणमात्रस्यापि कालस्य सदुपयोगकरण स्वीयभाग्योदयस्य लक्षणम् । सज्जनाः कालं सम्यक् सार्थकयंति । इतरे तु य कालमालस्यादिना यापयति तस्मिन्नेव काले संतः परमेश्वरस्य नामस्मरणादिकं कुर्युः । किंवा श्रुतिस्मृत्यादीना पठनपाठनाद्यभ्यासं विदध्युः । अथवाऽतर्मुखीभूय स्वीयगुणदोषाणा परीक्षणं कुर्युः । आहोस्वित् किमप्येकं परोपकारकृत्यं निर्वर्तयेयुः । तेन तेषामुत्तरोत्तरं समुन्नतिरेव भविष्यति ।

इत्थं कालस्य महत्त्वमवगम्य योग्यकाले योग्यकर्मणः कर्तारं कालवेत्ताऽयमिति कालतत्त्वज्ञाः कथयंति । विदुषा समाजे च तस्य प्रशंसा जायते । तस्मात् कालस्तथा यापनीयो यथानंतरं पश्चात्तापस्य प्रसक्तिः कदापि न स्यात् ।

तात्पर्यम्— भगवत्प्राप्त्यर्थं स्वीयमनसः कर्तृत्वस्य चैकांतेन विनियोजनमिदमेव कालस्य सार्थकतापादनम् । अयमेव चाऽऽत्मयज्ञः । तदुपायो वा । इति सर्वं शिवम् ॥ श्रीः ॥

" दिनमपि रजनी साय प्रातः शिशिरवसंतौ पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुंचत्याशावायुः ॥
भज गोविंदं भज गोविंदं भज गोविंद मूढमते ।
प्राप्ते सन्निहिते मरणे न हि न हि रक्षति डुकृञ्करणे ॥

॥ श्रीशकराचार्याः ॥

---

॥ श्रीः ॥

# ॥ वैदिकधर्मस्य कालपरिच्छेदविमर्शः ॥ (११)

**" धर्मान् वक्ष्यामि शाश्वतान् ।"**
**" आचारश्चैव शाश्वतः ।"**

अथान्यदेशीयाना सरण्या विचार कुर्वनामाधुनिकाना विद्वन्मन्याना मत-मित्थ परिदृश्यते । श्रुतिस्मृत्युपदिष्टाः सर्वे धर्मनियमा यदा श्रुतिस्मृतयोऽभूवंस्त-त्कालोपयोगिन एव ते धर्मनियमा नेदानीतनकालोपयोगिनः । यतः साप्रतिकस्य विज्ञानशास्त्रस्याभ्युन्नत्या सुसंस्कृते समये तदानींतनाना नियमाना कोऽप्युप-योगो भवितुमशक्यः । ऐदानीतनानामस्माक ह्याकाक्षास्तत्तद्वस्तुविषयिणीरपेक्षाः साकल्येन परिस्थितिं च वयं यथा जानीमस्तथा श्रुतिस्मृतिकृद्भिर्ज्ञातुमशक्यमेव । नून ते महान्तः स्युर्विद्वासश्च स्यु. । तेषा नदितरजनापेक्षया सव्येतरपार्श्व-संबंधि ज्ञानमप्यधिक स्यात् । किंचिद्भूतकालीनेतिहासोऽपि तैरधिगतो भवेत् । एवं भविष्यत्कालसबधीन्यनुमानान्यपि स्वल्पानि कथंचित्कर्तुं ते शक्नुयुः । अनया मर्यादितदृष्ट्यैव ते त्रिकालज्ञा इति वक्तुं शक्येत । अथापि सहस्रशः समाभ्यः परस्तात् कीदृग्विधा परिस्थितिरुद्भविष्यतीति तैः कथं ज्ञायेत । कालविषयिणी तेषा कल्पनाऽपि धाव धाव कियती धावेत् । अत एव तेषा विचारसरणिरैदानीतनी सततिं नियमयितुमसमर्थैत्येव सिध्यति ।

इदानींतनैस्तु पुंभिः साप्रतिकीं परिस्थितिं निपुणं निरीक्ष्य तदनुसारेणाधुनिकाना प्रश्नानां निर्णयः कर्तव्य इति ।

रमणीयेय विचारपद्धति. । स्थूलदृष्ट्या विमृश्यमाणे नास्यां दोषो दृश्येत । प्रत्युत नूत्ना परिस्थितिमुपेक्ष्य प्रत्नेष्वंत्यताऽऽसक्तचेतसः सनातनिन एव दुरभिमानग्रहग्रस्ता इत्यापाततः कोऽपि ब्रूयात् । परंत्वस्य प्रकृतविषयस्यापरोऽप्येक. पार्श्वभागो विद्यते । सोऽवश्यं विचारणीयः । तथाहि— प्राचीनैः कालविशेषमुद्दिश्य ने ते सामाजिकधर्मनियमाः कथिताः । उत तेषु नियमेषु त्रिकालाबाध्यं किमप्यस्तीति कियान् कालस्तैः स्वीयविचाराणामुद्देश्यीकृतः । तेषां कालविषयिणी कल्पना कीदृगासीत् । तैः कथिता नियमाः साप्रतिकेन विज्ञानशास्त्रेण वितथा भवंति किम् । कति वा नियमा मिथ्या जाताः । इत्येवमादीना प्रश्नाना निर्णयमंतरेण नाकस्मात् परप्रत्ययनेयमतिना भाव्यम् । तत्रादौ मानव धर्मशास्त्रमवलंब्यैव विमर्शं कुर्मः । तत्र प्रथम एवाध्याये सृष्टेराद्यंतौ कथं भवत इत्यस्य विचारः कृतः । यथा— ऋग्वेदे " तम आसीत्तमसा गूढमग्रे प्रकेतम् " इत्युपदिष्टम् । तद्वन्मनुनाऽपि भगवता— " आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् " इति कथितम् । तदनंतरं केन क्रमेण सृष्टिर्जायते । तस्याः प्रकामं विस्तारश्च कथं भवति । जीवानामस्या सृष्टौ स्थानं कुत्र वर्तते । पिंडब्रह्मांडयोः संबंधः कीदृशस्तद्विविच्य सृष्टेर्लयः कथं कदा वा जायते तदपि निरूपितम ।

**" मन्वंतराण्यसंख्यानि सर्गः संहार एव च ।**
**क्रीडन्निवैतत्कुरुते परमेष्ठी पुनःपुनः " ॥**

द्वात्रिंशकोट्यधिकचत्वार्यब्जमानुषवत्सरैर्ब्रह्मदेवस्यैकं दिनं जायते तस्मिन् दिने चतुर्दशमन्वंतराणि भवंति । गीतायामपि भगवता—

**सहस्रयुगपर्यंतमहर्यद् ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रांतां तेऽहोरात्रविदो जनाः ॥**

इत्युक्तम् । देवाना युगसहस्रेण ब्रह्मदेवस्यैकमहर्जायते । रात्रिरपि तावती निर्दिष्टा । कृतत्रेताद्वापरकलिरित्येतद्युगचतुष्टयस्य कालगणनायां

कृतार्थं विंशतिसहस्राधिकत्रयश्चत्वारिंशल्लक्षाणि वत्सराणि भवंति । यद्वत् खगोलशास्त्रे ग्रहादीनामंतरस्य कालस्य च मापनार्थं साप्रतमपि मानुषवत्सराणामुपयोगमकृत्वा प्रकाशवत्सराणामुपयोगः क्रियते । तद्वदेवेदमवगतव्यम् । तद्यथा– एकस्मिन् विपले प्रकाशः षडशीतिसहस्राधिकैकलक्षमैलपर्यंतं गच्छति । षोडशसहस्राधिकलक्षद्वयविपलैरेकं दिन जायते । तादृशैः षष्ठ्यधिकत्रिशतदिनैरेकं वर्षं ज्ञेयम् । एतादृश एकस्मिन् वर्षे प्रकाशः कियद्दूरं गच्छति तदालोचयत । इत्थ प्रकाशवर्षपरिमाणमादायैव खगोलशास्त्रमित्थं कथयति । शौरिवृंदातर्गताऽत्यंतं सन्निहिता तारैकाविंशतिसहस्रसंख्याकप्रकाशवर्षाणामंतरे वर्तते । तदंतर्गतैव प्रकाम दूरस्था तारा त्रिंशत्सहस्राधिकद्विलक्षप्रकाशवर्षाणामंतरे तिष्ठति ।

तात्पर्यम्--खगोलशास्त्रसबंधीनि दिक्कालगणनाप्रमाणानि यथा सामान्यमतेर्मनुष्यस्य विस्मयावहानि तद्वच्छ्रुतिस्मृतिपुराणातर्गतान्यपि कालगणनाप्रमाणानि मानुषबुद्धेरगोचराणि सनि ।

अथापि कालसंबंधिनाऽनेन प्रचंडतरप्रमाणेन कादिशीकतामस्वीकृत्य स्मृतिकारैः प्रत्नैर्दिव्यपुरुषैः सृष्टेः सर्वसामान्यनियमानुसारेण भवित्रीमितिहासस्य पुनरावृत्तिं चित्ते कृत्वा—

**अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।**
**अन्ये कलियुगे नृणां युगन्हासानुरूपतः ॥**

इति समासतो विमर्शः कृतः ।

तात्पर्यम्– शाश्वतधर्मकथनावसरे स्मृतिकृद्भिः कियान् प्रचंडः कालो मनस्याऽऽनीत इदमादौ सम्यगवधार्य पश्चात् पाश्चात्याना पदेषु स्वीयपदनिक्षेपं कृत्वैवेदानींतनाः सर्वे सर्वस्यैव मानवेतिहासस्य दश द्वादश वा सहस्रवत्सराभ्यंतरे यत्संकोच कुर्वंति तदयुक्तमयुक्तं वेति विचार्यताम् । वेदा अपौरुषेया इति सप्रमाण सोपपत्तिकं च वदत्स्वप्यस्मास्वन्यदेशीयेतिहासकृतः खिस्ताब्दात् प्रागंततः पंच षड् वा सहस्रवत्सरावधि वेदस्योत्पत्तिकालं महता

कृच्छ्रेणांगीकर्तुं कथंचिदुन्मुखा भवंति। वयं तु कलियुगस्यैव द्विचत्वारिंशदधिकपंचसहस्रवर्षाणि गतानि तत्प्राक् कृतत्रेताद्वापरयुगाना लक्षावधिवत्सरात्मकः कालोऽतिक्रांत इति पंचागादिषु साधारं लिखामः।

त्रेतायुगे श्रीरामचन्द्रावतारो जात इत्यस्माभिः सप्रमाणमुक्तमपि साप्रतिकानामांग्लसंस्कारविद्धचित्ताना तदसंमतमिव भासते। यतस्तेषां शास्त्रीयसुविस्तृतकालस्य पाश्चात्त्येतिहासकृदुक्ताल्पकालाभ्यंतरे संकोचः सुतरामिष्टः। ये ये सास्कृतिका उत्कर्षापकर्षाः परिस्थितेरन्यथाभावाश्च साप्रतिकानामितिहासकाराणा स्वैर वक्तुमिष्टास्ते सर्वेऽपि पच षड् वा सहस्रवत्सराभ्यंतर्गता एव। परतु श्रुतिस्मृत्योः प्रश्नः कृतश्चेत्ते श्रुतिस्मृती स्वीया कालमर्यादा कियती विशालाऽस्ति तदुक्त्वा नादृशं प्रदीर्घं कालमुद्दिश्यावां शाश्वतिकान् धर्मनियमानुपदिशाव इति वदेताम्।

यथा-श्रुतिस्मृतिभ्यामुद्दिष्टा कालमर्यादाधुनिकाना पुरावृत्तकृन्मन्यानामश्रद्धेया भासते। तथा-ताभ्यामेव श्रुतिस्मृतिभ्या पिंडब्रह्माडयोर्योविमर्शः कृतः, सोऽप्यगम्यः सुदूरमुपेक्ष्य इति ते मन्वते। श्रुतिस्मृती तु पिंडब्रह्माडयोर्विमर्शसमये न केवल मनुष्याणामेवापित्त्वाब्रह्मस्तंबपर्यंतं सर्वस्या एव स्थावरजंगमात्मकसृष्टेर्विमर्शं कुरुतः। ' मनुष्यो यदृच्छावशाज्जायते। तथैवासहायः सन् विनश्यति च ' इत्येव स्वैरा संकुचिता कल्पनामादाय वैदिकधर्मशास्त्रस्य सुविचारः कदापि भवितुमशक्य.।

अनया सृष्ट्या साकं मनुष्यस्यात्यत सन्निहितः संबधः कथमस्ति। प्राणिनः स्वस्वशुभाशुभकर्मानुसारेण पृथक् पृथक् शरीराणि धृत्वा देवपितृमनुष्ययक्षराक्षसगंधर्वदैत्यदानवपिशाचशाकिनीडाकिनीभूतवेतालपशुपक्षिकृमिकीटतरुलतागुल्मपाषाणादिस्थावरजंगमयोनिष्वनवरतं पुनः पुनः कथ भ्रमंतीत्येदपि धर्मशास्त्रं व्यक्त प्रतिपादयति। इत्थमुपदिशति च—

**एता दृष्ट्वाऽस्य जीवस्य गतीः स्वेनैव चेतसा।**
**धर्मतोऽधर्मतश्चैव धर्मे दध्यात्सदा मनः॥ इति।**

अस्मिन्नतिगंभीरे विषये वैदिकशास्त्रप्रदर्शिता दिगुपादेयाऽनुपादेया वेति निर्णेतु साप्रतिकानि यथेच्छमुन्नतिं गतान्यपि विज्ञानादिशास्त्राणि सर्वथासमर्थान्येव । यतोऽत्र विषये तानि कुंठितान्येव भवंति । मृत्योरनंतरमात्मनोऽस्तित्वं वर्तत इति वदतः कस्यचिदन्यदेशीयस्य "देवानांप्रियोऽयम्" इत्युपहासं कुर्वंतोऽपि बहवो वर्तंते । प्रायशोऽसुरसदृक्षाः प्राणिन एव प्रकृतोऽयं विचारोऽहिफेनवन्मादक इति प्रलपंति । अथ च गाढं नास्तिक्यमाश्लिष्य मृत्योरनंतरं जीवस्य शुभाशुभा वा काऽपि गतिर्नास्तीत्यधगोलांगूलन्यायेन ब्रुवंति । अत एव जीवानां स्वस्वसम्यगसम्यक्कर्मानुसारेणोत्तमाधमयोनिषु गतिनिदर्शकाः श्रौतस्मार्तधर्मनियमाः प्राक्काले कथंचिदुपयुक्ता अपि वर्तमानसमयेऽकिंचित्करास्त उपेक्ष्या एवेति वदंतो विषाणपुच्छरहिताः पशव एव वक्तव्याः । यतो जीवानां पुनर्जन्मसंबंधिनः श्रुतिस्मृत्युपदिष्टा धर्मनियमाः सांप्रतं नोपयोगिन इति वक्तुमाधुनिकानि निरवलंबनानि विज्ञानादिशास्त्राणि सर्वथाऽपात्राणीति निश्चयेनाधिगंतव्यं धीमता पुरुषेणेत्युक्त्वाऽलं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

## ॥ भारतीयपंचजनोत्पत्तिविमर्शः ॥ (१२)

**गायंति देवाः किल गीतकानि**
**धन्यास्तु ये भारतभूमिभागे ।**
**स्वर्गापवर्गस्य च हेतुभूते**
**भवंति भूयः पुरुषाः सुपुण्याः ॥१॥** वि. पु. ।

अथास्मिन्नवखंडभूमंडलमंडनायमानकर्मकाडस्थलभरतखंडे मनुष्यजन्मप्राप्तिः पूर्वोपार्जितपुण्यपुंजलभ्येति महात्मना वचनतः शास्त्रतश्चाधिगम्यते । तथा हि— भगवत्पूज्यपादश्रीशंकरमस्करींद्रा इत्थमुपदिशंति ।

**"दुर्लभं भारते जन्म तत्र मानुष्यकं नृणाम् ।" इति ।**

विष्णुपुराणेऽपि—

**अत्रापि भारतं श्रेष्ठं जंबुद्वीपे महामुने ।**
**यतो हि कर्मभूरेषा ततोऽन्या भोगभूमयः ।**
**भारते लभते जंतुर्मानुष्यं पुण्यसंचयात् ।**

इति च । इदमेव पुण्यवता प्राणिना जन्मरहस्यं देवीभागवते सरसतया व्यक्तमुपवर्णितम् । तथा हि— आकाशादिपंचभूतारब्धाना स्थावरजंगमाना प्राणिना मध्ये मनुष्यजातिरुत्तमेत्यत्र न काऽपि विप्रतिपत्तिः । यतोऽयं मनुष्यः को धर्म. कश्चाधर्म इत्येवं धर्माधर्मविवेकं कर्तुं शुभमशुभं च कर्मानुष्ठातुं त्यक्तुं च समर्थः । शास्त्रतोऽधिकारी च विद्यते । उक्तं ह्युत्तरमीमासाया महर्षिणा बादरिणा "मनुष्याधिकारत्वात्" इति । किंत्विम धर्माधर्मविवेकं शुभाशुभकर्मविवेकं च कर्तुं समनुकूला परिस्थितिः सर्वदेशेषु सर्वासु च मनुष्यजातिषु सुतरां दुर्लभा । तदर्थं पुण्यविशेषेण भाव्यम् । अत एव यत्रानादिकालमारभ्य वेदशास्त्राध्ययनाध्यपनस्य परपराऽविच्छिन्नभावेनाद्ययावत्प्रवृत्ता विद्यते । यत्र ता परपरामनुसृत्य जायमानस्य ज्ञानस्य साक्षात्कारवंतो महापुरुषा जगदुद्धारार्थं समस्तप्राणिना हितार्थं चासकृदवतरंति । यत्र साक्षाद्भगवता चराचरविश्वसृजा—

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।**
**अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥**
**परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥**

इति स्वीयप्रतिज्ञानुसारं श्रीनृसिंहश्रीरामश्रीकृष्णप्रभृतीनवतारान् धृत्वा साधूना परिपालन दुष्टाना दंडन च विधाय धर्मसस्थापनं कृतम् । एतादृशे पुण्यभूमौ भारतवर्षे जीवाना जन्मप्राप्तिः परमा भाग्यसंपदित्यत्र न कोऽपि संदेहः । परं भारतवर्ष एव कस्मिंश्चिन्म्लेच्छकुलेऽथवा सुधारकब्रुवा नास्तिकानां गृहे जनिर्जाता चेत् सनातनवैदिकधर्मे मूलतः श्रद्धायाः

क्रमेण तस्या वृद्धेश्चाऽऽशा सुतरां दूरैव। किंतूत्तरोत्तरं द्वेष एव वृद्धिं यायात्। संदृश्यते चाधुना प्रतिपदं प्रायस्तथैव। तेन चांते सर्वात्मनाऽधोगतेर्नान्यत् किमपि सिध्येत्। अमृतेन परिपूर्णं स्वर्णपात्रमोष्ठप्रांते समागतम्। परं तदमृतं जठरप्रवेशात्प्रागेव प्रमादतः क्षितौ च्युतं चेत्किमतोऽपरं दुरदृष्टं विद्यते। तस्माद्भारतवर्षांतर्गतासु वर्णाश्रमविभूषितासु जातिषु तत्रापि सदाचारनिष्ठ-विद्वद्ब्राह्मणकुले जननं विशिष्टभाग्यायत्तमेवेति विज्ञेयम्। तदुक्तं श्रीमति देवीभागवते—

दुर्लभा मानुषी जातिः सर्वजातिषु भारते।
सर्वेभ्यो ब्राह्मणः श्रेष्ठः प्रशस्तः सर्वकर्मसु॥
ब्रह्मनिष्ठो द्विजश्चैव गरीयान् भारते सति।
निष्कामश्च सकामश्च द्विविधो ब्राह्मणः किल॥
सकामाच्च प्रधानो वै निष्कामो भक्त एव च।
कर्मभोगी सकामश्च निष्कामो निरुपद्रवः॥
सकामिनो ईशनिष्ठाः स्वर्गतिं प्राप्य शोभनाम्।
भारते पुनरायाति तेषां जन्म द्विजातिषु॥
कालेन तेऽपि निष्कामा भवंति ब्रह्मवादिनः।
भक्तिं च निर्मलां तेभ्यो दास्यामीति च निश्चितु॥

"ते पुनरायाति भारते।" "भारते मानुषी जातिः।" "भारते द्विजो गरीयान्।" इत्येवमादिप्रतिपादनतो भारतवर्षोपरि देवतानां वैदिकधर्म-निष्ठानां महर्षीणां च निरवधिकमातारिकं विशुद्धं प्रेम विद्यत इति सुव्यक्तं भवति।

इदं भारतं वर्षं चातुर्वर्ण्योपेतानामस्माकं धर्मभूमिरस्ति। कर्मभूमिर्विद्यते। पुण्यभूमिर्विराजते। इदं भारतं वर्षं निसर्गतो धर्मप्रवणानामस्माकं नैकजन-नस्यैक आधारो विद्यते। कृते सुप्रयत्ने जनिमृतिप्रवाहात्मनः संसारादुन्मोच-कमाद्यं पारंपरीकं रिक्थं वर्तते। भारतमंतरेण नान्या गतिरस्माकम्। अस्यामेव

भारतभुवि देवैर्ऋषिभिश्च समस्तजगद्धितायाविर्भूय पावनानि कर्माणि कृतानि। द्विजैर्यथाधिकारं यज्ञादयो विहिताः। अस्मिन्नेव भरतखंडे—

" गंगा सिंधु सरस्वती च यमुना गोदावरी नर्मदा ।
कावेरी शरयू महेंद्रतनया चर्मण्वती वेदिका
क्षिप्रा वेत्रवती० ॥ "

इत्याद्याः सरितो दर्शनस्पर्शनावगाहनाचमनजलपानादिभिश्चिराय संचितं दुरितं निर्मूलयन्त्यः सततं प्रवहंति। अस्यामेव भारतभूमौ श्रीरामचंद्रो जगदुपद्रवकारिणो रावणादिकान् दुर्वृत्तान् हत्वाऽस्मदुद्धारार्थं परमपवित्राणि चरित्राणि लीलया चकार। अस्यामेव वसुमत्यां वासुदेवः श्रीकृष्णो मथुरावृंदावनादिक्षेत्रेष्वद्भुतान्यपि पावनतमानि दिव्यानि चरितानि विधाय वैदिकधर्मसंस्थापनं पुनरपि यथापूर्वकं कृतवान्। अस्यामेव रत्नगर्भायां वसिष्ठविश्वामित्रभरद्वाजकश्यपात्रिगौतमप्रभृतयो महर्षयस्त्रिविधानि तपांसि चक्रुः। भगवता वेदव्यासेन महाभारतसदृक्षमनुत्तममितिहासरत्नं प्रणीतम्। ब्रह्मनिष्ठेन शुकदेवेन परीक्षिताय राज्ञे श्रीमद्भागवतं श्रावितम्।

महर्षिणा वाल्मीकिना परिशुद्धं श्रीरामचरित्रं प्रणीतम्। भगवत्पूज्यपादश्रीमच्छंकरयतींद्राः प्रस्थानत्रयभाष्यप्रभृतिग्रंथरत्नैः समस्तजगत्कल्याणकारि धर्मरहस्यं स्पष्टं प्रकटयामासुः। श्रीमन्माधवामात्याश्चतुर्वेदभाष्यमारचयामासुः। त एव विद्यारण्यस्वामिनः पंचदशीविवरणप्रमेयसंग्रहतैत्तिरीयोपनिषद्भाष्यदीपिकासदृक्षान् बहून् ग्रंथमणीन् संग्रथयाबभूवुः। श्रीमत्सुरेश्वराचार्यास्तैत्तिरीयबृहदारण्यकभाष्यवार्तिकानि चक्रुः। श्रीज्ञानेश्वरसमर्थश्रीरामदासएकनाथतुकारामप्रमुखाः सत्पुरुषा ज्ञानेश्वरीदासबोधएकनाथीभागवतेत्यादिप्राकृतग्रंथवर्यैः सर्वेषां श्रेयोऽर्थं वैदिकधर्ममंदिरं समुद्घाटयामासुः। इत्येवमभ्यर्हितगुणगणमंडितं पवित्रतममस्माकं भारतं वर्षं समुज्जृंभते।

वेदविहितधर्माय प्रोत्साहनप्रदानं वेदनिषिद्धकर्मणो जनताया भृशं पराङ्मुखीकरणमिदं भारतीयराजनीतेः सर्वप्रधानं तत्त्वम्। एतादृशं सनातन-

धर्मोपबृंहकं स्वाराज्यमस्माभिरपेक्ष्यते । अधर्मवर्धिका धर्मविघातका च या नीतिः सा नैव राजनीतिः । अनीतिरेव सा । अनीतिकृतामंते नाश एव भविनेति श्रुतिस्मृतिपुराणानि महांतश्च वर्णयंति । किं तु सनातनवैदिकधर्मसंरक्षणाय बद्धपरिकरास्तदर्थं च यावज्जीवं प्राणपणेन योद्धारः क्षत्रियवीराः साप्रतं कुत्र संति । साप्रतम्—

**शस्त्राशस्त्रिकथैव का नवमवद्गीर्वाणपाणिंधमाः ।**
**पंथानो दिवि संकुचंति वसुधा वंध्या न सूते भटान् ॥**

इत्यवस्था वर्तते । अद्यापि तादृशान् वीरान् निर्मातुमिच्छा, तदर्थं यथासंभव प्रयतनं चैतदप्यस्य भारतवर्षस्योदयचिन्हमित्यवगंतव्यम् ।

आस्तामिद प्रसंगागतं कथंचित् । प्रकृतस्य विषयस्येत्थमुपसंहारः कृतस्तत्रैव देवीभागवते--

**दत्तमेवोपभुंक्ते ना नादत्तमुपतिष्ठते ।**
**भुक्त्वा स्वर्गादिकं सौख्यं पुण्यवान् जन्म भारते ॥**
**लभेद्विप्रकुलेष्वेव क्रमेणैवोत्तमादिषु ।**
**भारते पुण्यवान् विप्रो भुक्त्वा स्वर्गादिकं फलम् ॥**
**पुनः सोऽपि भवेद्विप्रस्तथैव क्षत्रियादयः । इति ।**

ननु पुण्यकर्मकृतामेव ब्राह्मणादिवर्णाना भारतवर्षे सत्कुलेषु जन्म जायते चेत् तस्मिन् भारत एवेदानीं सत्कुलोत्पन्ना अपि ब्राह्मणादयो वर्णाः स्वयमधर्मकारिणः सतः स्वैरमधर्माय प्रोत्साहनदातारश्च प्रायश उपलभ्यंते । तत्कुत इत्याशंकायां 'दारुणः शाप' एव तस्या उत्तर जानीहि । तथाहि— संपद्विनाश. । अनारोग्यम् । अचिकित्स्यव्याधिपीडा । दुर्योनिषु जननम् । इत्याद्यनिष्टहेतूना शापाना मध्येऽतिदारुणः कोऽपि शापः स्याच्चेत् स बुद्धिभ्रंश एव । यतस्तेन बुद्धिभ्रंशकरेण शापेन मनुष्यः स्वहितपराङ्मुखो नियतं जायते । धर्मं प्रत्यधर्ममधर्मं प्रति च धर्मं मनुते । अतो बुद्धिनाशः शरीरिणामधःपातस्य लक्षणमस्तीति देवीभागवत उपाख्यानतः स्पष्टी-

कृतम् । तथाहि—एकदाऽस्मिन् भारते वर्षेऽतिभीषणमवर्षणं पतितम् । बहुकालं यावत् पर्जन्यस्य नामापि न श्रुतम्। धान्यस्यैकः कणोऽपि दुर्लभः संवृत्तः । मानुषैर्मानुषान् हत्वा तदशनस्य प्रसंगः प्राप्तः । जलतृणादेरभावाद्गोऽश्वादयः पशवो दिवंगताः । अन्नस्याभावान्मनुष्याः प्रतिक्षणमकस्माद्विगतासवो भवंति स्म। सर्वत्र हाहाकारः प्रवृत्तः। निखिलोऽपि जीवनिवहः साध्वसेन कांदिशीकः संवृत्तः । इत्थं घोरतरायां विपत्तौ निमग्नं प्राणिसार्थं दृष्ट्वा सर्वैर्ब्राह्मणैरेकत्र संघीभूय, अग्रे किं कर्तव्यं, कथमस्मात्संकटात्सर्वेषां मुक्तिः स्यादित्यस्य विचारः समारब्धः । इतस्ततः सर्वत्र सुदूरमन्वेषणेन तेषां कर्णपथ इत्थं सुवार्ता समागता । यन्महर्षेर्गौतमस्याश्रमपदे तस्य तपःप्रभावात् "सर्वसमृद्धिरस्तीति ।" श्रुत्वैवं तत्रैव गच्छाम इति निश्चित्य ब्राह्मणप्रमुखाः सर्वेऽपि गौतमाश्रम गताः। आगतांस्तानन्नोदकस्य क्षामतया दुरवस्थाक्रांतानवलोक्य ऋषेश्चित्त भृशं करुणयाऽऽर्द्रं सजातम् । ततो यूय सर्वेऽपि यथासुखमत्र तिष्ठत । न काऽपि चिंता कार्येति तानाश्वास्य भगवतीं गायत्रीं समुपास्य प्रसन्नायास्तस्याः सकाशादेक पूर्णपात्र समासादितं तेन महर्षिणा । तस्मात्पूर्णपात्राद्गायत्रीदेव्याः प्रभावेण यथेच्छमन्न द्रव्यं वस्त्रजातं तथेतरेऽप्यभिलषितपदार्थाः प्रादुर्भवंति स्म । षड्रसान्नस्य पर्वततुल्या राशयस्तस्मात्पात्राद् बहिरागत्य तानागतान् ब्राह्मणादीनाश्रमाश्रितांश्चेतरानपि परितृप्तान् प्रकुर्वंति स्म । इत्थ सुवृत्तं श्रुत्वा तत्क्षण एव नानादेशीया बुभुक्षिता जना गौतमाश्रमं प्रति प्रधाविताः । तस्मिन्नाश्रमे वैदिकानां नित्यं वेदघोषः संप्रवृत्तो बभूव । धर्माधर्मविचारः सादरं प्रस्तुतः । शास्त्रिणा तत्तच्छास्त्रार्थस्य चर्चा लब्धपदा आसीत् । समारब्धेषु यज्ञादिषु यथेष्टं हविर्भागमुपभुज्येंद्रादिदेवताः संतृप्ता अभूवन् । सर्वत्राऽऽनंदस्य साम्राज्यं प्रसृतम् ! इत्थं द्वादशसमायावद्गौतमाश्रमे निष्प्रतिबंधं स्वर्गसुखं प्रादुर्भूतम् । महर्षेर्गौतमस्य शरच्चंद्रचंद्रिकावद्धवला कीर्तिः सर्वत्र प्रसृता । स्वर्गलोके देवेंद्रोऽपि गौतमस्य विशुद्धां कीर्तिं मुक्तकंठं गायतीति नारदेनाऽऽगत्य गौतमाय निवेदितम्। अथापि गौतमस्य चित्तं गर्वलेशोऽपि नास्पृशत् । किंत्वत्रांतरे तदाश्रितब्राह्मणाना दुर्दैवं हठात् प्रादुर्भूतम् ।

तेषां चित्ते गौतममुनेर्निर्मलां कीर्तिं श्रुत्वा मत्सरः प्रादुर्भूतः। गौतमस्य गंगातरंगवदुज्ज्वला कीर्तिः कलंकिता यथा स्यात्तथा प्रयताम इति दुराकांक्षा तेषां मनस्युद्भूता। अनंतरं सर्वत्र पर्याप्तमेघप्रवर्षणेन सुभिक्षे संजाते तैर्दुर्ब्राह्मणैरेकास्थिपंजरावशिष्टा प्रकामं वृद्धा संयमिनीं पुरीं गंतुं निहितप्रस्थाना गौर्गौतमस्य यज्ञशालायां छलेन प्रवेशिता। स महात्मा मुनिर्गौतमो वैतानाग्निषु हवनकर्मणि व्यापृत आसीत्। तेन हु हुं इति शब्दमात्रेणैव तस्या दूरीकरणं कृतम्। परं निमित्तापेक्षिणी दैवहता सा गौस्तत्क्षण एव तस्यां होमशालाया गतासुरभवत्। तत्समकालमेव तैः कृतघ्नैर्ब्राह्मणैः "गौतमेन गोहत्या कृता" इत्युच्चैः कोलाहलः कृतः। गौतमस्य चित्तं भृशं खिन्नमभूच्चकितं च जातम्। किमत्र रहस्यमिति तेन महर्षिणाऽतर्दृष्ट्याऽस्य विमर्शः कृतः। तदा तेषां कृतघ्नानामत एवात्मनं दुष्टानां ब्राह्मणानामेवेदं कपटकृत्यमिति व्यक्तमधिगतं तेन मुनिना। ततस्तीव्रतरक्रोधाक्रांतचेतसा तेन तेभ्यः कृतघ्नेभ्यो दुर्ब्राह्मणेभ्यः शापः प्रदत्तः। तेन शापेन तेषां धनादेर्नाशो नासीत्। देहदंडनमपि न जातम्। किं तु सर्वेषामुत्कर्षाणामादिमं कारणं या धर्मबुद्धिः सैव समूलं विनष्टाऽभवत्। सोऽतिभीषणः शाप इत्थमासीत्—

वेदमातरि गायत्र्यां तद्ध्याने तन्मनोर्जपे।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः॥
वेदे वेदोक्तयज्ञेषु तद्वार्तासु तथैव च।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः॥
अद्वैतज्ञाननिष्ठायां शांतिदांत्यादिसाधने।
नित्यकर्माद्यनुष्ठाने शिष्टाचारे तथैव च।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः॥
श्रौतस्मार्तसदाचारे ज्ञानमार्गे तथैव च।
भवतानुन्मुखा यूयं सर्वथा ब्राह्मणाधमाः॥ इति।

अतिभयंकरोऽयं शापः। तेनैव ब्रह्मकुलोत्पन्ना बाडवाः पाखंडिनो, नास्तिका, बौद्धाद्यवैदिकदर्शनेषु श्रद्धावंतः, कन्याविक्रयिणः, भाषाविक्रयिणः, अनीतिमंतः, अकार्यकारिणः, वैतंडिकाः, निष्पन्नतत्पांचजन्य-

सद्दक्षाश्च सवृत्ताः । श्रुत्वेत्थं महर्षेरत्यत दारुणं शापं ते सर्वे दुर्ब्राह्मणा अपत्रपया मषीमुखा बभुवु. स्वीयापराधस्य साक्षात्फलमिदमिति भावयामासुश्च । ततोऽनुतापदंदह्यमानैस्तैर्गौतमस्य पुरत साष्टांगं प्रणिपत्य भगवन् 'प्रसीद प्रसीद' इत्युद्घोषः कृतः । तेन किंचिन्निवृत्तकोपः स मुनिस्तानवदत् । मद्दत्ताच्छापान्मुमुक्षा चेद्गायत्रीदेव्या उपासनं कुरुत ।

**मच्छापस्य विमोक्षाय युष्माकं स्याद्यदीषणा ।**
**तर्हि सेव्या सदा सर्वैर्गायत्री श्रद्धया शुभा ॥**

इति । एतावता स्वीयब्राह्मण्यपरिरक्षणाय भूदेवानां वाङ्मनःकायप्रवृत्त्या कीदृश्या भवितव्य तत्सुव्यक्त सिध्यनि । अतस्तन्न विस्मर्तव्यं कदापि भूसुराभिमानिभिरित्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

## ॥ दैवयोग (प्राक्कृतकर्म) विमर्शः ॥ (१३)

**दैवं फलति सर्वत्र न विद्या न च पौरुषम् ।**
**पाषाणस्य कुतो विद्या येन देवत्वमागतः ॥१॥**
**यथा धेनुसहस्रेषु वत्सो विंदति मातरम् ।**
**तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥२॥**

अथ या या क्रिया सा सफलेति निरपवादसिद्धांतात् सदसत्कर्मणा तत्फलाना च जालकं क्षण विमृष्टं चेत् प्राणिना कर्तृत्वशक्तिः कथं परिच्छिन्ना अर्थान्नितरा मर्यादिताऽस्ति तद्व्यक्तं दृश्येत । यदयं मनुष्यप्राणी जनिमागच्छति । तदमुकस्या जातौ, अमुकस्या परिस्थितौ, अमुकस्मिन् वा देशे, मया जनिर्गृहीतव्येति निश्चित्य जायत इति वक्तुमशक्यमेव । अतींद्रियत्वात्तद्धेतोः । जन्मानंतरं परं प्रसंगतस्तद्विना वा कदाचिदनेकेषा जनाना समाग-

मतः सुखं दुःखं वा प्राप्यते तेन । मार्गस्थः पथिकस्तस्मै सुखं दद्याच्चेत्तस्यैव ज्येष्ठः कनिष्ठो वा सहोदरः सहसा तद्वक्षस्यारुह्य नृशंसवत्तत्प्राणानपहर्तुं प्रयतेत । कदाचित्केनाप्यसाध्येनामयेनात्यर्थं पीडितः स्यात् । अथवा साधोः संगत्या कल्याणप्रदां शुभां वासना प्राप्नुयात् । सुशीलायाः पत्न्या लाभेन चिराय सुखानुभवं गृह्णीयात् । दुःशीलायास्तस्याः प्राप्त्या यावज्जीवमिहापि नरकतुल्यदुःखानुभवान्नैव विमुक्तो भवेत् । स्वस्मिन् सत्स्वपि सद्गुणेषु योग्यावसरस्याभावात् तेषां गुणाना सुखप्रदो विकासो जात्वपि न भवेत् । तेषामभावेऽपि दैववशतः प्रशस्यानि सुकीर्तिकराणि कर्माणि यत्नाधिक्यं विनापि तस्मात्सिध्येयुः । वस्तुतो निरपराधावस्थायामपि मिथ्याभिशापवशतोऽकस्माद्बधनागारे चिराय कष्टेन कालयापनस्य प्रसंगः प्राप्नुयात् । अथवा कृतेऽपि घोरतरेऽपराधे येन केनापि हेतुना राजकृतदण्डस्याभावात् समाजे महता सरभेण स्वीयं निर्दोषत्वं प्रस्थापयितु निष्प्रतिबंधमवसरोऽपि लभ्येत । एवमादयोऽनेके विषमाः प्रकाराः प्रपंचे प्रत्यहमुपलभ्यंते । तस्माद्विचित्रायामस्या संसारस्थितौ ‘ अहं कर्ता ममेदं कर्तव्यम् ’ इति कर्तृत्वममत्वयोर्दुरभिमानः कियान् योग्यस्तच्छ्रातेन मनसा विचारयत ।

मानुषशक्तेरगोचरा अनेके प्रकारा जगतीत्थं दरीदृश्यंते । यदकस्मात्ते समूहस्य व्यक्तेर्वा समनुकूलाः प्रतिकूला वा भूत्वा तस्य तस्या वा सुखदुःखयोर्महतीं क्रांतिं विदधति । अतो वृथाऽहकारमधृत्वा स्वीयचित्तादेः संशुद्धताऽऽपादनमिदमेव प्रत्येकस्य मानुषस्याऽऽद्य कर्तव्यम् । सुखदुःखे तु यथाप्रारब्धं प्राप्नुत एव । तत्र सुखस्य वा भवतु दुःखस्य वास्ताम् । कस्यामप्यवस्थायामात्मनश्चित्तवृत्तिर्धर्मं नीतिं चानुसृत्य वर्तते न वेत्येतदवश्यमालोचनीयम् । तेन यानि प्रात्याहिकानि नूतनानि वा कर्माणि स्वीयहस्ततो भवेयुस्तेषां फलान्यपि सम्यंच्येवोत्पद्येयुः । यतः सद्वृत्त्या क्रियमाणं कर्म सत्कर्मैव भवितुमर्हति । सत्कर्मणा च सुखदातॄण्येव फलानीति नियमोऽस्ति ।

**“ न हि कल्याणकृत् कश्चिद् दुर्गतिं तात गच्छति ”**

इति गीतायाः सिद्धातः सुप्रसिद्ध एव । सत्कर्म सुखजनकम् । असत्कर्म तु दुःखोत्पादकमिति सिद्धातो यद्यपि यथार्थः, अथापि कर्मणः सदसत्त्वं

चित्तवृत्त्यधीनं ज्ञेयम् । तदर्थं सर्वसाधारणो भोजनकर्मव्यवहार एव दृष्टांतत्वे-नोपादीयते । केवलं स्वीयोदरपूर्तिरेव भोजनस्य फलमिति भावनया तदनुष्ठानम् । अथ भोजनमप्येकः पवित्रो यज्ञोऽस्तीति बुद्ध्या तत्करणम् । इत्यनयोर्द्वयोः प्रकारयोर्मध्ये भोजनक्रिया यद्यपि समाना तथापि चित्तवृत्त्यनुसारेणैकस्या एव भोजनक्रियाया द्वे फले श्रूयेते ।

आद्यप्रकारस्य फलं-' भुंजते ते त्वघं पापा ये पचंत्यात्मकारणात् ' इत्यस्ति ।

द्वितीयस्तु--' यज्ञशिष्टाशिनः संतो मुच्यते सर्वकिल्बिषैः ' इत्थं वर्तते ।

केवलं शरीरनैर्मल्यार्थं जलमज्जनं पृथगेव । भुक्ताभुक्तपीतापीतज्ञाताज्ञातदोषनिबर्हणाय स्नानानुष्ठानमन्यदेव । सकुलयुद्धे शत्रुभिः कृताः शस्त्राघाघाता भीरुणापि सैनिकेन सोढव्या एव । किं तु निर्भीकतया शत्रोरभिमुखं स्थित्वा तदुपर्याक्रमणकर्तुर्वीरस्य शरीरे जायमानानामाघातानः फलं पृथगेव विराजते । अस्मिन् संसारे प्रायशो बहवो जना दारिद्र्यदुःखमनुभवंति । किं तु स्वदेशहितायाथवा भगवत्प्रीत्यर्थं स्वेच्छया वित्तव्ययं विधाय दारिद्र्यमनुभविता विरक्तः पुंपुंगवो लोके समादरणीयो भूत्वा सुखमेवानुभवति । न कदाचिद्दुःखम् । सद्भावनया सत्पात्रे स्वीयसामर्थ्यानुसारतः समर्पितस्यैकरूपकस्य यः समीचीनः संस्कारो मनसि समुत्पद्येत । स आब्दिकं देयद्रव्यम् ( कर ) इति राजसत्तायै प्रदत्तेन रूप्यकशतेनापि न सिध्येत् । शारीरं कष्टं कुर्वतस्तत्सहनश्च बहवो जनाः संति । अथापि तेन तपसः फलं तैर्न लभ्यते । यज्ञदानतपांसि धर्म्यकर्माणि दुर्भावनयाऽश्रद्धया वा कृतानि चेद्भस्मनि हुतवद्व्यर्थान्येव भवंति । तान्येव सद्भावनया श्रद्धया चानुष्ठितानि---

**' यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । '**

इति भगवद्वचनतः पावनानि भवंति । तस्मात् किं कर्म कया भावनया वयं कुर्मः सा भावना सत्यसती वेत्यस्य निरीक्षणमादौ शांतेन मनसावश्यं विधेयम् ।

प्रसंगतोऽत्रैकां गाथामुदाहरामः। सा यथा– "एकदा निदाघसमये कश्चन पांथः प्रखरतरसूर्यतापेन भृशं संतप्तः श्रमापनोदार्थं निबिडच्छायोपेतस्य कस्यचित्तरोरधस्तात् क्षणमुपविष्टः। तृषार्तः सः– अत्र निर्मल सुशीतलं जलं लभ्येत चेत्सम्यक् स्यादित्यचिंतयत्। तत्समकालमेव स्फटिकवत् स्वच्छेन सुगंधिना शीतलेन नीरेण परिपूरितो हैमः कुम्भस्तस्य पुरतः प्रादुरासीत्। ततस्तज्जलपानेन तृण्निवृत्तौ सत्यामपि बुभुक्षितः स सम्यगाहार इदानीं लभ्येत चेदतीव भद्रं स्यादित्यपि मनस्यानयामास। तत्क्षणमेव तेन भक्ष्यभोज्यलेह्यचोष्यपेयपदार्थैर्युतं गव्यदधिक्षीरघृतपूरितपात्रैः समन्वितं नवरत्नखचित सौवर्णं भोजनपात्रं स्वस्य पुरतः संस्थापितं समवलोकितम्। ततो यथेच्छमाकठमाहारं निर्वर्त्यानंतरं वामकुक्ष्यर्थं पर्यंकाकांक्षाऽपि तस्योत्पन्ना। तदानीमेव शरच्चंद्रचंद्रिकावद्धवलतल्पपरिभूषितः परमरमणीयो हरिचंदनविनिर्मितः पर्यंकोऽपि तेन तत्र दृष्टः। इत्थं भाग्यवशतः सुखमनु सुखांतरमनुभविता स पांथः सर्वनाशकर्त्र्या विपरीतबुध्या गाढमाश्लिष्टः सन्नस्या निर्मक्षिकायामटव्या कस्यापि वैषयिकसुखप्रदस्य वस्तुन. संभवे कदाप्यसति यत एकमन्वन्यदेकं सुखसाधनं मया लभ्यते तत इयं पिशाचचेष्टा न स्यात्किल। इत्थ कुत्सिता वृत्तिस्तस्य चित्ते प्रादुर्भूता। तत्समकालमेव तत्र विकटतुंडपाणिपादाना भृशं भीषणाना पिशाचाना विचित्रं नग्ननाडव प्रवृत्तम्। तदवलोक्यैते निर्घृणाः पिशाचा नरमांसलिप्सया मा न खादयेयुः किलेत्येव कुकल्पनायास्तस्य मनस्युद्गमक्षण एव तैः पिशाचैः स सुखानुभवमत्तः पांथः संयमिन्या नगराध्यक्षः कृतः।"

तात्पर्यम्– यदि पूर्ववत्स्वस्यानुकूला कल्पना सोऽकरिष्यत् तदा तस्य कुशलमेवाभविष्यत्। यतो यस्य वृक्षस्याधस्तात्स उपविष्टोऽभूत्स कल्पवृक्ष एवासीत्। यन्मनस्यागच्छेत्तद्दातव्यमिति तस्य स्वाभाविको धर्मः। संकल्पः शुभो वा भवत्वशुभो वा। तस्य फलदानेन पूर्णता विधेया, इदमेव केवलं स जानाति। संकल्पयितुश्चित्ते सत्संकल्पेनैव भाव्यं न कदाप्यसत्संकल्पेनेत्येवं व्यवस्था विधातुं काममसमर्थः कल्पवृक्षः। इत्थमात्मकस्य तस्य समागमो विशुद्धांतः-

करणस्य सत्संकल्पशीलस्यैव पुंस इष्टप्रदो भवेत् । न मलिनचित्तस्यासत्संकल्पकर्तुरिति व्यक्तं ज्ञेयम् ।

एतादृशः कल्पवृक्षः प्रत्येकस्य मानुषस्य संविधेऽस्ति । अथापि तस्माद्वृक्षादिष्टापेक्षयाऽनिष्टमेव फल बाहुल्येन जायमानमुपलभ्यते । मन एव स कल्पवृक्षो बोद्धव्यः । अस्मिन् मनसि सत्सकल्पानां समुत्पत्तिश्चेत्तदनुसारतः सत्कर्माणि निष्पन्नानि भूत्वा सर्वेषा सुखमेव स्यात् । असत्सकल्पाना प्रादुर्भावश्चेत् तेन दुष्कर्माण्युत्पद्य तेभ्योऽनिष्टमेव सिध्येत्सर्वेषाम् । यतो मन एव बंधने निक्षिपति । तदेव च तस्माद्बंधनान्मोचयित्वा स्वतंत्र कुरुते ।

**" मन एव मनुष्याणां कारणं बंधमोक्षयोः "**

इति ह्युक्तं शास्त्रे । किंत्वस्माकं दुरदृष्टमित्थं बलवद्विद्यते । यन्मनसि सत्संकल्पा एव जनितव्या नैकोऽप्यसत्संकल्पस्तत्र लब्धपदो भाव्य एतदर्थं स्वल्पोऽपि प्रयत्नः कदापि न भवति । स्वीय मनः स्वाधीनं न चेत्सा प्रकामं व्रीडास्पदा परिस्थितिः । अस्या दु:स्थितेस्त्रपा केषांचिदेव पुंसां विभाति न सर्वेषाम् । एतदपेक्षयापि लज्जावहमिदमन्यद्यन्मनसा सहैव विश्रृंखलं यथा स्यात्तथाऽहर्निशं गमनस्याभ्यासः । मनस्त्वत्यंत चंचलमसत्पक्षपाति च । अतो महता यत्नेन तन्निगृह्य तस्यासत्पक्षपातोच्छेदपुरःसरसत्कार्यप्रवणतायाः समुत्पत्तिस्तस्मिन् यथा भवेत्तथा नियतं वाक्कायमनोभिः प्रयतनम् । इदमेव सर्वथाऽभ्युदयेच्छूनां तदर्थं यतमानानां च पुंसामाद्य कर्तव्यम् । तत्रादौ स्वीयधर्मस्य तदनुकूलसंस्कृतेश्च संरक्षणार्थमेव यत्नो विधेयः । तदर्थं स्वातंत्र्यमप्यपेक्षितम् । यस्य धर्मस्य संस्कृतेश्च परिरक्षणमावश्यकं तस्य धर्मादेरभिमानो राजसत्ताया अप्यपेक्षितः । धर्म एव सारभूतं सर्वस्वम् । स एव चानंतकल्याणप्रद इति श्रद्धया चित्ते दृढं धर्तव्यम् । धर्मानुसारि वर्तनमेव स्वस्य स्वराष्ट्रीयजनतायाश्च कर्तव्यम् । तस्य कर्तव्यस्यांतरायः केनापि न कार्य इत्युत्कटा भावना तदनुकूलं च शासनं यया कयापि राजसत्तया स्वीयराष्ट्रेऽवश्यं विधेयम् ।

लौकिकव्यवहाराणामंतरायभूतो धर्म इति विपरीतभावनया धर्म त्यजंतीं भृशं दुर्बला मनसो वृत्तिं यत्नतो दूरं निरस्य नैकविधमपि कष्टं सोढु समर्था धर्मप्रवणा चित्तवृत्तिर्यद्वद्धर्मराजेन प्रकटीकृता तद्वद्राजसत्तयाऽपि स्वीयमनसो वृत्तिर्दर्शितव्या प्रजानां क्षेमाय । ततोऽयं धर्मः प्रजानामंतर्गत-सुप्तोदात्तवृत्तीनां सुविकासकः क्षुद्रवृत्तींश्चात्यर्थं दमयिता वर्तते ।

सद्वृत्तीना विकासोऽसद्वृत्तीना च निरास इयमेव मानवाना यथार्था प्रगतिः । इयमेव समुन्नतिः । अयमेव चाभ्युदयो बोध्य. । पुण्यकर्मणा भगवत्कृपासंपादनभिन्नं प्रशस्यतरं महच्च कर्मास्मिञ्जगत्यन्यत् किमपि नास्ति । मानुषाणामविनश्वरा काचन संपत्तिरस्ति चेत्सा धर्मसंपत्तिरेव नान्येति ज्ञेयम् । केवलमर्थदृष्ट्या वित्तैकभूमिकयोपरि मानवसमाजमदिरं निराचितव्यमित्युक्तिस्तु श्रोतु रमणीयाऽपि चित्तविशोधनसामर्थ्यं तस्या नैवास्ति । अकिंचनावस्था-ग्रस्तं नर प्रति वित्तस्य महत्त्वं यद्यपि भाति तथापि जीवितस्य मुख्यं ध्येयं वित्तमेवेति मन्वाना तदर्थं च येन केनापि पथा प्रवर्तमाना व्यक्तिर्यद्वत्समाजे जघन्येति गण्यते तद्वत्समाजस्यापि धर्मशून्या द्रव्यैकलोलुपा चित्तवृत्तिः क्षुद्र-तरेति ज्ञेयम् । स्वीयशरीरादे. सरक्षणाय बाह्यसुखार्थं च वित्तमावश्यकमिति कस्यापि संमतमेव । नात्र संदेह. । अथाप्यंतःकरणस्य श्रीमत्व वित्तापेक्षयाप्य-धिकं श्रेष्ठमित्यसंदिग्धम् ।

यस्या व्यक्तौ राष्ट्रे वा मनसः श्रीमत्व समेधमानमास्ते । सा व्यक्तिस्त-देव च राष्ट्र समुन्नतिमार्गे शीघ्र स्वस्य प्रगतिं कर्तुं शक्नोति । राजकीयं स्वातंत्र्य तु परतत्रराष्ट्रस्यैव ध्येयं बोद्धव्यम् । राजकीयदृष्ट्या स्वातंत्र्योपेतस्य राष्ट्रस्य वास्तवं ध्येयं स्वदेशीया जनता यथा स्वधर्मप्रवणा स्यात् तथा सर्वथोद्यमकरण-मेव । स चोद्यमस्तु जनतायाश्चेतासि शातसात्विकपरोपकृतिप्रवणपात्रापात्रज्ञान-पूर्वकदानशीलसत्यनिष्ठतेजस्विपवित्राणि च कारयितव्यानीत्ययमेव । कस्या-मप्यवस्थाया विद्यमानाया व्यक्तेस्तत्त्वत इदमेव ध्येयमंततः सिध्यति । राष्ट्रस्या-पीदमेव ध्येयमवगंतव्यम् । किंत्वेतत्सिध्यर्थं राजकीयस्वातंत्र्यस्यावश्यकताऽपे-

क्षितैव । राजसत्तायाः पुरतोऽप्येतेनैव ध्येयेन भवितव्यम् । तदुक्तं भारते—

**तेषां यः क्षत्रियो वेद वस्त्राणामिव शोधनम् ।**
**चित्तदोषान् विनिर्हर्तुं स पिता स प्रजापतिः ॥ इति ॥**

एतादृश एव राजा स्वीयराष्ट्रे कृतयुगं निर्मातुं प्रभवति । तस्यैव राज्ये धर्मस्य सस्कृतेश्च समुत्कर्षेण समस्ताः प्रजा. सुखमनुभवंत्यो वैभवशालिन्यश्च भवति । वास्तवं वैभवं तदेव यत्सद्गुणैर्धर्मेण नीत्या च समासादितम् । बलात्कारेण छलादिना वाऽऽत्मसात्कृतं वित्ताद्यैश्वर्यं जगत्यनर्थमुत्पादयति । तेन कलहाः प्रवर्धंते । महद्‌दुःखं च वृद्धिमाप्नोति । यस्योपरि बलात्कारः कृतः स त्वत्यर्थं दुःखभराक्रांतो भवत्येव किं तु बलात्कारकर्तारमपि नराधमं दुःखं नैव मुंचति । तस्याऽध्यात्मिकोऽवःपातो वेगेन जायते । ततः कार्याकार्यविवेकशून्यतया बुद्धिभ्रंशो भवति । तदनंतर तूर्णमेव " बुद्धिनाशात्प्रणश्यति " इत्येवं भगवद्वचनं तन्निकटे निष्प्रतिबंधमन्वर्थं भवज्जागरूकमस्त्येव ।

सद्धर्मशीला राजसत्ता स्वीयप्रजासु दैवीसंपदं वर्धयित्वा मोहादिदोषान् निरस्य तैर्भाव्यमानं स्वीयप्रजानामधःपातं विनिवारयति । वैपरीत्ये तु—

**चातुर्वर्ण्यं त्रयो वेदाश्चतुराश्रम्यमेव च ।**
**सर्वं प्रमुह्यते ह्येतत् यदा राजा प्रमाद्यति ॥**

इत्येवंविधा दुरवस्था सर्वत्रोत्पद्यते । तस्मात्-वेदधर्मस्य तदुपकारिसंस्कृतेश्च क्षेमाय तद्धर्मसबंधिस्वातंत्र्योपेतं राज्यमत्यावश्यकम् । तर्ह्येवास्य राष्ट्रस्याभ्युन्नतिर्भविष्यतीति विश्वास इति शम् ॥ श्रीः ॥

**नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ।**
**मनो हि सर्वभूतानां संतनोति शुभाशुभम् ॥**
**अशुभेभ्यस्तदाक्षिप्य शुभेऽर्थे चावधारय ।**
**कामं क्रोधं मदं लोभं दंभं नास्तिक्यमेव च ।**
**मोहं मत्सरमालस्यं नित्यमेव परित्यज ॥**

इत्युपदेशः ॥

---

## ॥ श्रीः ॥

# ॥ संस्कारविमर्शः ॥ (१४)

**वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।**
**कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥**
**गार्भैर्होमैर्जातकर्मचौडमौंजीनिबंधनैः ।**
**बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ॥**

**म. स्मृ. अ. २**

अथैकपदार्थोऽपरपदार्थेन यदा संसृष्टो भवति तदा तयोरन्योन्यस्मिन्नन्योन्यस्य संस्कार उत्पद्यते । जडो वा भवतु पदार्थश्चेतनो वा, परस्परं संबद्धश्चेत्संस्कारोऽपरिहार्य एव । न स दूरीकर्तुं शक्यते केनापि । अथापि स संस्कारो यथा भव्यो भविष्यति । यथा चानिष्टोदर्को न स्यात् । तथा कर्तुं शक्यम् । पदार्थाः सन्निहिताश्चेदेव संस्कारा उत्पद्यंत इति न । दूरवर्तिनामपि वस्तूनां भवंत्येव संस्काराः । सूर्यचंद्रादीनां प्रतिपदार्थं प्राणिशरीरादौ च संस्काराः सुप्रसिद्धा एव । अत एव—

**गवाशनानां स शृणोति वाक्यमहं हि राजन् वचनं मुनीनाम् ।**
**न चास्य दोषो न च मद्गुणो वा संसर्गजा दोषगुणा भवंति ॥**

इति संसर्गजन्यौ दोषगुणावित्युक्तं कविना । अतः सिद्धमिदं यत्संस्काराणां भवनं प्रकृतेः स्वभावः । सत्येव तेषां निरासाय निरर्थकं प्रयत्नमकृत्वा तेषु विद्यमानमनिष्टकरत्वमेव केवलं प्रयत्नेन निरस्य यथा ते बाहुल्येनोपकारका भवेयुस्तथा यतितव्यं धीमता । श्रेयस्करमिदमेव । चंदनवने विद्यमानानामन्येषामपि पादपानां चंदनवत्सुगंधो जायते । कुसुमानां संसर्गेण तैलादीनां सुगंधित्वं प्रसिद्धम् । पुष्पमालासंसर्गात् सूत्रमपि राज्ञःकंठे विराजते । उत्कृष्टसंसर्गान्निकृष्टमप्युत्कर्षं याति ।

" अश्माऽपि याति देवत्वं महद्भिः सुप्रतिष्ठितः "

तथा—

कांतारभूमिरुहमौलिनिवासशीलाः
प्रायः पलायनपरा जनवीक्षणेन।
कूजंति तेऽपि हि शुकाः खलु रामनाम
संगः स्वभावपरिवर्तविधौ निदानम्॥

एवं दुष्टसंसर्गाज्जायमानकुसंस्कारेणाधोगतिर्भवतीत्येतदपि न विस्मर्तव्यं मानुषमात्रेण। यथाहि—

दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये।
किं नाम खलु संसर्गः कुरुते नाश्रयाशवत्॥
हंसोऽध्वगः श्रममपोहयितुं दिनांते कारंडकाकबककोककुलं प्रविष्टः।
मूकोऽयमित्युपहसंति लुनंति पक्षान्नीचाश्रयो हि महतामपमानहेतुः॥इति॥

तस्मादुत्तमाधमसंसर्गजन्या उत्तमाधमगुणदोषा इति निर्विचिकित्सं सिध्यति। उक्तं हि—"प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो देहिनाम्।" इति।

जन्मादारभ्यैव मनुष्यमात्रे शुभा अशुभाश्च सस्कारा जायंते। तत्राशुभान् संस्कारानुन्मूलयितुं शुभसस्कारांश्च दृढीकर्तुं सर्वज्ञकल्पेन वेदशास्त्रेण सर्वथा श्रेयस्करा ये विधयो निःसंदिग्धमुपदिष्टास्त एव 'संस्काराः' इति सांकेतिकनाम्ना उच्यंते। न एते संस्कारा योग्यकाले यथाविधि कृताश्चेत्कुसंस्कारान्निरस्य सुसंस्काराणां स्थैर्यमापादयंति। अत एव धर्मशास्त्रे वेदोपदिष्ट—सस्काराणां प्राधान्येनोपवर्णनं कृतं संगच्छते। अत्रेदमवधेयम्। मानवनिकटे मन इत्येकमद्भुत वस्तु विद्यते। इदं कदाचिद्धसति। कदाचिद्रोदिति। कदाचिच्च चल भवति। शांतमपि भवति कदाचित्। क्षणं स्थिरमस्थिरं च जायते क्षणात्। क्षणं क्रुध्यति। क्षणं तुष्यति। क्षण रागी क्षणं विरागी सपद्यते। क्षणं विश्वस्तमविश्वस्तं च क्षण निष्पद्यते। तत एवास्य यथार्थं स्वरूपं चंडतरं च सामर्थ्यं नाद्यापि केनचिदवधार्यते। उक्तं हि भगवता—

"असंशयं महाबाहो मनो दुर्निग्रहं चलम्।"

तथा "मन एव मनुष्याणां कारणं बंधमोक्षयोः।" इति।

येन हि मनुष्यो बंधने पतति । तस्माच्च मुक्तो भवति येन । तस्यास्य मनसः संस्कारैः साकं घनिष्ठः संबंधो विद्यत इति न विस्मर्तव्यं केनापि ।

तदेतन्मन उद्दिश्येत्थमभिहितं वेदेन—

यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरंतरमृत प्रजासु ।
यस्मान्न ऋते किंच न कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ॥
सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं जविष्ठ तन्मे मनः शिवसंकल्पमस्तु ।
य.मा. सं. अ. ३४। मंत्र ३।६॥

यत् कामसंकल्पादिस्वरूपेण प्रजासु चिरं तिष्ठति । येन विना किमपि कर्तुमशक्यं तन्मे मनः शुभसंकल्पकृद्भवतु । यद्वत्स्वकर्मपटुर्यंता रथ्यान् ऋजुमार्गेण चालयति । तद्वत्सर्वाणींद्रियाणि सुशिक्षया यद्धर्ममार्गे प्रवर्तयति, यच्च हृत्पुंडरीके चिरं स्थितमप्यत्यंतं जविष्ठ तन्म मनः सर्वदा शुभसंकल्पकृद्भूयात् । यद्यस्मिन्मनस्यशुभा. संस्कारा भवेयुस्तदास्य सर्वा शक्तिरात्मनाशमेव कुर्यात् । अतः शुभसंकल्पयुतं भवत्विति प्रार्थना युक्तैव ।

कल्पनाकाल एव कल्पितं फल यो ददाति स कल्पवृक्ष इति प्रसिद्धम् । इदं मनोऽपि नैकधा संकल्पयति । तदनुसारेण सम्यगसम्यग् वा फलमप्युत्पद्यमान परिदृश्यते प्रायशः । बंधः कल्पितश्चेद्बंधे पतति । मुक्तिं संकल्पयेच्चेन्मुक्तमपि भविष्यति । इत्येवमद्भुतशक्तियुक्तो मनःसंज्ञकः कल्पवृक्षः प्रतिप्राणिशरीरे वर्तते । यथासंकल्पं परिणमते च । तदिदं मनसः स्वरूप कदापि विशेषतो धार्मिकसस्कारप्रसंगेषु नैव विस्मर्तव्यम् । प्रत्यक्षादिलौकिकप्रमाणगोचरेभ्यः स्थूलसूक्ष्मचेतनाचेतनेभ्यः पांचभौतिकपदार्थेभ्य. समुत्पद्यमाना वासनापरपर्यायाः संस्काराः ' खले कपोतन्यायेन ' मनसि युगपत पतंति । न्यूनाधिकतया च तत्र बद्धमूला भवंति च । तत्र येऽभ्यासादिवशतस्स्थैर्योन्मुखास्ते मनःस्यत· प्रविश्य तत्र चिरकालं तिष्ठंति । आस्तिक्यश्रद्धाभक्तिशांतिविनय-

सत्यदयाक्षमाऔदार्ययमनियमआनंदादीना संस्काराश्चेत्तेऽभ्युन्नतंरुपकारका भवंति। अथ नास्तिक्यअश्रद्धाऔद्धत्यअनृतअशांतिदुःखभयस्वैराचारकामक्रोधलोभमोहमदमत्सरादिदोषाणा संस्काराः स्युश्चेत्ते नियतमधःपातमापादयंति। तस्माद्घातकसंस्कारेभ्यो मानवजातेः सरक्षण भाव्यं शुभसंस्कारैश्च सा जातिः समुन्नतेः परां कोटिमारोहत्विति शास्त्रेण धार्मिकाः संस्कारा उपदिष्टाः। तैरेव निर्दिष्टं कार्यं सिध्यति। नान्यथेति ते सस्कारा नैवोपेक्षणीया अभ्युदयेच्छुभिः। अपि तु यथाधिकारमनुष्ठेया एव। अंतरा व्यवधाने सत्यप्येकस्य मानसोऽपरमनसि परिणामो भवतीत्यपि प्रसिद्धम्। संस्कारविमर्शावसरेऽयं मनसो धर्मोऽवश्यं विचारणीयः। एते संस्काराः कथं कार्यास्तदनुष्ठानसमये समागतानां जनानां मनस्सु कैर्विचारैर्भाव्यमित्यस्य विमर्शे कर्तव्ये तत्रास्य मनोधर्मस्यात्यंतमुपयोगो विद्यते। वाचा शरीरेण मनसा वा यद्यत्कर्म करोत्ययं मानवस्तस्य तस्य कर्मणः संस्कारस्तस्मिन् प्रत्यहं भवत्येव। सुचिर यदनुष्ठीयते तस्य संस्कारो दृढो भवतीत्यन्यदेतत्। एतावता सानिध्यमंतरेणाप्येकस्य मनसोऽपरमनसि यः परिणामो भवति तत्र नियमेन भाषाया नावश्यकता। मानवमनोवृत्तीनां तिर्यक्ष्वपि प्राणिषु परिणामो दरीदृश्यते। तथा बालकेष्वपि सोऽनुभूयते। अनुकूलवेदनीयमनस्येव विशेषज्ञे स भवति। न प्रतिकूलवेदनीयमनसीति ज्ञेयम्। किमपि विशिष्टं कर्म प्रत्यहमनुष्ठितं चेत्तस्येष्टानिष्टः परिणामो भवत्येव क्रमशः। अन्योन्यास्मिन्नन्योन्यस्य संस्कारस्य संक्रमणमपारिहार्यमेव। केवल यथा तदनुकूल भवेत् तथालोच्य सपादनमेव पुरुषयत्नसाध्यमिति सिद्धम्। धार्मिकसंस्कारेष्विदमेव संसाधितमित्येतदिदानीं विविच्य प्रदर्शयामः।

नरो नारायणो भवत्वित्यभिसंधायैवैते संस्काराः शास्त्रेणोपदिष्टाः। क्रियंते चास्तिकैः। तदुक्तम्— "यस्यैते चत्वारिंशत्संस्काराः अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यमाप्नोति" ॥ गौ. ध. सू. ॥

**स्वाध्यायेन व्रतैर्होमैस्त्रैविद्येनेज्यया सुतैः।**
**महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः॥**

**म. स्मृ. अ.२।२८।**

तेषु षोडशसंस्कारा मुख्या इति प्रसिद्धं धर्मशास्त्रे। कारणं त्वस्य तत्तत्संस्कारांतर्गतावश्यकप्रधानांशोपरि गौणविधीनां निरर्थकवित्तव्ययापादक- लौकिकाचाराणां चाऽऽक्रमणं तथा प्रबलं दृश्यते यथा सर्वेषां तेषामनुष्ठानमशक्य- प्रायमभवत्। विषयसुखलोलुपस्य मर्त्यस्य प्रमादाऽऽलस्यादिना तादृशे कर्मणि प्रवृत्त्यभावाच्च गलितप्राया बहवः संस्काराः। ये चावशिष्टाः षोडश तेऽपि सांप्रतं यथाविधि न भवति। केवलमुपनयनविवाहावेव कथंचित् स्थितौ संस्कारौ। उपनयने एव चोलसंस्कारो भवति। समावर्तनमपि कथंचिज्जायते।

तात्पर्यम्-कोऽपि संस्कारः सांप्रतं यथाविधि भवतीति वक्तुमशक्यमेव। भूसुरेतरेषु तु विवाहं विना नान्यः संस्कारः प्रायशो विद्यते। वाडवेष्वप्युप- नयनविवाहावेव। तावप्युत्सवैकप्रधानौ। तन्मध्ये च समासतः कथंचित् क्रियमाणा द्वित्राः संस्काराः। एतावानेव वैदिकसंस्काराणामवशेष उर्वरितोऽस्ति। ब्राह्मणवदेव क्षत्रियवैश्यौवेदाधिकारिणौ वर्णौ। परं तयोरपि संस्कारा उत्सन्न- प्रायाः। इति सर्वेऽपि न्यूनाधिकभावेन तुरीयवर्णपंक्तावुपविष्टाः संति। इत्थमियं सनातनवैदिकधर्माभिमानिनामार्याणां शोच्यावस्था परिदृश्यते। अलमनया प्रसंगागतचिकित्सया। प्रकृतं वदामः।

शुभेऽहनि शुचीन् विदुषः पुरोहितप्रभृतीन् विप्रान् हितचिंतकान् स्वेष्टजनांश्चाहूय क्रियमाणसंस्कारोपयोगिनीं च सामग्रीं संपाद्य सुमुहूर्ते संस्कार आरभणीयः। आदौ स्वस्तिपुण्याहवाचनं शांतिमंत्रपाठो नांदीश्राद्धमिष्टदेवता- कुलदेवतामातृकापूजनादिकं समवेतानां जनानां शुभकामनापूर्वकः संस्कारः शुचिना कर्मकुशलेन पुरोहितादिना विप्रेण कार्यः। यस्य संस्कारः क्रियते तस्य तेन संस्कारेण कल्याणं भूयादित्येवं शुभा भावना तत्र समवेतानां जनानां मनस्यावश्यकी। यदिदं संस्कारकर्म प्रचलति। तद्योग्यविधयैव- भवति। अनेन कर्मणा निःसंशयमस्य मंगलं स्यादिति मनीषया सर्वेषां मनसि भाव्यम्। तेन तत्रैकीभूतमनःशक्तेः परिणामः संस्कार्यस्य मनसि भूत्वेष्टं कार्यं निष्प्रतिबंधं सिध्येत्। यदीदृशे शुभसंस्कारसमये ' अहो किमिदं

महता संरंभेण वितथमेव किमपि कार्यते भवद्भिः । किमनेन स्यात् । दांभिकमिदं सर्वमिति केचन ब्रूयु." अन्येऽन्यस्मिन्नेव कस्मिंश्चिद्विचारे सक्तचित्ता भवेयुः । अपरे मिष्टान्नादिजिघृक्षयोदासीनास्तिष्ठेयुः । प्राज्ञंमन्याः काममपि मनसि विपरीतां भावना धारयेयुः । तर्हि तादृशाच्छ्रद्धाशून्यात्संस्काराभासात् कथमिष्टं सिध्येत् । यतस्तादृशे समये प्रतिकूलमनोवृत्तिभिः समनुकूला मनोवृत्तयो बाध्यते । अतः शुभसंस्कारसमये घातकमनोवृत्तीनामुदयो यथा न भवेत्तथा यतितव्यं सर्वैः । संस्कार्यस्यास्यानेन संस्कारेण मंगलं भूयादित्येकैव भावना सर्वेषां चित्तेष्वावश्यिकी । सस्कार्यः सस्कारस्य रहस्य ज्ञातुं समर्थ आस्तां मा वा । सामुदायिकाना शुभमनोवृत्तीना सुपरिणामस्तस्योपकारको भवेदेव । भाषाज्ञानमंतरेणापि मानसिकप्रेरणाना परिणामस्तास्मिन् भवत्येव ।

इद मनोधर्मरहस्य जनतयाऽधिगतं चेद्वैदिकसस्काराणामावश्यताऽपि तया ज्ञाता भवेत् । तेभ्यश्च संस्कारेभ्य. समधिकं श्रेय. कथं संपादनीयम् । एतदपि यदाधिगत स्यात् तदैवेयं भारतवर्षीयाऽऽर्यजनता धार्मिकसंस्कारेभ्यः स्वीयं यथाधिकार कुशलं संपादयितुं शक्नुयात् ।

अथ कतिपयान् मुख्यसस्कारान् विमृशामः । तत्रापि गर्भाधानं मुख्यतः संस्कारः । परमिदानीं तस्मिन्नुदासीनो लोको दृश्यते । तं नानुतिष्ठति प्रायशो लोकः । अनावश्यकः सस्कार इत्यपि केचन ब्रुवते । परं मनुष्योत्पत्तेर्मूलभूतं रहस्यं तास्मिन्नेव संस्कारे वर्तते । अतस्तस्यात्यंतं महत्त्वमस्ति सर्वेष्वपि संस्कारेषु । सर्वथा ब्रह्मचर्यपरिपालनपूर्वकं यथाधिकारं स्वस्वकुलक्रमागतविद्यासंपादनेन वाङ्मनःकायेषु समर्थेषु सत्सु समावर्तनं कृत्वा गुरुजनानुमत्या कुलीनां सवर्णामनुरूपां यवीयसी वधूमुद्वाह्यानंतरं गर्भाधानस्य कालःप्राप्नोति । शतपथब्राह्मणातर्गतबृहदारण्यकोपनिषदि आत्मतत्त्वोपदेशानतरं सुप्रजा कथमुत्पादनीया । दंपत्योः पुत्रस्य कन्याया वापेक्षा विद्यते । सा संततिर्विदुषी सुशीला वीरा दीर्घायुश्चापेक्ष्यते । तदर्थं ताभ्यां किं कर्तव्यम् । किमशितव्यम् । किं पातव्यम् । किं चिंतनीयम् । कथं वर्तितव्यम् । इत्यादिकं सर्वं समासत उपदिष्टम् । ताञि-

ज्ञासा चेत्तत एवाधिगंतव्यम् । विस्तरभयान्नेहोच्यते । स्वीये राष्ट्रे भाविनी संततिर्यादृश्यावश्यिकी तादृश्याः संततेरुत्पत्तिर्यथा स्यात्तथोपायानां सूचनमस्मिन् गर्भाधानसंस्कारे कृतमस्ति । यथा तथा वा भवत्वुत्तरसंततिः किमिदमस्माकं नियंत्रणं क्रियते । इत्येवं स्वैरं वर्तितुं न कथयत्ययं वैदिको धर्मः । अपितु स्वीयशुद्धाचरणेन भगवत्प्रार्थनया च देवतासहाय्य लब्ध्वाभीप्सिता संततिमुत्पादयितु समर्था यूय युष्मदायत्तो राष्ट्रस्योदर्कोऽभ्युदय इति शिक्षयत्ययं गर्भाधानसस्कारः । गर्भाधानकाले तत्पूर्वं च दंपत्योर्मनसि ये विचारा औत्कव्येन तिष्ठेयुर्भाविन्या संतत्या ते निःसंदिग्धमवतरेयुः । एकस्यैव पुरुपस्योच्छास्त्रपौरुषावस्थायामुत्पन्ने पुत्रे शास्त्रितपौरुषावस्थाया समुत्पन्ने च पुत्रे ते ते दोषगुणा न्यूनाधिकतयोपलभ्यते । युक्तमेवेदम् । यतः —

"षाट्कौशिकमिदं शरीरम् । त्रीणि मातृतः । त्रीणि पितृतः । त्वङ्मासरुधिराणि मातृतः । स्नाय्वस्थिमज्जानः पितृतः ।" इत्युपदिष्टं शास्त्रे । अत एव च—

**रूपं तदोजस्वि तदेव वीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।**
**न कारणात्स्वाद्बिभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥**

इत्युक्तं कालिदासेन कविरत्नेन रघुवंशे पंचमसर्गे अजोत्पत्तिप्रसंगतः ।

गर्भाधानसमये पित्रोर्गुणानामौत्कट्यं तुल्यं चेत् ताभ्यामाकांक्षिता उत्कृष्टा सततिर्भवेत् । तत्समये तयोश्चित्तं विकृतं चेत् संततिरपि तथैव स्यात् । एतेनेद व्यक्त ज्ञातु शक्येत । यदय गर्भाधानसस्कारः सर्वेषु संस्कारेषु महत्तमः । एतदनुसारेण यतितं चेद्भविष्यमानसंततावौत्पत्तिकाना गुणानां निश्चयेन वृद्धिरेव स्यादिति ।

अथेदानीमुपनयनसंस्कारस्य समासतो विचारणा कुर्मः ।

गुरोरीश्वरस्य वा समीपे नयनमित्येवमुपनयनशब्दस्य वाच्योऽर्थः शास्त्रे प्रसिद्ध एव । अथापि तस्य सूचितोऽर्थः उपनयनम्—उपनेत्र (चष्मा)

तस्य प्रदानमित्यस्ति । यथाऽयं लोकश्चक्षुर्भ्यां निसर्गतो यावत्पश्यति। तदपेक्षया उपनेत्रं धृत्वा समधिकं पश्यति। तथा सद्गुरुणा यस्मै विद्याप्रदानं कृतं स दिव्यदृष्ट्या नि.शेष वस्तुजात प्रागपेक्ष्याधिकं द्रष्टुं समर्थो भवति। एवमुपनयनेन यूनो दृष्टिः संस्कार्या विद्यते । प्रागुपवर्णितगर्भाधानसंस्कारानुसारेण जायमानायाः सततेरौत्पत्तिकबुद्धेर्दार्ढ्ये सपादिते तत उपनयनेन दिव्यदृष्टिप्राप्त्यनंतरं तूर्णमेव राष्ट्रपुरुषस्य परिपुष्टस्तेजस्वी च देहः सर्वेषा दृग्गोचरः स्यात् ।

अस्मिन्नुपनयनसंस्कारे “ मेखलाधारण, दंडधारणं, गायत्र्युपदेशः, मेधाजननम्, इत्यादय सस्कारा मुख्यत्वेनानुष्ठेयाः संति। अनुष्ठीयते च। परं कस्यापि चित्त प्रायशस्तान् संस्कारान्न गोचरयति। एतत्संस्कारातर्गतः प्रत्येकोऽपि विधिः सुविचार्योऽस्ति । अस्मिन् संस्कारे कुमारं प्रति गुरुसमीपे नीत्वा सर्वथा तदधीन करणीय. स. । तदानीं स कुमार. पित्रोः सान्निध्य विसृज्य सर्वात्मना गुरुणा संबद्धो भवति। “ तत्तस्य श्रेष्ठं जन्म ” इत्येवं नूतनसबधमुद्दिश्य शास्त्रे उपदिष्टम्। तदानीं तस्य बटोराचार्यः पिता गायत्री विद्या च माता भवति। एतस्या मातुरुदरेऽततो द्वादशसमा स्थित्व यदा बहिरागच्छति तदा तस्योज्ज्वलं तेजः सर्वत्र प्रसरति ।

उपनयने तस्मै बटवे यज्ञोपवीतं दीयते । अर्थाद्यज्ञभारस्तस्य स्कंधे स्थाप्यते । स च भारो यावज्जीवं स्थास्नुरस्ति । तदनंतरं मेखलाधारणविधिः प्रवर्तते । मेखलाधारणं नाम कट्या विशिष्टरज्जोर्बंधनम् । तस्येत्थं मंत्रो विद्यते ।

**“ इयं दुरुक्तात् परिबाधमाना वर्णं पवित्रं पुनतीम आगात् ।**
**प्राणापानाभ्यां बलमादधाना स्वसा देवी सुभगा मेखलेयम् ॥**
**ऋतस्य गोप्त्री तपसः पवित्री घ्नतो रक्षः सहमाना अरातीः ।**
**सा नः समंतमनुपरेहि भद्रया भर्तारस्ते मेखले मारिषेमः ॥ ”**

इयं मेखला दुरुक्तं निवारयति। पवित्रं वर्णं रक्षयति। बलं वर्धयति। सत्यं पालयति। दुष्टान्नाशयति। शत्रून् पराभवति। एवमादिगुणोपेतेयं मेखला। तामेतां धारयिता कुमारः कदापि न नंक्ष्यति। सांप्रतं तु संस्कारसमये क्षणमात्रं मेखलां बध्वा ततस्तूर्णं विसृजंति। तेनात्यंतं शैथिल्यमुपचितं दृश्यते। ततो दंडधारणस्य विधिरागच्छति। तस्य मंत्रोऽपि विचारार्हो विद्यते। स चेत्थम्—

**अदांतं दमयित्वा मां मार्गे संस्थापयन् स्वयम्।**
**दंडः करे स्थितो यस्मात्तस्माद्रक्ष यतो भयम्॥**

अयं दंड उन्मत्तानामुन्मादं निरस्य तानुत्तमे पथि प्रवर्तयति। निर्भयतां चोत्पादयति। इत्ययमस्य दंडधारणस्य प्रतापः श्रूयते। परं यया रीत्या तस्य धारणं विहितं तयैव रीत्या स धर्तव्यः। केवल मौंजीबंधनकाले क्षणमात्रं धृत्वा नेष्टं कार्यं सिध्येत्। तदानीमारभ्यानारतमेव धारणीयः। यथा च तेनात्मनो रक्षण स्यात् तथा तमुपयोक्तुं स्वस्मिन् कौशलमप्यपेक्षितम्। तथा सत्येकोऽपि दंडधारी तेजस्वी ब्रह्मचारी रिपूणां शतमपि पराभवितुं समर्थो भविष्यति। साप्रतमिह न कोऽप्येवं दंडधारी ब्रह्मचारी। तत एवेयमस्माकं दुरवस्था परिदृश्यते। मेखला रक्षोनिहंत्री दंडश्चोन्मत्तानामुन्मादं दमयिता पराभ्यां नास्माकमद्य कोऽप्युपयोगः सिध्यति। किंचित्कालं मेखला बद्धा दंडोऽपि क्षणमात्रं धृतः। तेनैव शत्रवः पराभवेयुः। उन्मत्ताश्च निर्मदाः स्युः। इतीयं कल्पना कथं सफला स्यात्। उपनयनं मेखलाबंधनं दंडधारणं चैते संस्काराः स्वीयं राष्ट्रमुन्निनीषूणां सामर्थ्योत्पादकाः। पुराकाले यथाशास्त्रमेतेऽभूवन्। तेनेदं भारतं वर्षमत्युन्नतमासीत्।

अयमुपनयनसंस्कारो ब्राह्मणक्षत्रियवैश्यकुमाराणा शास्त्रेण विहितोऽस्ति। सांप्रत ब्राह्मणकुमारस्य केवलं कथंचिदुपनयन भवति। क्षत्रियवैश्यकुमारयोस्तूत्सन्नप्रायम्। किं नाम दंडधारणम्। किं च मेखलाबंधनम्। इत्यादिकमपि ताभ्या न ज्ञायते। स्वीयसंरक्षणक्षमाः संस्कारा एव राष्ट्रीयप्रधानपुरुषाणामु-

स्तनप्रायाः संजाताः । धार्मिकेषु जनेषु शक्तिविशेषमुत्पाद्य तेषामेकीकरणं तथा तेष्वात्मीयतामुत्पाद्य वैमत्यनिरसनमिदमेव संस्काराणामैहिकमुद्देश्यम् । ऐकमत्येन धार्मिकान् संघीकर्तुं संस्कारा अत्यावश्यकाः । तस्मान्न ते पश्चात्करणीया वैदिकधर्माभिमानिभिर्जनैः । अपि तु यथाधिकारं समंत्रकास्तूष्णीं वा स्वीयोन्नत्यै कर्तव्या एव । केवलं पारंपरीका रूढिरियमिति भावनया किंवा ते कुर्वंति वयमपि तथा कृत्वा तत्साम्यमाधिक्यं वा संपादयाम इति दुर्मत्या कार्या इति न तस्यार्थः । अपि तु तत्तत्संस्कारांतर्गतं प्रशस्तं रहस्यं बुद्ध्वान्यैरपि तद् यथाविगत भवेत् तथा यतितव्यम् । कस्मिन्विधौ किं कस्य वा श्रेयस्करं तत्त्वमस्तीत्येतत्सम्यग्ज्ञात्वैव ते संस्कारा यथायथं कार्याः । अन्यथा कृता अपि फलतोऽकृता एव भवेयुरनधिकारिणाम् । तस्मादस्मिन् वैदिकसंस्कारविषये यथाविध्यनुष्ठानप्रवृत्तिः सर्वत्र यथा प्रसृता स्यात् तथा प्रयतनं वैदिकधर्माभिमानिनामाद्यं कर्तव्यमित्यावेद्य—

**आस्तिक्यं सम्यगाश्रित्य नास्तिक्यं भावमुत्सृज ।**
**शिक्षस्वैनं नमस्वैनं धर्मं कल्याणकारिणम् ॥**

इति चोपदिश्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

## ॥ श्रद्धाविमर्शः ॥ (१५)

**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।**

**भ. गी. ३।१७**

अथ श्रद्धाख्या मनसो वृत्तिर्मानवजीवनस्य मौलिकाधारोऽस्ति । ज्ञानमंदिरस्य मूला भित्तिर्वर्तते । आकांक्षाणां नंदनवनं प्रफुल्लयिता ऋतुर्वसंतो विराजते । श्रद्धा सर्वेषां धर्माणामाधारस्तंभः समुल्लसति । श्रद्धाविरहितः पुमा-

नस्यां जगत्यां केनापि दर्शयितुमशक्यः। रामकृष्णशंकराचार्याद्यवतारविभूति-मारभ्य क्षुद्रतरमनुष्यपर्यंतं सर्वेषां चित्ते श्रद्धा निबद्धमूला वर्तते। आत्मविश्वासः श्रद्धाया एव स्वरूपम्। महत्सु पुरुषेषु यल्लोकोत्तरं सामर्थ्यं प्रतीयते। तच्छ्र-द्धैकहेतुकमेवेति ज्ञेयम्। केनापि दुरहंकारिणा मर्त्येन बुद्धिवादस्य प्रदर्शनं साट्टहासं कृतमपि तस्य बुद्धिवादस्यावंतौ श्रद्धया संव्याप्तौ स्तः। यत्र बुद्धि-वादः कुंठितः सन् विश्राम्यति तत्रेयं श्रद्धा स्वकार्यं तूर्णं विधायानुभवाख्यं फलं प्रसूते। यादृशी यस्य श्रद्धा तादृशः स भवति। सात्विकी श्रद्धा चेत्सा-त्त्विको राजसी चेद्राजसः। तामसी चेत्तामसो भवति।

" यो यच्छ्रद्धः स एव सः "

इति भगवदभिहितः सनातनः सिद्धांत आस्तिकजनमारभ्य नास्तिक-पर्यंत राजानमारभ्य क्षुद्रजनं यावत्समानोऽनुभूयते। नास्तिकोऽपि श्रद्धावान-स्त्येवेति कथनमद्भुतमिव भासेत। परं विमर्शे कृते चातुर्भौतिको देह एवात्मा। स्त्र्यादिविषयजन्यं सुखमेव स्वर्गः। शारीरं दुःखमेव नरकः। धार्मिकं कर्म, परलोकः, पुनर्जन्म एवमादि सर्वं मिथ्यैवेति तस्य श्रद्धैव ज्ञेया। श्वोऽहं जीवेयमित्यत्र श्रद्धैव शरणम्। श्रद्धां विना कस्यापि कर्मणः प्रवृत्तिरेवाशक्या। प्रवीरः पुरुषो युद्धसंकुलायां रणभुवि परेषामनवरतं शस्त्रास्त्रप्रहारैरासमंतात्सहसा निर्गतप्राणान् विपर्यस्तं पतितान् स्वसैनिकान् वीक्ष्यापि यत्र संप्रहारः प्रचलति तत्र निर्भीकः सन् धैर्येण युद्धार्थं तिष्ठति। अथ यावन्मम ग्रहा उच्चस्थाः संति तावन्मृत्योर्भीतिर्मम नास्त्येवेति यद्ब्रूते तच्छ्रद्धायाः स्वरूपं न किम्। वित्तं परमपुरुषार्थं मन्यमानस्य धनलुब्धस्य जंतोः साम्येन धनविभजनं चेदेव जन-समुदायः सुखी भवेत्। इति यद्भासते। सापि तस्य विपरीता श्रद्धैव। यतः सत्यपि महदैश्वर्ये सम्राजा दुःखासंमिश्रं सुखं नैव लभ्यते इति प्रत्यक्षसिद्धमपि तस्य जंतोरार्थिकसमतायामेव दृढं विश्वासो वर्तते। समाजसुधारकस्य पुंसो याभिः स्वाभ्यूहिताभिः सुधारणायुक्तिभिः समाजः सुखी स्यादित्याशा विद्यते। ता युक्तयो यस्मिन् समाजे निरर्गलं प्रचलंति स समाजो दुःखमेवानुभवतीति तेनावलोक्यत एव। तथाप्यसदभिनिवेशं न मुंचतीति श्रद्धैवाद्भुता सा तस्य।

स्वराष्ट्रमुन्निनीषोः कस्यचित्—तंतूत्पादकयंत्रात् ( चरखा ) अहिंसावृत्ते-र्निर्मितिः स्यात्। तया च स्वराज्यं लभ्येतेति आंतरिको ध्वनिस्तदप्युच्छास्त्र-श्रद्धायाः स्वरूपं नेति कः प्रेक्षावान् पुरुषो वक्तुं शक्नुयात्। मिथो विरुद्धेषु सिद्धांतेषु येषां श्रद्धा वर्तते तैः स्वीयश्रद्धानुरूपं किमपि कार्यमारब्धं चेत्तेन जगति कलहाः प्रादुर्भवंति। इत्थं श्रद्धाया नैकविधानि स्वरूपाणि कार्याणि च यद्यपि संति। अथापि शाश्वतसुखस्य पंथानं प्रदर्शयंती श्रद्धा पृथगेवास्ति। श्रद्धायाः सामर्थ्यं यद्यप्यद्भुतमथापि तद्विनियोगः सर्वदा सम्यकृतयैव भवेदिति वक्तुमशक्यमेव। यतः सात्विकी राजसी तामसी चेति तस्यास्त्रैविध्यं विद्यते। तत्र तामसी श्रद्धाऽवस्तुनि वस्तुबुद्धिं कारयित्वा फलाद्वंचयति। नैराश्येनाऽऽहतजीवितं च कुरुते तामस मानुषम्। राजसी श्रद्धाऽशास्त्रीये आसुरे कर्मण्यासज्य तस्मात्कर्मणो जगतस्तापदायकं फलमुत्पादयति।

अत एव ज्ञानिनः केवलायाः श्रद्धाया महत्त्वं न मन्वते। अपि तु विशिष्टायाः सात्विक्याः श्रद्धाया एव शास्त्रनिषिद्धवस्त्ववलंबिनी श्रद्धाऽनर्थ-कारिका। यां श्रद्धां शास्त्रकाराः स्तुवंति। यया चायं नरो नारायणो भवितु-मर्हति। सा सात्विकी शास्त्रीया श्रद्धेति ज्ञेयम्। "गुरुवेदांतवाक्येषु विश्वासः" इति यद्यपि श्रद्धाया व्यावर्तक लक्षणं शास्त्रकृद्भिः प्रदर्शितम्। तथापि शास्त्रितो विश्वासः। इति तस्याः स्वरूपलक्षणं तेषा नानभिमतमिति बोध्यम्। अत एव वेदशास्त्रीये सिद्धांतेऽश्रद्दधानं नरं नास्तिक इति ते ब्रुवंति।

"श्रद्धावान् लभते ज्ञानम्"

इति भगवद्वचनाद्यद्दिव्यं स्वरूपं श्रद्धायाः प्रेक्षावता मनस्याऽऽगच्छति। नैव तदुच्छास्त्रश्रद्धायाः। अपि तु शास्त्रिताया एव तस्याः। अश्रद्दधानः पुरुषो विनश्यति। अश्रद्धया कृतं धर्म्यं कर्म भस्मनि हुतवद्व्यर्थमेव भवतीति यस्माद्गीताशास्त्रं कथयति। तस्माद्वेदशास्त्रादिष्वश्रद्धा इत्येव तस्यार्थः—

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि॥**

इति वदता भगवता प्रकटीकृतोऽयमर्थः । स्वतो भास्करवन्निर्मलः स्वयंप्रकाशोऽप्ययं वेदशास्त्रीयः पंथाः स्वाभाविकाज्ञानपांसुच्छन्नचित्तेन पुंसा स्पष्टं नाधिगम्यते । अतस्तं पांसुपुंजं निरसितुं भगवदवतारभूताः सत्पुरुषा महांतं यत्नमन्वतिष्ठन् सफलप्रयत्नाश्चाभवन् । परमिदानीमस्यां शास्त्रीय-श्रद्धाया सर्वतः प्रहाराः प्रादुर्भवंति । नास्तिकाः सुधारकाश्च तां निंदति । तदनुसरतोऽन्ये जना अपि तस्यामश्रद्दधानाः समवलोक्यते । सर्वोत्तमवैदिक-संस्कृतिश्रद्धायाः प्रच्युतिसदृक्षमनिष्टापादकमन्यत् किमप्यस्मिन् भारते वर्षे नैवावलोक्यते । एतादृशान् शास्त्रीयसंस्कृतिश्रद्धाशून्यानुद्दिश्यैव—

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥**

इति भगवान् गीतायामुपवर्णयांबभूव । लोकेषु सुनिर्मलमतयो विरला एव । रजस्तमोभ्यामाक्रांतमतेरुच्चतमः शास्त्रीयसिद्धांतः सहसाऽऽकलितुमशक्यः ।

एतस्यामवस्थाया शास्त्रिता श्रद्धैव सामान्यजनवृंदस्य मुख्यः संजीवन-स्योपायः । स्वस्यां बुद्धौ चिराय कृतपदान् रजस्तमसोः कल्कानुत्सादयितुं शास्त्रेण ये मार्गाः प्रदिष्टास्तेष्वनुसृतेषु ततो निर्मलायां बुद्धौ शास्त्रीयः सिद्धांतः सुस्पष्टं प्रतिफलितः स्यात् । तावत्पर्यंत निर्दिष्टश्रद्धाया एवानुसरणं कार्यम-भ्युदयेच्छुना जनेन । उक्तं हि भारते—

**अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी ।**
**जहाति पापं श्रद्धावान् सर्पो जीर्णामिव त्वचम् ॥ इति ।**

सांप्रत यः कोऽपि मनुष्यो जनतायां श्रद्धया दारिद्र्यं दृश्यते । कस्यापि मनसि धर्मश्रद्धैव नास्तीत्युच्चैर्रूते । परमन्यदीयश्रद्धाया विमर्शात्प्राक् स्वीय-श्रद्धाविमर्शनतर्मुखदृष्ट्या तेन क्रियते किम् । श्रद्धाया न्यूनत्वमशास्त्रीयत्वं वा हानिकारकमिति येनावगतम् । स पुमानात्मीया श्रद्धा परिशुद्धा दृढतरा च यथा स्यात्तथा प्रयत्नं कुतो न कुर्यात् । स्वीयां श्रद्धामुद्दिश्येत्थं विमर्शादिकं

कदाचित् केनचित् क्रियते किम् । परिशुद्धा शास्त्रीया श्रद्धा दिव्यमंजनमेव । सर्वथा शुष्कं तर्कजालं सुदूरं निरस्य परमगभीरेऽज्ञाते प्रदेशे संचरितुं तस्यामुत्कटं सामर्थ्यं वर्तते । तर्ककर्कशत्रिमर्दर्दुर्दशा भृशं तुच्छीकृत्य श्रद्धा स्वानुभवमेवाऽऽत्मसात्कर्तुं प्रयतते । तत्र कीर्तिमती च जायते । द्वयोः श्रद्धाशास्त्रयोः परिपूते संगमप्रदेशे दिव्यसामर्थ्यस्य समृद्धमुद्यानं पंफुल्यमानं संजायते । तत्रैव संगमे पराक्रमेण स्फूर्तिर्लभ्यते । विजयी च तत्रैव भवति । श्रद्धाशास्त्रयोर्वियोगे तु श्रद्धेय स्वैरं कुत्र यायात् । शास्त्रपराङ्मुख नरं निरर्थकक्रियाजाले दृढं बध्वा कथमत्यंतं त्रस्तं कुर्यात् तद्वक्तुमशक्यम् । सांप्रतमस्माकं भारतीयानां परिस्थितिरत्यंतमनुकंपनीया संवृत्ताऽस्ति । वयं शास्त्रपूतश्रद्धापराङ्मुखाः सतः सर्वथाऽवनतिचक्रे संततं भ्रमामः । अस्मदीया श्रद्धा स्वप्नेऽपि धर्मं द्रष्टु नोत्सहते । आसमंतान्निखातवित्ताया भूमावुपविष्टोऽप्यकिंचनो मर्त्यो यथा दारिद्र्यतः शोचति । तद्वद्धर्मश्रद्धाया अभावाद्भारतीयो जनसमुदायोऽवनतिगर्ते पतित्वा समधिकं दुःखमनुभवन्नास्ते । तस्योन्नतिमार्गे जिगमिषाचेत्तेन सात्विकया श्रद्धया यथाविधि भगवदुपासनमवश्यं कार्यम् । वैदिकधर्मावलंबिना भारतीयानां जनानामिहपरत्रचाभ्युन्नतिकारको नान्यः कश्चनोपायो विद्यते । तत्र समृद्धैः समृद्धेः क्षेमायोपासनं विधेयम् । असमृद्धैः समृद्धेः सिध्यै च तत् कार्यम् ।

श्रीशंकरविष्णुगणपतिदेवीसूर्यप्रभृतीनि महासमर्थानि पूज्यतमानि दैवतानि संति । येषा समस्तेन व्यस्तेन वा उपासनेन जन्मजन्मांतरीयदुरितं निरस्योपासको मानवः समुन्नतेः कोटिं समारोहेत् । अस्माकमाधुनिकं सामर्थ्यं दुरवस्थागर्तादस्मान् समुद्धर्तुं नालमिति समवधृते समधिकसामर्थ्यप्राप्त्यर्थं को विवेकी पुमान् यत्नं नानुतिष्ठेत् । तच्चाधिकं सामर्थ्यं कुतः संपाद्यमिति चेत्—

**" परास्य शक्तिर्विविधैव श्रूयते "**

इति वेदवचनादनाद्यनंतशक्तिसंपन्नस्य भगवतः कृपां संपाद्यैव लब्धुं शक्यम् । कृतेऽपि बहुलप्रयत्ने विना पुण्यसंपत्तिमिष्टसिद्धिर्नैव भवेत् ।

प्रतिपदमधिका ऋद्धिरपेक्षिता चेत्समधिकपुण्यसंपत्तिःससाधनीया । अत एव "पुण्यैर्यशो लभ्यते" इत्युक्तं तत्वविद्भिः । साम्प्रतमस्याः पुण्यसंपत्तेरभावादेव धार्मिकंमन्यैर्भारतीयैः पुंभिर्लोकहितायाऽऽरब्धे कर्मणि कुशलोदर्क फलं नैव लभ्यते । यद्यत्कार्यं तैरारभ्यते । तत्र यशःप्राप्त्यनुकूला युक्ता बुद्धिस्तेषां न स्फुरति । सर्वथा निर्दोषः प्रयत्नो न जायते । तेष्वपि केचन धन्या इव दृश्यंते । यतस्तैः पुण्यफलोपभोगावस्थायामारब्धे कर्मणि प्रतिपदं यशो लभ्यते । क्षुद्रेभ्योऽपि कर्मभ्यस्तेषां महती प्राप्तिर्जायमानाऽऽलोक्यते । लोकोऽप्यनुकूलो भवति । परिस्थितिरपि प्रतिकूला न जायते । अथापि क्षीणायां कादाचित्वया पुण्यसंपत्तौ त एवाकीर्तिभाजो भवंति । तदानीं यत् किमपि कार्यं ते कुर्वंति तद्भस्मनि हुतवद्विनष्टं भवति । तेषामवस्था सर्वतोऽपकृष्टा जायते । बुद्धिर्भ्रंश्यति । इत्येवं पुण्यपापयोः प्रतापो दरीदृश्यते । ते पुण्यपापे अदृश्ये स्यातामित्यत्र न संदेहः । अथापि कार्यलिंगकानुमानप्रमाणस्य विद्यमानत्वात् ते प्रमीयेते एव । पुराकाले भगवदाराधने सत्कर्मणि नैके जनाः सोत्साहा अभूवन् । समाधिकं श्रमं सोढ्वापि ते महागणपतिप्रभृतीनां भगवन्मूर्तीनामाराधनं श्रद्धया चिरायाकुर्वन् । तत्फलमप्यन्वभूवन् ।

समुत्कटोपासनस्य फलमस्मिन्नेव जन्मनि प्राप्यते । पुण्ये कर्मणि श्रद्धावतः पुण्यान् जीवानाक्रष्टुं सामर्थ्यस्य सत्वात्ते भाग्यवतः पुण्यपुरुषाः परिपूतकुले समुत्पद्यंते । ते तत्कुलं सर्वतः समुन्नमयंति । तेषामास्तिक्यतस्तत्कुलमैश्वर्यविद्वत्ववैराग्यधर्मप्रवणत्वप्रभृतिभिः समृद्धं संपद्यते । भाग्यवतां पुण्यजीवानामवतरितुं कुलमपि सर्वथा शुद्धं श्रीमच्चापेक्षितम् । ते पुण्यजीवा हीनकुले कुतो वा जन्म गृह्णीयुः । महात्मना पुंसा जन्मनः प्राग् भविष्यता तेषां मातापितृणां काले यावज्जीवं धर्माचरणे भगवदुपासनायां च विनियुज्यमानोऽसितव्य आसीद्वा । अथवा प्राग्जन्मनि तैः सुमहत्तपोऽनुष्ठितम् । इति भाग्यशालिनां पुण्यपुरुषाणां श्रूयमाणाभ्यः कथाभ्योऽधिगम्यते । तस्मात्महात्मना पुण्यपुरुषाणां स्वीयकुले समुत्पत्तिर्भाव्या । तेन कुलस्य देशस्य च

समुत्कर्षो भाव्यः। अपकृष्टावस्थाया नामापि नोर्वरितव्यम्। इतीच्छा येषा चित्ते दृढतरा स्यात्; तैर्नित्यं धर्माचरणे ईश्वरोपासनायां च सात्विक्या श्रद्धया कालो यापनीयः। तत्र विनियुक्तः कालः सार्थको भवेत्। शास्त्रीया श्रद्धा सफला स्यात्। तेषा कुलं जीवितं च धन्यं भविष्यतीश्वरकृपयेत्यविद्यालं कुर्म इति सर्वं शिवम्॥ श्रीः॥

---

## ॥ श्रीः ॥

## ॥ धर्मश्रद्धोपचयविमर्शः ॥ (१६)

**श्रद्धयेष्टं च पूर्तं च नित्यं कुर्यादतंद्रितः।**
**श्रद्धाकृते ह्यक्षये ते भवतः स्वागतैर्धनैः॥**

**म. स्मृ. ४।२२६॥**

अथ साम्प्रतं द्विजोत्तमानां मध्ये धार्मिकाणामाचाराणां ऱ्हासः सवेगं प्रवृत्तः समवलोक्यते। स्नानं, संध्या, ब्रह्मयज्ञः, तर्पणं, देवपूजा, नैवेद्यः, वैश्वदेवः, शुचित्वमेवमादयः सर्वसाधारणा आचारा अपीदानीं दुर्लभाः संजाताः। कवचादिकं धृत्वा सर्वैरेकस्यां पंक्तावुपविश्य स्वैरमाहारनिर्वर्तनं, वाडवेतरेषां हस्ताज्जलादिस्वीकार इत्यादिकं दुराचारं विधातुं भूतकाले किमप्य-निर्वचनीयं धार्ष्ट्यमनावश्यकमासीत्। वर्तमानसमये तु तादृशस्याचारस्य सार्व-त्रिकत्वात्तदपि नापेक्षितम्। सांप्रतं कंठे यज्ञोपवीतरहितो ब्रह्मकुलोत्पन्नो युवा महतोत्साहेन पंक्तौ स्वैरं नर्तितुमपि शक्नोति। शुद्धसनातनीयानां गृहेष्वप्ये-तादृश्यः कथा न्यूनाधिकतयोपलभ्यंते। सनातनाचारविचारशीलानामपि पितॄणामपत्यान्युक्तरीत्याऽऽचारभ्रष्टानि भूत्वा स्वैरं वर्तंते। तेषां नियंत्रणेन तान् सन्मार्गे समानेतुं पित्रोः सकाशे सामर्थ्यं नास्ति। सर्वतः प्रज्वलित-

मिममाचारभ्रष्टतायाः प्रचंडज्वालाजटिलं दवाग्निं निरीक्ष्य सनातनधर्मैक-शरणाना मनांसि कामं क्लान्तानि जायंते । अनादिपरंपराप्राप्तानां धार्मिकाचारविचारणामितःपरं कीदृशी वाऽवस्था भविष्यतीति चिंता तेषां मनसि सदोदेति । स्नानसंध्याशुचित्वस्पर्शास्पर्शभक्ष्याभक्ष्यपेयापेयोच्छिष्टानुच्छिष्टादीनां विधिनिषेधयोः परिपालनं जनताया कथं स्यात् । इयमाचारभ्रष्टता येन विनष्टा भवेत्तस्योपायस्यापरिज्ञानात्तेषां मनांसि दुःखाग्निना दग्धप्रायाणि भवंति । तेषु प्रवृद्धो दुःखाग्निः पुटपाकवदंतःस्थित्वैवाधिकं दहति । आसमंतान्निष्प्रतिबंध प्रसृतामिमामाचारभ्रष्टतां निरसितुं सामर्थ्याभावात् किंकर्तव्यताविमूढः संवृत्तः सनातनीयानां समूहः । तत्र कैश्चिदौदासीन्यमेवांगीकृतं परिदृश्यते ।

" कलिकालोऽयम् । अत्रेत्थं भ्रष्टता वर्धिष्यत्येव । न किमप्यत्राश्चर्यम् । अतस्तस्या विचारो नैव कार्यः । स्वयं यथाशक्यं सदाचारेण वर्तितव्यम् । पश्चात्किमपि वा भवतु । ये कुर्युस्ते तत्फलमुपभुञ्ज्युः । इत्येवं ब्रुवाणास्ते समुपलभ्यंते । तथा च— दुःखव्याकुल उदासीनश्चेति द्वौ प्रकारौ सांप्रतं सनातनीयेषु स्तः । तत्र भ्रष्टताया उन्मूलनोपाययोजनपुरःसरकर्तव्यकरणस्यु-भयत्राप्यसत्वात् तयोरुदासीनदुःखव्याकुलयोर्यद्यपि साम्यमस्ति । तथाप्युदासीनापेक्षया दुःखव्याकुलोऽभ्यर्हित इति वाच्यम् । यत उदासीनः स्वीयस्वास्थ्यभंगो मास्त्विति बुध्या कर्तव्यपराङ्मुखस्तिष्ठति । दुःखव्याकुले तु सांप्रतिकदुःखस्य निरसनार्थं किमपि कार्यमितीच्छा जागर्ति । परं किं कार्यमित्यस्यापरिज्ञानात् स दुःखीभवति । परितः प्रसृता दुरवस्था तं दुःखव्याकुलमुदासीनमिव तूष्णीं नावस्थापयति । उदासीनमपि न कुरुते । अंततोऽप्यत्यर्थं शोचयति । शोकस्योद्भवः कर्तव्यकर्मणः प्रथमावस्थेति वक्तुं शक्यम् । शोकावेगो भृशं प्रवृद्धः, मनोऽत्यंतं तप्तं संवृत्तम् । इत्येवं तस्य शोकाग्नेरौष्ण्यं दुःसहं जातं चेत्तत्र विचाराख्यो झंझावातः प्रादुर्भवति । कुत इत्थं जनसंघस्य मतिभ्रंशो जातः । तत्र क उपायः कार्य इति विवेचनोदेति । तया चित्तस्याधिकमस्वास्थ्यं चेत्तत एव सुविचारस्योदयो जायते । नूनं सनातनीयानां गृहेष्वपीयमनाचारभ्रष्टता कथं प्रविष्टा । तत्पुत्रादीनां स्नानसंध्यादिकं

धार्मिकं कर्म कुतोऽनभिमतं संवृत्तम्। सदाचारं विहाय दुराचारिभिर्भाव्य-मितीच्छा कुतः प्रादुर्भूता। नूनं बाह्यपरिस्थितिरत्र कारणं स्यात्। यत्र तैः शिक्षणं गृह्यते। तस्मिन् विद्यामंदिरे ( हायस्कूल, कॉलेज ) प्रायः प्रवृद्धो दुराचारः। तथा बहिर्यैः साकमुपवेशनसंभाषणक्रीडनखानपानादिव्यवहारो जायते। सभाव्याख्यानादिभिर्भाव्यमानः संस्कारः। एवमादीनां कारणानामयं परिणामो भवेत्। बाढम्। अस्तीदमेकं प्रधानं निदानम्। अथापि तेषां बहिर्भवानां कुसंस्काराणां निरासं कर्तुं स्वालयीयसंस्कारेषु सामर्थ्यं कुतो नास्ति। गृहे पित्रादयः शुचिर्भूतत्वं पालयंति। अतोऽस्माभिरपि तत्पालनी-यमितीच्छा तेषां मनसि कस्मान्नोत्पद्यते। हायस्कुलीयः कालेजीयो वा कश्चन शिक्षकः प्रोफेसरो वा कवचादिकं धृत्वैव भोजनादिकं कुरुतेऽस्माभिरपि तथैव कार्यम्। अमुकेन लोकाग्रणिना स्वीयं यज्ञोपवीतं छिन्नम्। तदनुसरणमस्माभिः कार्यमेवेतीच्छा सनातनीयानां पुत्रादिसंतत्या कथ-मुत्पद्यते। विमर्शितेऽस्मिन् विषये इत्थं प्रतीयते। स्वगृहे जायमानधार्मिक-संस्कारापेक्षया बहिर्भवाः कुसंस्काराः प्रबलतराः विशेषतश्च परिणामकारकाः सतीति।

कतिपयवत्सरेभ्यः प्राग् बाह्यसमाजे इदानीमिवेयं भ्रष्टता यदा वृद्धिं-गता नासीत्। इदानीमिव च तया राजमान्यता लोकाग्रणीमान्यता च न लब्धा। तदा सांप्रतवद्बलोन्मत्ता भूत्वा जनताया निर्भयं स्वैरतांडवं नाकरोत्सा। तेनान्यत आगच्छंत्यास्या भ्रष्टतायाः संस्कारापेक्षया गृहे जायमाना धार्मिकसंस्कारा एव बलवत्तरा आसन्। अधुना तादृशी स्थिति-र्नैवास्ति। बहिःप्रदेशे आचारभ्रष्टतायाः शीततरो वायुः सवेगं वहति। तेन गृहे कथंचिज्जाताः संस्काराः शीतार्दिताः संतः प्रवेपते। तेषु जीवन-पर्याप्तमप्यौष्ण्यं नावाशिष्टम। पित्रोर्धर्माचरणरूपया ऊर्णया तेषां शीतनिवा-रणं न सेत्स्यति। बहिर्धर्मभ्रष्टता कुतः प्रवृत्ता सद्मीयसुसंस्काराः कुतो वा दुर्बला जाता इत्यस्य विमर्शे कृते समुदायघटकव्यक्तिषु धर्मश्रद्धाया दारिद्र्यमेव मुख्यं निदानं दृश्येत। मूलतः पित्रोरेव धर्मश्रद्धा न्यूना विद्यते।

यद्यपि तौ धर्म्यमाचरणं कुर्वंतौ दृश्येते । अथापि परंपराप्राप्तसंस्कारवशतस्तथा कुरुतः । न स्वानुभवप्रयुक्तश्रद्धापुरःसरम् । आवां यद्धर्माचरणं कुर्वः । तस्येदं फलं लब्धमित्यनुभवो ययोर्विद्यते । तयोर्धर्मश्रद्धा न्यूना न भवति । आत्मविश्वासो निःसारो न जायते । यथाशास्त्रं धर्माचरणेन जायमानं तेजस्तयोराननेे सुप्रकाशते । आवाभ्यामयं धर्मोऽनुष्ठितस्तस्येदं फलं लब्धमित्यनुभवस्य विद्यमानत्वात् तन्मूला तयोर्धर्मश्रद्धा समुज्वलाऽनुभूयते । तयोर्धर्माचरणं समवलोक्य तत्सहवासिनामन्येषामस्माभिरपि तथा वर्तनं विधेयम् । तयोरिव धार्मिकं तेजः सपादनीयमितीच्छा जायते । इत्येवं क्रमेण सर्वस्मिन् जनसमूहे धर्मश्रद्धाया धार्मिकवर्तनस्य च वृद्धिर्भवितुमर्हति । एतादृशा महात्मानः साप्रत विरलाः संति । तेन धर्मश्रद्धाऽपि कार्श्यं प्रकटयति । तेन च धर्माचरणे लोकस्य प्रवृत्तिर्न दृश्यते । अतएव भ्रष्टाचरणं सर्वत्र स्वैरं प्रसृतं दरीदृश्यते । यथाविधि धर्मानुष्ठानजन्यबलसंपन्नः सत्पुरुष एकोऽपि यदि जनताया स्यात् तर्हि स यत्र यत्र संचरेत् तत्रत्यं सर्वं जीवमंडलं धर्मश्रद्धया संपूरितं भवेत् । तत्सन्निहिता जना धर्माचरणं कर्तुं प्रवृत्ता भवेयुः । ततोऽनुभवसंपन्नाश्च स्युः । तेन तेषां धर्मश्रद्धा वर्धेत । धर्मश्रद्धावता तेषां नित्यं समागमेनेतरेष्वपि लोकेषु तस्याः संक्रमणे सति तेऽपि धर्म्यमाचरणं कुर्युः । ऐकांतिकधर्मानुष्ठानोद्भवं फलमनुभविता पुमान् धर्मश्रद्धाया गरीयान् निधिर्वर्तते । तस्मान्निधेर्जनतायां योग्यकाले न्यूनाधिका धर्मश्रद्धाप्रवाहाः सर्वत्र प्रवहंति । तेभ्यः प्रवाहेभ्यः संजाता निर्झरा जनसमूहस्यातिमश्रेणिपर्यंतं गच्छंति । तेन भ्रष्टाचरणं स्वमुखमुन्नमयितुं न शक्नोति ।

एतावता स्वधर्मानुष्ठानं तत्फलानुभवसंपादनं चायमेव धर्मश्रद्धाया उपचयस्य विनिश्चितोपाय इति सिध्यति । अत एव जनताया ये धार्मिकप्रवृत्तिमंतः संति । येषा परितः प्रसृतं भ्रष्टाचरणं वीक्ष्य दुःखमुत्पद्यते । तैर्नियतं धर्माचरणप्रवणैर्भवितव्यम् । अनुभवश्च ससाधनीयः ।

प्रापंचिकानां जनानां मनसि नैकविधाः सकल्पाः प्रादुर्भवंति । यथा-धनं लब्धव्यम्, विद्याप्राप्तव्या, मनोऽनुकूला भार्यापेक्षिता, सुपुत्रो भाव्यः,

व्यवहारे समुन्नत्या भवितव्यम्, सेवायां वेतनस्य वृद्धिर्भाव्या, परीक्षायां यशः संपाद्यम्, रोगान्निर्मुक्तिर्भवितव्या इत्यादयः। तत्र तत्तत्फलोद्देशेन शास्त्रोपदिष्टानि कर्माणि यथाशास्त्रं कृता निचोदिच्छितं फल नियमेन प्राप्यत इति श्रद्धावंतः सांप्रतं विरला उपलभ्यते। प्रायः सर्वेषाम्—

**त्वयि सति शिव दातर्यस्मदभ्यर्थितानां।**
**इतरमनुसरंतो दर्शयंतोऽर्थिमुद्राम्॥**
**चरमचरणपातैर्दुर्ग्रह दाग्धुकामाः।**
**करभमनुसरामः कामधेनौ स्थितायाम्॥**

इतिवदेव प्रवृत्तिः परिदृश्यते। काम्यानामपि कर्मणां जनतायां प्रसारश्चेत्तेनेच्छायाः पूर्तिर्भवतीत्यनुभवेन लोकसमूहो धर्माचरणं कर्तुं प्रवृत्तो भवेत्। अमुकेनामुकफलेच्छयामुकं कर्म कृतं तेन कर्मणा तत्फल तेन लब्धमित्यन्येन ज्ञातं चेत् सोऽपि स्वमनोरथसिध्यर्थं तद्धार्मिक कर्म कर्तुमुद्युक्तः स्यादिति लोकप्रसिद्धव्यवहारेणैव सिध्यति। इति रीत्या धर्मश्रद्धायाः समुपचयो भवितुं शक्य इत्यवधेयम्।

सत्पुरुषकृतग्रंथेषु तत्र तत्र या काम्यकर्मणो निंदोपलभ्यते सा—"न हि निंदा निंद्यं निंदितु प्रवर्तते। अपित्वितरत्प्रशंसितुम्" इति न्यायेन निष्कामकर्मणस्तुतावेव तस्यास्तात्पर्यं ज्ञेयम्।

निष्कामधर्मानुष्ठानेन प्राप्यमाणस्यैश्वर्यस्य पुरतः सकामकर्मणा जायमानं फलं क्षुद्रमित्यर्थका सा निंदा। सकामं कर्म निष्फलमतो नैव तत् कार्यमिति न तस्यार्थः। लोकसमूहस्तु फलेच्छयैवाहर्निशं कमपि प्रयत्नं कुरुते। सत्येवं तेन शास्त्रविहितं कर्म कृत्वा स्वीयफलेच्छाया. संपूर्तिः संपादिता चेत्तेन तस्य धर्मश्रद्धाया वृद्धिः स्यात्। लक्ष्म्याश्रये क्षुद्रांतःकरणानां धनिकानां च णस्पर्शापेक्षया साक्षाल्लक्ष्मीनिरुपासनं कुतो न कार्यम्। फलकामनामुद्दिश्यापि धर्मानुष्ठानमीश्वरोपासनं च श्रद्धया

कृतं चेत् तन्न विफलं भवेत्। यथाशास्त्रमनुष्ठितेन काम्येनापि तेन कर्मणा भगवान् सुप्रसन्नो भवेत्। भगवतः कृपया निष्कामता चित्ते निष्प्रतिबंधं प्रादुर्भवेत्। साम्प्रतं जनतायां स्नानसंध्यादिकं धार्मिकं नित्य कर्म लुप्तप्रायम्। तत्प्रत्यनीकं पशुगर्हितं भ्रष्टाचरणं तु वर्धिष्णु संवृत्तम्। इत्यस्य येषां मनासि दुःखं जायते। चित्तं संतप्त भवति। दुरवस्थाया अस्याः परिवर्तनं भाव्यमित्युत्कटेच्छा विद्यते। तैः शास्त्रीयं धर्माचरण भगवदुपासन च शरणीकरणीयम्। नान्येतो गतिः।

उदासीनैरपि—औदासीन्य विहाय यथाविधि कर्तव्याचरणेन भगवानभ्यर्चनीयः। अयमेव सर्वश्रेष्ठः पंथाः। यदा यदा हि धर्मग्लानिरासीत् तदा तदास्यैव मार्गस्यावलंबनं प्रत्नैः सत्पुरुषैः कृतम्। तेनैव च धर्मभ्रष्टतां दूरीकृत्य धर्मश्रद्धा उपचय नीता तैः। यावनकृतधर्मग्लानिसमये समर्थप्रभृतिभिर्महात्माभिर्यदादौ कृतम्। पश्चाज्जनतायै समुपदिष्टम्। तदेवेदानीतनधर्मग्लान्या संत्रस्तैरस्माभिर्निश्चयेन कार्यम्। तेनेयं धर्मभ्रष्टता भगवत्कृपया विनष्टा स्यादित्यावेद्य—

**धर्माज्जन्म कुले शरीरपटुता सौभाग्यमायुर्धनम्।**
**धर्मेणैव भवंति निर्मलयशो विद्यामही संपदः॥**

**आरण्येषु महाभयेषु सततं धर्मः परित्रायते।**
**धर्मः सम्यगुपासितो हि भवति स्वर्गापवर्गप्रदः॥**

इति चोक्त्वालं कुर्म इति सर्वं शिवम्॥ श्री.॥

---

## ॥ श्रीः ॥

# ॥ काम्यकर्मविमर्शः ॥ (१७)

**अकामस्य क्रिया काचिद् दृश्यते नेह कर्हिचित्।**
**यद्यद्धि कुरुते किंचित्तत्तत्कामस्य चेष्टितम् ॥**

**म. स्मृ. २।४**

अथास्मिन् जगति प्रपंच परमार्थं वोद्दिश्य यद्यत्सम्यगसम्यग्वा त्रिविधं कर्म क्रियते मनुष्यमात्रेण तत्सर्वं यथा भगवत्प्रीत्यर्थं स्यात्तथाऽनुष्ठेयं सर्वैः। निष्कामकर्माचरण तूत्तममेव। परं सकामं कर्मापि सर्वथा महत्त्वं नैव जहाति। तस्मिन्नपि पारमेश्वरी चिच्छक्तिर्विद्यत एव।

सत्यमिदं यत्स्वभावत ऐहिकोन्नतिसंपादनमेव मनुष्यमात्रस्य प्रथम-मुद्देश्यम्। अथापि साभ्युन्नतिः केन मार्गेण संसाधनीयेदमादाववश्यं विचारणी-यम्। यतः कुपथावलंबिना नीतिपराङ्मुखाना जंतूनां सांध्याभ्रवदुत्कर्षः परिदृश्यते। अथाप्याभासिकेन तेनोत्कर्षेण साकं तेषां शनैः शनैर्भृशमवनतिरपि दरीदृश्यते। बाह्यतो रमणीयवस्त्रालंकारमंडितमपि शरीरं हृद्रोगादिभिरंतः समा-क्रांतं चेत्कस्तस्य मंडनस्योपयोगः। कामं संपत्तिमानपि पुमानाधिव्याधिभिरत्यंतं ग्रस्तश्चेत्सन्नप्यसन्नेव सः। एतादृश शोच्य जीवन न कोऽप्यभिवांच्छति। राजोपभोगार्हे रमणीये मंदिरे ऽहर्निशमत्यर्थमाक्रंदनप्रसंग उद्भूतश्चेत्तत्र स्थितः कः सुखमनुभविष्यति। परमेतादृशी दुरवस्थां कुपथगामी मर्त्य. पापाचारतः प्राप्नोत्येव। तस्मात्सांसारिकोऽप्युत्कर्षो धर्म्येणैव पथा संपादनीय इत्येव सम्यक्। धर्म्यपथानुसारिणो नरस्य धर्मश्रद्धा क्रमशः संवर्धते। सदाचारेण शरीरमनसी निर्मलीभवतः। सद्विचारः संयमः सत्संगतिरार्जवं तेजः क्षमा दाक्ष्यमेवमादयः सद्गुणा मनस्याविर्भवंति। सद्गुणसंपन्नं मनः फलाभिसंधि-रहितं कर्म विधातुं शनैः प्रवर्तते। अतः प्रापंचिकोत्कर्षसिध्यर्थमपि दयाघनः परमेश्वर एव नित्यं प्रार्थनीयः। यतोऽनंतशक्तिसंपन्नो लक्ष्मीपतिः सः। भक्तेषु

वात्सल्यं तस्य बिरुदमेव । यो हि राजराजाय सागरमेखलाया भुवोऽधिपत्यं ददाति । देवाधिदेवेभ्योऽभीप्सितं वर प्रददाति । तस्य निरंकुशैश्वर्यसंपन्नस्य परमपूज्यस्य भगवतः कृपासंपादनमेव प्रापचिकोन्नतेः सर्वश्रेष्ठो राजमार्गः । अत एवोक्तं भगवत्तत्वविद्भिर्महात्मभिः—

**येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः ।**
**मयूराश्चित्रिता येन स किं सुप्तोऽथवा मृतः ॥ इति ।**

तस्माद्भगवदुपदिष्टमार्गानुसारेणैव भगवत्कृपा संपादयितुं शक्या । नान्यथा । भगवतः किं प्रियं किंचाप्रियमेतस्य विवेचनं विधिनिषेधात्मना शास्त्रेण सुव्यक्तं कृतमेवास्ति । अतः शास्त्रभास्करालोके कार्यमकार्यं च विविच्य तदनुसारेण स्वीय वर्तनं विधेयम् । भगवानपि—

**तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।**
**ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥**

इत्येव कथयति । यत्र हि लोकप्रसिद्धः कार्यकारणभावनिर्णायकत्वेनाभ्यूहितस्तर्कस्तादृश प्रत्यक्षादिप्रमाण वा न कथमपि प्रसरति । एतादृशेऽतिगंभीरे सुसूक्ष्मे दिव्ये वस्तुनि भगवन्मुखारविंदाविनिःसृतं शास्त्रमेवानुसर्तव्यम् । अत एव वेदादिशास्त्रोपदिष्टकाम्यकर्मानुष्ठातृभिः प्रत्नैर्महात्मभिः —

**तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर ।**
**यादृशोऽसि महादेव तादृशाय नमोऽस्तु ते ॥**
**भूमौ स्खलितपादानां भूमिरेवावलंबनम् ।**
**त्वयि जातापराधानां त्वमेव शरणं शिव ॥**

इति पूजनाद्याराधनसमये भगवान् परमेश्वरः स्तूयते । अतो—

**येनास्य पितरो याता येन याताः पितामहाः ।**
**तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥**

इति शास्त्रवचनादिदानींतनैस्तत्तत्फलोद्देशेन काम्यकर्म कुर्वाणैः सर्वैर्भगवानेव शरणीकरणीय इत्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

———— ——

## ॥ श्रीः ॥

## ॥ पावनकर्मविमर्शः ॥ (१८)

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।**

**भ. गी. अ. १८ ॥**

यस्माद्वैदिकेन यज्ञादिकर्मणा देहादेः शुद्धिर्भवतीति गीताशास्त्रं कथयति । तस्मादाशुतरविनाशशीलस्य कर्मणः शुद्धिसंपादनासंभवात् तदनुष्ठानेन देहादिषु कोऽपि तस्य कर्मणः सूक्ष्मतरः संस्कारो जायते इत्यवश्यं वक्तव्यम् । परं यथाविधि सध्यावंदनपंचमहायज्ञग्रहोपरागादि नित्यं नैमित्तिकं च कर्म कुर्वतो वैदिकाः शास्त्रिणः पौराणिका हरिदासा गृहस्थाश्च सांप्रतमपि तत्र तत्रोपलभ्यंते । ते तु चिराय दुःसहजराग्राहग्रासंयावन्निर्दिष्टं पावनं कर्म विदधति । अथापि तेषां देहादेः शुद्धिस्तेषा वर्तनतो नोपलभ्यत इत्येव न । अपितु कामक्रोधादिविकारा अपि यथापूर्वं तेषु परिदृश्यंते । किं तत्र कारणं स्यात् । उच्यते । शृणु सावधानेन चेतसा ।

यमनियमभेदेन द्विविधं कर्म विद्यते । तत्र अहिंसा, सत्य, अस्तेय, ब्रह्मचर्यम्, अपरिग्रह इति पंचविधं यमस्वरूपं कर्म । स्नानं, संध्योपासनं, देवतार्चनं, जप इत्यादिकं नियमात्मकं कर्म । द्विविधमिदं कर्म सहैवानुष्ठितं चेन्नियतं चित्तादेः शुद्धिर्भाव्यैव । ये तु यमान्विहाय नियमानेवानुतिष्ठंति । न तेषामनुष्ठितेभ्यस्तेभ्यो नियमकर्मभ्यः प्रकृतं फलं प्रसिध्यति । ये हि संध्योपासनादिकर्म कुर्वाणा दृष्टांततयोपन्यस्ताः । ते यमत्यागिकोटिप्रविष्टाः स्युरिति भाति । तदुक्तं हि भगवता मनुना—

**यमान् सेवेत सततं न नित्यं नियमान् बुधः ।**
**यमान्पतत्यकुर्वाणो नियमान्केवलान्भजन् ॥**

अस्यार्थः— अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाख्या यमा नित्यमेवानुष्ठेयाः। संध्यावंदनादिनियमास्तु न नित्यं कर्तव्याः। किं तु यत्र काले विहिताः शास्त्रेण तस्मिन्नेव सायंप्रात.समये ते प्रत्यहं कर्तव्याः। यः पुमान् यमान् विहाय केवलं नियमानेव कथंचिदनुतिष्ठति। स पतति न तत्फलं प्राप्नोतीत्यर्थ इत्युक्तम्।

तस्मात्— यमानुपेक्ष्य यावज्जीवं कृतेऽपि नियमानामनुष्ठाने तेन चित्तादेः शुद्धिरशक्यप्रायैवेति ज्ञेयम। कर्मोपासनाज्ञानानां पृथक् पृथक् त्रीणि प्रयोजनानि संति। तदुक्तम्—

**कर्माणि चित्तशुध्यर्थ्यमैकाग्र्यार्थमुपासना।**
**मोक्षार्थं ब्रह्मविज्ञानमिति वेदांतडिंडिमः॥**

इति यमैः सहैव नियमानुष्ठाने संवृत्ते वाङ्मनःकायानां विशुद्धिर्जायते। सगुणोपासनया चित्तस्यैकाग्र्यं सिध्यति। ब्रह्मज्ञानेन च मोक्ष आविर्भवति। इत्ययं वैदिकः सिद्धांतः। कर्मणा चित्तशुद्धिर्नामानादिकालमारभ्य मनसि बद्धमूलानामसद्वासनानामत्यंतमुच्छेदः। विक्षेपापरनाम्नः सद्वासनानिचयस्य निरासार्थमुपासनमावश्यकम्। असद्वासनासमुच्छेदरूपकर्मजन्यचित्तशुध्यनंतरं सत्कार्यं कर्तुं सत्स्वपि कामादिषु न प्रत्यवायः। तदुक्तम्—

**कामोऽपेक्षित ईश्वरभजने।**
**क्रोधोऽपेक्षित इंद्रियदमने॥**
**तीर्थप्रसादशेषग्रहणे।**
**भूयो लोभोऽप्यपेक्षितः॥ इति।**

एतावता—नियमकर्मभिर्मनस्यदृष्टः संस्कार उत्पद्यते। संयमकर्मभिस्तु स दृष्टस्वरूपेण जायते। संतताभ्यासेन चित्तं तेष्वेव रमते। नियमैः संतुष्टा देवताः श्रेयःप्रत्यनीकानि विघ्नानि नाशयंति। तस्मात्—यमनियमानां सहानुष्ठानेनैव देहादेः शुद्धिः संपद्यते। नान्यथेति सिध्यति।

कर्तव्यमत्र किमुवेत्यविवेकवंत—
मुत्साहशून्यमवलोक्य नरं हताशम्।
धर्मं विशुद्धिजनकं कथयंतमत्र
प्रत्नं नमामि पुरुषं धृतवाजिताश्रम् ॥

" श्रुतिरात्मशरण्यस्य व्यसनं नोच्छिनत्ति किम् "

इत्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

॥ श्रीः ॥

## ॥ प्राक्कृतपापविमर्शः ॥ (१९)

इह दुश्चरितैः केचित् केचित् पूर्वकृतैस्तथा।
प्राप्नुवंति दुरात्मानो नरा रूपविपर्ययम् ॥

म. स्मृ. ४८॥ अ. ११ ॥

पूर्वजन्मकृतं पापं नरकस्य परिक्षये।
बाधत व्याधिरूपेण तस्य जप्यादिभिः शमः ॥

शातातपस्मृति ॥ ५ ॥ अ. १ ॥

अथ कृतहान्यकृताभ्यागमाद्यनिष्टदोषप्रसंगात्सिद्धे पूर्वस्मिन् जन्मनि तत्र कृतस्य दुरितस्य फलमुत्तरस्मिन् जन्मनि भोक्तव्यं भवति वा नवेत्यस्योत्तरं वैदिकशास्त्रेण ओमिति प्रदत्तम्। तदुक्तम्—

नरकांते भवेज्जन्म चिन्हांकितशरीरिणाम्।
महापातकजं चिन्हं सप्तजन्मसु तिष्ठति।
उपपापोद्भवं पंच त्रीणि पापसमुद्भवम् ॥
ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः।
महांति पातकान्याहुः संसर्गश्चापि तैः सह ॥

शा. स्मृ. अ. १ ॥

इति प्राग्जन्मनि कृतेभ्यो महापातकेभ्यः प्रजायमानानि चिन्हानि सप्तजन्मपर्यंतं तिष्ठंति । उपपातकजानि चिन्हानि पंचजन्मपर्यंतमनुवर्तंते । तद्भिन्नपातकेभ्य उद्भूयमानं चिन्हं जन्मत्रयं यावन्न मुचति । एवं पूर्वजन्मकृतं पापं नरकभोगानंतरमुत्तरस्मिञ्जन्मनि रोगात्मनाऽपि भोक्तव्यं भवति । तेषां रोगाणां यथाविधि जपाद्यनुष्ठानतः परिहारो जायते । कुष्ठ, राजयक्ष्मा, प्रमेहः, संग्रहणी, अर्धांग, अतिसारः, भगंदर इत्यादयो रोगा महापातकादुद्भवंति । जलोदरं, प्लीहा, यकृत्, शूलप्रभृतयो रोगा उपपातकेभ्यः प्रभवंति । इतरे बहवो रोगा वर्णसंकराज्जायंते । तदुक्तम्—

कुष्ठं च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकासा अतिसारभगंदरौ ॥
दुष्टव्रणं गंडमाला पक्षघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥
जलोदरं यकृत् प्लीहा शूलरोगव्रणानि च ॥
श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ।
रक्तार्बुदविसर्पाद्या उपपापोद्भवा गदाः ॥
दंडापतानकश्वित्रवपुःकंपविचर्चिकाः ।
वल्मीकपुंडरीकाद्या रोगाः पापसमुद्भवाः ॥
अर्शआद्या नृणा रोगा अतिपापाद्भवंति हि ।
अन्ये च बहवो रोगा जायते वर्णसंकरात् ॥

इति स्मृतिकाराणामृषीणां दयालुत्वस्वाभाव्याद्रोगोत्पत्तिमुक्त्वैव ते न विरमंति । अपि तु तेषा रोगाणा परिहारो जपाद्यनुष्ठानेन कथं कर्तव्य इत्यप्युपदिशंति । रोगनिरासार्थं प्रायश्चित्तानि दानानि च तैरुपदिष्टानि । तदारभ्य तेषामनुष्ठानं कुर्वंतो लोकाः परिदृश्यंते ।

लौकिकोपायैर्ये रोगा न विनश्यंति । ते रोगा अलौकिकोपायैरुन्मूलिता इत्यनुभवोऽपि कदाचिदागच्छति । भारतीयानां चिकित्साशास्त्रेऽपि

" धर्मेण हन्यते व्याधिः " इत्यलौकिकोपायस्य रोगनिवारकत्वेनोपदेशः कृतोऽस्ति। ज्ञानतः कृतानां तत्तत्पापानां क्षालनाय यथा तत्तदलौकिकोपाया धर्मशास्त्रे कथिताः। तथाऽज्ञानतः कृतानामपि मनसिकृतसंस्काराणां तेन च मनो मलिनीकृत्य तस्मिन् सत्यमप्रतिबिंबयतां पापानां निरासार्थं वैदिकसूक्तानां पठनं कार्यमित्युपदिष्टम्। तेषा सूक्तानां " वेदपवित्राणि " इति नामांतरं विद्यते। यतस्तानि पावयितॄणि संति। येषां शास्त्राध्ययनं परिपूर्णं संवृत्तम्। यैर्वेदोऽसकृदावर्त्यते। तैरिमानि वेदपवित्राणि नित्य परिपठ्यंत एव। परं यैः शास्त्राध्ययन न कृतम्। तैरिमानि सूक्तान्येवाधीत्य प्रत्यहं यथावकाशं पठितानि चेच्चित्तं विशोधयितुं तेषामुपयोगः स्यात्। येषां वेदाधिकारोऽस्ति। तैरिमानि सूक्तानि प्रत्यह नियमेन पठितव्यानि। संध्याप्रयोगे विद्यमानम् " ऋतं च सत्यं चे " त्यघमर्षणसूक्तं सर्वेषां परिचितमेव। भोजनकाले पठ्यमानं त्रिसुपर्णं, पवमानसूक्तं, रुद्रसूक्तं, सौरसूक्तं, गणपत्यथर्वशीर्षं, श्रीसूक्तं, पुरुषसूक्तमित्येवमादीनि वेदपवित्राणि संति। तेषु नियमेन पठितेषु चित्तं सुसस्कृतं भवेत्। वैदिके धर्मे श्रद्धा स्थिरा स्यात्क्रमशः कुशलं सिध्येत्। मनस्यानीतं चेदल्पश्रमेणेमान्यध्येतुं शक्यंते। किं तु--भाट्टमिदममूल्यकालापव्ययकारि कर्म। नास्माकमाधुनिकानां शिक्षितानां यूनाम्। इत्यवनतिगर्तेपातयित्रीं विपर्यस्तां भावनां त्यजेयुश्चेदेवेदं शक्यम्। नान्यथा। प्रत्नैर्ऋषिभिर्व्यवहारोपयोगिभव्योपदेशो विस्तरशः कृतोऽस्ति। परंत्वालस्यादिना सांप्रतं धर्मशास्त्रस्याध्ययनाभावादुभयत्राभ्युन्नतेः साधकः स उपदेशो न ज्ञायते। तस्याज्ञानात्तदनुसारेण वर्तनं नास्त्येव। वर्तनस्याभावाच्चेष्टं न सिध्यति। आस्तां नामेदम्। कुशलोदर्कः स ऋषिकृतोपदेशो दिङ्मात्रमत्रोदाह्रियते।

अनृतं पारदार्यं च तथाऽभक्ष्यस्य भक्षणम्।
अगम्यागमनं चैव हिंसास्तेयं तथैव च ॥

अश्रौतधर्माचरणं मैत्रं धर्मबहिष्कृतम।
नवैतानि विकर्माणि सततं तानि वर्जयेत् ॥

शरीरेणासत्याचरणम्, वाण्याऽसत्यवदनम्, मनसाऽसत्यचिंतनमिति त्रिविधमनृतम्। पारदार्यं परस्त्रीगमनादिकम्, अभक्ष्यपदार्थाना भक्षणम्, अपेयानां मद्यादीनां च पानम्, अगम्यस्त्रीगमनम्, हिंसा, चौर्यम्, अवैदिकधर्मस्याचरणम्, वैदिधर्मबहिष्कृतैः साकं मैत्रीकरणं चेमानि नवसंख्यानि दुष्कर्माणि सर्वथावनतिकराणि। अतस्तानि नित्यमेव वर्जनीयानि संति।

परमिदानीं निर्दिष्टेषु धर्मशास्त्रनिषिद्धेषु निंद्यकर्मस्वेव जनानां प्रवृत्तिः प्रायशो दृश्यते। तत्रापि स्वभावतो दुष्टानां, वचोदुष्टानां, दृष्टिदुष्टाना, भावदुष्टानां च पदार्थानां भक्षणे पाने च बाहुल्येन प्रवृत्तिरुपलभ्यते। तथाऽवैदिकधर्माचरणे वैदिकधर्मबहिष्कृतैः साकं मैत्रीकरणे च बुद्धिपूर्वक मोहेन वा प्रवृत्तिरनुभूयते। किं तु ताः प्रवृत्तयस्तानि च कर्माणि न कदापि स्वस्य स्वदेशस्य वा समुन्नतिसाधकानि। अतस्त्याज्यानि तानि कर्माणि। तादृश्यश्च प्रवृत्तयोऽपि त्याज्या एव सर्वात्मनाभ्युदयेच्छुभिः पुंभिरिति साग्रहं वदामः। तथा—

धर्मं चरंतः सकल यथावत् कांक्षंति लोकागममप्रमत्ताः।
धर्मे रताः सत्पुरुषैः समेताः स्तेजस्विनो दानगुणप्रधानाः॥
अहिंसका वीतमलाश्च लोके भवंति पूज्या मनुजाः प्रधानाः।
सत्यं च धर्मं च पराक्रमं च भूतानुकंपां प्रियवादितां च।
द्विजातिदेवातिथिपूजनं च पंथानमाहुस्त्रिदिवस्य संतः॥

इति वाल्मीकीये रामायणे भगवद्रामचंद्रराज्ञोपदिष्टा प्रशस्यामाचरणपद्धतिमनूद्यालं कुर्म इति सर्वं शिवम्॥श्रीः॥

## ॥ श्रीः ॥

## ॥ दानधर्मविमर्शः ॥ (२०)

**दानधर्मं निषेवेत नित्यमैष्टिकपौर्तिकम् ।**
**परितुष्टेन भावेन पात्रमासाद्य शक्तितः ॥**

**म. स्मृ. ४।२२७॥**

अथास्या जगत्या सत्पात्रे दानधर्मानुष्ठानं जीवमात्रस्य सुस्थितेरत्यावश्यकम् । सत्पात्रे दानधर्मस्यांकुरोद्गमो नूनमुदात्तांतःकरण एव संभवति । नीत्या धर्मेण च सपादितस्य वित्तस्य सदुपयोगो भाव्य इति भावना सत्पात्रे दानधर्मस्य मूलं कारणमस्ति । सदसद्विवेकविधात्री भावना यस्मिन् चित्ते न वर्तते । तादृशचित्तस्य पुंसो हस्तात्सात्विकं दानम्—

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।**
**देशकाले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥**

इति भगवदुक्तलक्षणं प्रायशो न भवेदेव । सदाचारसंपन्नाय सच्छीलाय धर्मपरायणाय विदुषे च मनुष्याय प्रेम्णा कर्तव्यमिदमस्माकमिति भावनया दत्तं दानमेवोत्कृष्टो दानधर्मः । एतादृशदानस्य फलमप्युत्कृष्टमेव लभ्यते । यतो निर्दिष्टगुणसंपन्नः पुमान् प्रतिगृहीतस्य वस्तुनः पुण्यकर्मण्येव विनियोगं कुरुते । यथा सम्यक्कृष्टाया भुव्युत्कृष्टं बीजं योग्यसमय उप्तं चेत् कालांतरे समधिकसस्यसंपत्तिर्भवतीति प्रसिद्धम् । तथा पुण्यशीलाय पुंसे दत्ताद्दानादनंता पुण्यकर्मसंततिरुत्पद्यते । एवमात्मकेन दानेन सद्गुणस्य ज्ञानस्य सदाचारस्य सत्कर्मणश्च प्ररोचनं जायते । अस्माभिरपि सद्गुणादीनां संप्राप्तिः संसाधनीयेति जनसमूहस्योत्कंठा समुत्पद्यते । सद्गुणादीनां समुत्कर्ष एव जनतायाः कल्याणम् । इत्थं सत्पात्रे दानकरणं राजसंस्थाया धनिकानां जनता-

याश्च यथासामर्थ्यमाद्यं कर्तव्यं विद्यते । किंत्विदं प्रशस्यं कर्तव्यं सांप्रतं यथा भाव्यं तथा न भवतीति वक्तुं शक्यम् ।

यतो धार्मिकाणा सच्छीलानां च विदुषां तादृशाना संस्थाना च वित्तस्य न्यूनतया दीनावस्था परिदृश्यते । अथाधार्मिकाणां मर्त्यानां तादृशां च संस्थानां पुरतो कामं वित्तपुंजाः पतंति । अधार्मिकेभ्यो द्रव्यदानंत्वधर्मस्य प्रोत्साहन-मेव । अधर्मफलं दुःखं नाशश्च । धनिका अधार्मिकाणा कर्णमधुरभाषणेनाथवा तैः कृतेन स्वस्य मिथ्याजयजयकारेण भ्रांताः संतस्तेभ्यो यथाकामं वित्तं ददति । परं समाजे धार्मिककार्यकर्तारः पुण्यशीलाः के संतीत्यस्य कदाप्यन्वेषणं न कुर्वंति । सदाचारिणो विद्वांसस्तु स्वीयस्वदभिमानाय तिलाजलिं दत्वा धनिकाना द्वारप्रदेशेऽसकृद्गतागतिं नानुतिष्ठंति । ते दारिद्र्यमनुभवंत एव स्वीयकर्तव्यं परिपालयंति । परं धनिकाना पुरतोऽत्यंतं दीनभावेन याचना न विदधति ।

" यांचा मोघा वरमधिगुणे नाधमे लब्धकामा "

इति जानंति ते । इत्येतस्यां परिस्थितौ चक्षुष्मता धनिकवृंदेन दृष्टिं प्रसार्य समाजे विद्यमानान् पुण्यशीलानकिंचनानन्विष्यान्विष्य तेभ्यो वित्त-सहायं न कृतं चेत्स समाजोऽवनतिमंतरेणान्यत्र कुत्र वा गमिष्यति । यस्मिन् समाजे सद्विद्यायाः सच्छीलस्य स्वधर्मस्य स्वीयसंस्कृतेश्च महत्याऽऽरभट्या प्रतिपदं परिहास उपेक्षण च प्रचलति । स्वीयाभिरुच्याऽनिर्वचनीयानुरोधेन वा धूर्तैरधार्मिकैरनीतिमद्भिश्च मर्त्यैर्यत्र द्रव्यादिद्वारा उत्तेजनं लभ्यते । तस्मि-न्समाजेऽधर्मस्यानीतेर्दुःशीलस्य च समुत्थानं भूत्वा स समाजो दीनदीनो दुःखाक्रांतश्च जातश्चेत् किं तत्राश्चर्यम् ।

साप्रतमात्मानमंगराजावतारं मन्यमानाः केचन व्रतबधादिसंस्कारेषु श्राद्धादिपितृकर्मसु व्रतोपवासादिषु च धार्मिककृत्येषु जायमानं वित्तव्ययं संकुच्याथवा तेष्वावश्यक व्ययमकृत्वा तत्संबंधि द्रव्यमनाथविद्यार्थिगृह, अनाथबालिकाश्रम, सत्याग्रहप्रभृतिभ्यः संस्थाभ्यः सहाय्यार्थं ददति । तेषां

वृत्तपत्रादिषु स्तुतिस्तोत्राण्यपि गीयन्ते । परं जनतायाः स बुद्धिभेद इत्यत्र न कोऽपि संदेहः । यतोऽनाथबालिकाश्रमसदृक्षाः संस्थाः "तुष्यत्विति" न्यायेनोपयुक्ता इत्यंगीकारेऽपि नित्यनैमित्तिकेषु धर्मकृत्येषु विधिना विनियुज्यमानस्य द्रव्यस्य निर्दिष्टसंस्थासदृक्षेषु लौकिककर्मसु विनियोजनं प्रमाद एव । उपनयनादिसंस्काराणां श्राद्धादीना व्रतादीना च धार्मिककर्मणा संकल्पः पृथग्विद्यते । एतेषामनाथगृहादीनां ध्येयं त्वन्यादृशमस्ति । एकस्योद्देश आत्मोन्नतिः पारलौकिकी सद्गतिरित्यस्ति । अपरस्य तु केभ्यश्चिद्दीनेभ्यो बालकेभ्यः पाश्चात्यभाषायाः शिक्षणप्रदानमिति । साम्प्रतिके कृच्छ्रातिकृच्छ्रेण कथंचिज्जीवनयापनकालेऽनेन शिक्षणेन तैर्जीवनोपायो लभ्येत वा न लभ्येतेदमन्यत् । परमेतादृशीभ्यः संस्थाभ्यो धार्मिककृत्ये विनियुक्तस्य वित्तस्य प्रदानेन धार्मिककर्मानुष्ठानेनैव वर्धनशीलाया धर्मश्रद्धायाः कथमुपचयः सिध्येत्तज्ज्ञातुमशक्यमेव । अनाथगृहादिसंस्थाभ्यः सहाय्यप्रदानेन साम्प्रतं प्रथम (म्यॅट्रिक) परीक्षां दातुं ये विंशतिः पंचविंशतिर्वा सहस्रं छात्राः परीक्षालय उपविशंति । तेष्वेव शतं पचाशद्वाधिकं प्रविष्टाः स्युः । तेन किं धार्मिकं पुण्यं लभ्येत । प्रत्युतानेन कृत्येन स्वीयधर्मनिष्ठाया ऱ्हासो भूत्वा वैदिकानामुपजीविकायाः साधनं विनष्टं स्यात् । तेन जनताया धार्मिककर्ता पुरोहितवर्गो निःसहायो भूत्वा पुण्यकर्मणः प्रधानं साधन विलुप्येत । सांप्रतं वैदिका याज्ञिकाश्च विरला एव सजाताः । कुत्रचित्तेषामत्यंताभावोऽप्यस्ति । येऽल्पतो वर्तंते तेषु प्रायशो वैदुष्यं नोपलभ्यते । जीविकोपयोगिलौकिकव्यवसायापेक्षया धार्मिकयाजनादिव्यवसायकर्तृणां पुरोहितादीनां द्रव्यप्राप्तिरपि न्यूना विद्यते । तत्रापि व्रतोपवासश्राद्धादिधार्मिककर्मसु विनियुज्यमानवित्तस्य विनियोगोऽनाथबालिकाश्रम, अनाथविद्यार्थिगृह, सत्याग्रह, अंधपंग्वालयेत्यादिधर्माविरोधिसंस्थासु कृतश्चेदस्य धार्मिकपुरोहितादिवर्गस्य जीविकासाधनस्यापहारेण वेदाक्षरं श्रोतुमतिदुर्लभं स्यात् । उपनयनविवाहश्राद्धादयः संस्कारा यथाविधि भाव्याः खलु । शिवविष्णुगणपतिसूर्यदेवीप्रभृतीनां देवतानां समुपासनं भाव्यम् । वेदादीना

संरक्षणं भाव्यम् । वयं सनातनवैदिकधर्मिणः । नास्माकं धर्म इतरधर्मवत् केनचिन्मानुषेणाभ्यूहितः । अपि तु शाश्वतोऽयं धर्मः । यतो वेदेन प्रकाशितोऽयम् । स च वेदः पुरातनतमः । परमेश्वरकल्पः । वेदस्य पुरातनतमत्वमीश्वरकल्पत्वं च समुच्चयस्य प्रथमभागे— 'वेदापौरुषेयत्वविमर्शे' सोपपत्तिकं सप्रमाणं च सविस्तरं निरूपितम् । इच्छा चेत्ततोऽधिगतव्यम् । अत्र तु—

"वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुमः ।"

एवमादिभिः प्रमाणशब्दैर्व्याख्यानप्रवचनादिषु जनतायाः पुरतो महता संरंभेण वैदिकधर्मस्य प्रशंसा समुद्घोषयंति चेत् तस्या अन्वर्थतासिध्यर्थं धर्मसंरक्षकाणां वैदिकशास्त्रिपौराणिकपुरोहितादीनां परिपालनमत्यावश्यकम् । तेषामवहेलनमसाप्रतमित्येव न । किंत्वाऽऽत्मघातकं तदित्येव ब्रूमः ।

एतेषां पुरोहितादीनामितरे केऽपि गुणदोषाः संतु नाम । अथापि तैर्वेदस्य वैदिकधर्मस्य च संरक्षणं कृतम् । इदानीमपि यावच्छक्यं कुर्वतीत्यबाधितं सत्यम् । यदारभ्यैते संकुचिता अभवन् । तदारभ्य जनतायाः पुण्यसंपत्तिरपि ह्रासोन्मुखाऽभूत् । जनतायामुत्पत्स्यमानं स्वाभाविकं स्वैरं संदेहं निराकर्तुं सामर्थ्यं न्यूनमभवत् । तेनाऽश्रद्धायाः पुष्टिर्जाता । ततो धर्मानुष्ठानं देवतोपासनं च यथाविधि नाभूत् । ततस्तस्य फलमप्यलभ्यमासीत् । जनतायां त्रिविधं दुःखमुद्भूतम् । अनीतेरधर्मस्य स्वैराचारस्य च कामं सर्वत्र प्रसारोऽभूत् । अस्या दुःस्थितेरुन्मूलनेच्छा यदि स्यात् । तर्हि एतेषां वैदिकपुरोहितादीनां संरक्षणं विशेषतः कर्तव्यम् । तेषां मध्ये ये विद्वांसः सुशीलाः सदाचारसंपन्नाश्च स्युस्तेषामत्यादरेण गौरवः कार्यः । एवं चेदेव वैदुष्यस्य सौशील्यस्य च स्वस्मिन्नावश्यकत्वमयं वर्गो जानीयात् संपादयेच्च तच्छीघ्रमेव । तेन तेषां जनतायाश्च कुशलं भविष्यति ।

सामुदायिकीं पुण्यसंपत्तिं वर्धयितुं परिपालयितुं चायं वैदिकानां पुरोहितानां च वर्ग एव समर्थोऽस्ति । तस्माद्धर्मकृत्येषु भाव्यमानो विधिप्राप्तो

द्रव्यव्ययः केनापि कारणेन संकुचितो न कर्तव्यः। अपि तु सति सामर्थ्ये वर्धनीयः । किं तु तस्य सत्पात्रे यथा दानं स्यात् तथा सावधानतया यत्नो विधेयः। नित्यनैमित्तिकेषु विधिना विनियुक्तस्य वित्तस्यान्यत्र कुत्रचिद्विनियोजनं तु दुरितोत्पादकमेव । अथाप्यैदानींतना लौकिक्यः प्रवृत्तयः प्रायशोऽधर्मवर्धकाः परिदृश्यंते । ताभ्यः सहाय्यमावश्यकं चेल्लौकिकरीत्यैव कार्यम्। तदर्थे धर्मकृत्योपयुज्यमानस्य द्रव्यस्य विनियोगो विस्मृत्यापि न कार्यः। अधर्माय प्रोत्साहनं दातुं ये धनिकाः कुपात्रे द्रव्यदानं कुर्वंति । तैस्तस्याकार्यस्य फलं लभ्येतैवेति शास्त्रसिध्दांतः। ज्ञात्वाऽज्ञात्वा साक्षात्परंपरया वाऽधर्माय प्रोत्साहनं दत्तं चेत्तेन जनताया अमंगलमेव भवेत् । "धर्म एव हतो हंति" इति भगवत्सिद्धांतो वरीवर्ति। इदं पापं मास्त्विवतीच्छा चेद्राजसंस्थया धनिकवर्गेण जनतया च धर्माधर्मविवेकशालिन्या भवितव्यम् । तत्रांध्यस्यानुरोधस्य वा वार्तयाऽपि नैवावस्थातव्यम् । वास्तवं धर्मशीलत्वं बहिर्दृश्यमानं धर्माडंबरं चैतयोर्विवेकोऽवश्यं दातृभिः कर्तव्यः। धर्मज्ञानं विना पुण्यसंपत्तिरशक्या। विशुद्धं ज्ञानं सात्विक्यां बुद्धावेव स्फुरति । तामसी बुद्धिरधर्मं धर्मत्वेन जानाति। अत एव शास्त्रस्य सज्जनानां चोपदेशमनुसृत्य देशकालपात्राणां विमर्शं विधाय केवलं कर्तव्यमिदमिति बुध्या पात्रे दानं देयम् । तदेवानंतपुण्यफलदं स्यात्।

**"पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः।"**

इत्यलमेवाल्लं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

॥ श्रीः ॥

# ॥ वाग्विमर्शः ॥ (२१)

कामान् दुग्धे विप्रकर्षत्यलक्ष्मीम्
कीर्तिं सूते दुष्कृतं या हिनस्ति ।
तां चाप्येतां मातरं मंगलानाम्
धेनुं धीराः सूनृतां वाचमाहुः ॥

उ. रामचरित.

अथ मानुषेषु वाणीत्यभिधानाऽतिमहती विशिष्टा शक्तिरस्ति । यया तेऽन्येतरेभ्यः प्राणिभ्यो विलक्षणं सामर्थ्य वर्धितमुपलभ्यते । ऋग्वेदे दशम-मंडलांतर्गतवाचःसूक्तेऽस्या वाण्या अत्यद्भुतं सामर्थ्यं सम्यगुपवर्णितम् । तथा हि—

" अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् । तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्यावेशयंतीम् ॥ मया सो अन्नमत्ति यो विपश्यति यः प्राणिति य ईं शृणोत्युक्तम् ॥ अमंतवो मां त उप क्षियंति श्रुधि श्रुत श्रद्धिवं ते वदामि ॥ यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधां ॥ अहं रुद्राय धनुरा तनोमि ब्रह्मद्विषे शरवे हंतवा उ ॥ अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आ विवेश ॥ अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वंतः समुद्रे ॥ "

अस्मिन् सूक्ते वाणी स्वयमेव स्वीयं सामर्थ्यं वर्णयतीति प्रसंगो विद्यते । अहं वागस्मि । सुतेजा राष्ट्रीया शक्तिरस्मि । नैकाविधानि वित्तान्येकत्र कर्तुं मयि सामर्थ्यं वर्तते । पूज्याना देवतानां मध्ये मम पूजा प्रथमतो भाव्या । अहं लोकेषु महांतमावेशमुत्पादयित्री प्रचंडाशक्तिरस्मि । नानाविधास्ववस्थासु वर्तमानानां मनुष्याणामहमनेकधा संरक्षणं करोमि । ततो देवा अपि

मां विशेषतः संमानयंति । यदिदं सर्वं मया कथितं सम्यग्जानाति । स यथेच्छं प्रभूतमन्नमत्ति । ये मामवमानयंति ते विनष्टा भवंति । अहमेव कं प्रत्युग्रं करोमि । तथा कं प्रति शूरं कं प्रति वीरं कं प्रति ऋषिं कं प्रति मुनिं कं प्रति ज्ञानिनं कं प्रति मेधाविनं च करोमि । अहमेव वीराय शस्त्रादिकं सज्जीकृत्य ददामि । तेन च स वीरो ज्ञानद्वेष्टारं घातकं शत्रुं हंति । अहमेव लोकहिताय युद्धं करोमि । अहमेवास्मिञ्जगति प्रचंडमावेशमुत्पादयामि । जगत्संरक्षकस्य राज्ञो निर्माणमपि मदधीनमेव ।

इत्येवमिदं वाग्देव्या महत्वं वाण्युपासकेन मानवेन मनोयोगपूर्वकमालोचितुमर्हं नास्ति किम् ।

अस्मिन् सूक्ते वाण्याः प्रचंडमत्यद्भुतं च सामर्थ्यं याथार्थ्येनोपवर्णितम् । जगति विद्यमानाना महतां लघूनां च तत्तद्राष्ट्राणां पुरावृत्तं समालोचितं चेदिदं सुव्यक्तं भवेत् । या तत्तद्देशेषु सामाजिकी धार्मिकी राजकी वा क्रांतिर्बभूव । साऽद्भुतशक्तिमत्या वाण्याः प्रभावेणैवाभवदिति । यद्यपि प्रभूतवित्तसत्तावरूथिनीप्रभृत्यनेकविधसामर्थ्यसंपन्नो भूपतिरवलोक्यते । तथापि तावदेव स राजसिंहासने स्थातुं शक्नोति । यावद्वक्तारो लेखकाश्च तत्प्रातिकूल्येन स्वां वाणीं लेखनीं वा न प्रवर्तयंति । कदाचिद्राजानः स्वप्रतिकूलं वक्तारं लेखकं वा कारायां प्रावेशयेयुः । किं तु तेन तेषां सामर्थ्यं न व्यज्यते । अपि तु वाण्युपासकेभ्यो वक्त्रादिभ्यस्ते बिभ्यतीत्येतदेव लोके सुव्यक्तं भवति । वाण्याः सामर्थ्यं राजसत्ताया अनुकूलं चेदेव सा राजसत्ता चिरं तिष्ठति । यया राजसत्तया तन्न लभ्यते सा विपर्यस्ता पततीति प्रसिद्ध लोके शास्त्रे च । एवं धर्मादीनां क्रांतयोऽप्यनयैवाद्भुतशक्तिमत्या वाण्यैव भवति । पुरावृत्तमालोचितं चेदियं वाण्या. प्रचंडाशक्तिर्मनसि सम्यगारूढा स्यात् । एतादृशमिदं वाक्सामर्थ्यं परमेश्वरेण मनुष्येषु संस्थापितम् । परं तस्य सद्विनियोगं मनुष्यः करोति वा नेति विचारणीयम् । निरुत्साहोऽपि जनसमूहो वाग्मिनः प्रवक्तुरूर्जस्वलं भाषितमुपश्रुत्य सोत्साहं विशिष्टं

कर्म कर्तुमुत्तिष्ठतीति सुप्रसिद्धम्। केचन निर्भीकाः संतः प्रज्वालितायाः शतघ्न्याः समुखं गतु स्थातुं च धैर्येण बद्धपरिकरा भवंतीत्यपि नाप्रसिद्धम्। आत्मानमसमर्थं मन्वानोऽपि वाण्याः प्रभावेण लोकोत्तरं पराक्रमं कुर्वंति। अद्ययावद्यानि महांति कर्माणि मनुष्यैः कृतानि तानि सर्वाणि वाण्या प्रभावेणैव सजातानि। निःसत्त्वोपदेशेन तु सत्ववानपि लोकः पारतंत्र्यग्रस्तो भवतीति प्रसिद्धमेव। वाण्याः सदुपयोगेन लोकस्य यथाऽभ्युन्नतिर्जायते तथा तस्या दुरुपयोगेनावनतिरप्यपरिहार्यैव। वाण्याः सामर्थ्यं हि वन्हिसदृक्षम्। वन्हौ या दाहिका शक्तिरास्ति सा जंतोरुपकारका भवति। अपकारकाऽपि जायते। काऽपि शक्ति. स्वय न किमपि कुरुते। तस्या उपकारकत्वमपकारकत्वं वा मनुष्यायत्तमेव। मनुष्यो यथा ता प्रवर्तयेत्तथा सा तस्येष्टमनिष्टं वा साधयेत्। अत. कस्यामपि शक्तौ संप्राप्तायां न मानुषेणाऽऽनदतुंदिलेन भाव्यम्। अपि तु तां सन्मार्गे विनियोक्तु स्वस्मिन् योग्यता संपादयितव्या। एव चेदेव तस्याः सकाशादुइष्टेष्टलाभः स्यात्। नान्यथा। नूनं सत्यमेवेदं यन्मनुष्येषु वाण्य-भिधाना महती शक्तिरीश्वरेण तस्य कल्याणार्थं संस्थापितेति। किं तु तस्या विनियोगो यथा भाव्यस्तथा नैव भवतीति प्राय सर्वत्र दृश्यते। तस्य कारणं तु मनुष्यस्ता शक्तिं प्रमत्ततयाऽविवेकेन वा स्वैर विनियुक्त इदमेव। तेनेष्टा-पेक्षयाऽनिष्टमेव तेन प्राप्यते। अत एव वेदेनेत्थं सूचना प्रदत्ता सर्वेभ्यो मानवेभ्य.—

"भद्र कर्णेभिः श्रृणुयाम देवा. । भद्र पश्येमाक्षभिर्यजत्राः।"

इति। सर्वत्रैतादृश्या परिस्थित्या भाव्यम्। यथा श्रोत्रेंद्रियमुत्तमान् शब्दान् श्रृणुयात्। चक्षुश्चोत्कृष्टानेव पदार्थान् पश्येत्। उक्तमंत्रे श्रोतव्यद्रष्टव्यवस्तु-विशेषतया भद्रशब्दः प्रयुक्तोऽस्ति। अतः कर्णाभ्या भद्रा. शब्दाः श्रुताः, नेत्राभ्या भद्राः पदार्था दृष्टाश्चेदेव मनुष्यमात्रस्योन्नतिर्भवितुमर्हति। नान्यथा। प्रत्यहमभद्राः शब्दाः कर्णरध्रयोः प्रविष्टा., अभद्राः पदार्थाश्चक्षुर्गोचरता प्राप्ताः, तथाऽभद्रविषयाणां वाचनादिकमभ्यस्त चेत्पूर्णमेव सर्वस्याभद्राव-स्थाया परिणतिर्भवेत्। दृश्यत एव तादृश्यापत्तिरिदानीं प्राचुर्येण।

भद्रविचारा नामोन्नतिकारका. । उन्नतावस्थां प्रति नेतारः । नूनं हितकारकास्तेजस्विनो विचाराः । यैराचारविचारैः स्वीया शक्तिर्वर्धिष्यति । बलं पुष्येत् । तेजः शरच्चद्रचंद्रिकावत्, यशश्च सर्वत्र प्रसृतं स्यात्ते भद्रविचारा ज्ञेयाः । यैस्त्वात्मशक्तेः सद्य. शनैर्वा ह्रासो भवति । बलं विनाशोन्मुखं जायते । तेजो नाम्नैवावतिष्ठते । यशः काष्ठामुखानि मषीलेपेनेव मलिनानि कर्तुं बद्धपरिकरं भवति । तेऽभद्रविचारा. । सांप्रतं यत्किमपि वयं शृणुम. । वाचयामः । पश्यामः । कुर्मः । ब्रूमः । आलोचयामश्च तत्सर्वं भद्रमभद्रं वेत्यस्य विवेकः श्रोतृभिर्वाचकैर्द्रष्टृभिः कर्तृभिर्वक्तृभिरालोचकैश्चावश्यकं विधेयः । श्रवणवाचनदर्शनसमकालमेव चित्तमानदयितृ वाङ्मयादिकं 'भद्रम्' इति नैवावगंतव्यम् । अस्मिञ्जगतीत्थमनेके विषयाः संति । ये श्रवणमात्रं दर्शनमात्रं वा श्रोतुर्द्रष्टुर्वा चित्तमात्मसात्कुर्वंति । परं परिणामे हानिकरत्वात्ते सर्वथा त्याज्या इति विवेकिन उपदिशंति । यथा परदेशीयं वस्त्रादिकम् । चहा कॉफी कोको पाव बिस्किट चिरूट सिगारेट मद्यादयः पदार्थाः । स्वदेशीयाश्च—वेशवारोपस्कृततैलपाचितपलांडुखंडगर्भचणकादिपिष्टनिर्मितवृत्ताकारा भक्ष्यपदार्थविशेषाः । तादृशाः पृथुकादयश्च । ( भजी, चिवडा, चमचमीत मसालेदार पदार्थ ) एते दृष्टमात्राश्चित्तमुल्लासयंति । प्रार्थ्यंते च प्रायशः सर्वैः । आपणे त एवाधिक्येन विक्रेतुं स्थाप्यंते । ततो हितकरास्त इति कश्चन ब्रूयाच्चेत् स तस्य भ्रम एव ।

यतो नैकविधाचिकित्स्यगदादुत्पत्तिप्रदास्तेनाऽऽयुषः क्षयादंतेऽपमृत्युप्रदा एते निंद्यपदार्थभक्षणादय अनाचारा इति मानुषाचारतत्वज्ञाः कथयंति । तदुक्तम्—

"अनभ्यासात्स्वधर्मस्य स्वीयाचारविवर्जनात् ।
आलस्यादन्नदोषाच्च मृत्युः प्राप्नोत्यकालतः ॥" इति ।

अतो हानिकरांस्तान् सर्वथोपेक्ष्य द्रष्टुमरमणीया अपि सात्त्विकाः खाद्यपेयपदार्थाः शुभोदर्काश्चाचाराः समाश्रयणीया हितेच्छुभिरिति ।

अथ भक्ष्याभक्ष्यादिव्यवहार इव सारस्वतव्यवहारेऽपि भृशं दुरवस्थैव परिदृश्यते। तथाहि—यस्य वाङ्मयस्य प्रसारप्राचुर्यम्। यन्मनोरंजकं सद्यश्चित्ताकर्षकं च तदेव हितकरमित्यभिमानः प्रायः सर्वत्रेदानीं दरीदृश्यते। किंत्वाऽऽत्मवंचनैव सा ज्ञेया। नूनमित्थमभिधातुं शक्यम्। यस्य वाङ्मयस्य लोके बहुलः प्रसारस्तदेव हानिकरमिति। यतः सामान्यजनताया मतिः सारासारविवेचने प्रायशोऽसमर्थेति यत् परिणामे घातकमप्यापाततो रमणीयं तदेव जनता वाञ्छति। मद्यादिमादकपदार्थपानादेरुपदेशं न कोऽपि कुरुते। परं तस्य प्रचारः प्रत्यहं वर्धत एव। सर्वथा घातकानीमानि व्यसनानि त्यजतेत्युपदेशप्रदात्र्यः संस्था अपि स्थापिताः सति तत्र तत्र। अथापि तासां प्रयत्नः सफलो नैव दृश्यते। कारणं त्वत्र जनतायाः पाते प्रवृत्तिर्यथा स्वाभाविकी न तथोत्थाने। अत एव सर्वथा तुच्छवाङ्मयस्य लेखकाधमास्तस्य मुद्रणादिना प्रसिद्धिकर्तारश्च मर्त्याः प्रागुक्तां जनतायाः प्रवृत्तिं निरीक्ष्य धौर्त्येन स्वाभिमतमिष्टं साधयंति। तेषां धूर्तानां तत्कृत्यमात्मनो मृत्युरेवेति तपस्विन्या जनतया न ज्ञायते। तदुक्तम्—

" प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ॥ " इति ॥

मांसादिकमदनीयम्, मद्यादिकं पातव्यम्, स्वैरं विहर्तव्यम्; मार्कटं वृत्तमनुसर्तव्यम्। एवमात्मिका प्राणिसमूहस्य स्वाभाविक्येव प्रवृत्तिः। तदुक्तं केनापि—

" पेया सुरा प्रियतमामुखमीक्षणीयम्।
धार्यस्स्वभावललितो विकटश्च वेषः॥ इति ॥

अस्या निरर्गलानिंद्यप्रवृत्तेरुत्तेजका ये लेखादयस्त एव सामान्यजनताया अभिमता भवंति। तत्प्रतिकूलतया— " इंद्रियाणि संयच्छत। कर्मफलाभिलाषं त्यजत। शुद्धं वर्तनं कुरुत। देवान् पूजयत। गुर्वादीन्नमस्कुरुत। सति सामर्थ्ये योग्यकाले युक्तमौदार्यं प्रकटयत। स्वीयदेशकुलजातिधर्माणामभिमानं दृढं धारयत। तदनुकूलं च वर्तध्वम्। जगति निर्मलं यशः प्रसारयत।"
इत्येवमादयः परिणामे कल्याणकरा उपदेशाः स्वैरवृत्तप्रतिबंधका इत्यनभिमताः

सुतरां जनतायाः। अतस्तादृशमुत्तममपि लिखनादिकं "आम्लानीमानि द्राक्षायाः फलानि" इतीसब्नीतिग्रंथांतर्गतजबूककथासूचितन्यायेन यद्यपि जनता पश्चात्कुर्यात् । तथापि स्वदेशोन्नतिचिकीर्षुभिर्लेखकैर्वक्तृभिर्मुद्रकैस्तत्प्रसारकैश्च किं लेखनीयं किं वक्तव्यं किं मुद्रितव्यं कस्य प्रसारश्च कर्तव्यः इत्यादिमवश्यं विमर्शं विधाय तस्मिन् तस्मिन् कर्मणि स्वीयप्रवृत्तिः कार्या। अन्यथा—"विनायकं प्रकुर्वाणो रचयामास वानरम्" इतिवत् कुप्रसंग आपतेत्।

इयं वाण्यभिधाना विशिष्टा शक्तिरनादिकालमारभ्य मनुष्येषु विद्यत एव। अथापि तस्याः शक्तेः प्रचारस्योपकरणं साम्प्रतं यथोपलभ्यते । तथा प्राक् सुकरं नासीत्। अत एवेदानीं मुद्रितेभ्यः क्षुद्रातिक्षुद्रेभ्यः पुस्तकेभ्यः स्वैरलेखेभ्यश्च यथा जनताया हानिर्जायते। तथा तस्याः संभवः प्राङ्नासीदेव। ये त्वित्थं ब्रुवन्ति। प्रत्नैः सत्कृतकविभिरपि भाणप्रहसनादिकं बीभत्सशृंगारादिरसयुतं काव्यं विरचितं चेत्। अधुनातनानामस्माकमेव तादृशकाव्यादिविरचने कुतः प्रतिबंधः क्रियत इति चेत्। शांतेन मनसा विचारः क्रियेत चेत् तैरित्थं ज्ञातुं शक्येत। यत्प्राक्तनेन तादृशकाव्यग्रथनेन तथा हानेः संभवो नासीत् । यथेदानींतनेनाधमकाव्यादिसमूहेन सर्वत्र प्रकामं हानिरुपलभ्यते। यद्यपि केनचित्कविना प्रशस्यं कमपि हेतुं मनसि निधाय तादृशं काव्यं कृतम्। तथापि इदानीमिव तदानीं जगति तत्प्रसारसाधनानां सौलभ्यस्याभावात्, तस्य काव्यस्येदानीमिवासंख्येयाः प्रतिकृतयो नाभूवन्। शतावधिकवत्सरेष्वंततः पंच वा षड् वा प्रतिकृतयः संवृत्ता आसन् । किंच तज्जन्यदुष्परिणामस्य संभवः संस्कृतभाषाभिज्ञेष्वेव तर्कितुं पार्यते। नान्येषु तदनभिज्ञेषु । अतस्तस्येष्टानिष्टपरिणामः दशपंचसु वा जनेषु स्यात्कदाचित्। न निष्प्रतिबंधं सर्वत्र तत्प्रसारस्यानिष्टः प्रसंगः। साम्प्रतिकी परिस्थितिस्तु घोरतरा विद्यते। यो हि कथंचिल्लिखितुं वाचयितुं च जानाति। स यथेच्छं कीशचेष्टासदृक्षं किमपि बीभत्सं विलिख्य ततःकेनापि यत्नेन तस्य मुद्रणं विधाय परःसहस्राः प्रतिकृतीर्निष्कास्यैकाणका द्व्याणका त्र्याणका चतुराणका मालेति प्रसिद्धिं

कृत्वा तासा सर्वत्र प्राचुर्येण प्रसारार्थं सामान्यजनानां स्वभावतः प्रिया एव वैषयिकीस्तुच्छकथास्तासु लिखति । विशेषतः कामसुखव्यंजकान्यत्युज्ज्वलानि कल्पितचित्राण्यपि तत्र मुद्रापयति । यौवनोद्दामानां वृषस्यंतीनामभिसारिकाणां चित्राणि चित्रकारेभ्यः संपाद्य नैकविधभास्वरवर्णपूरितानि सद्यश्चेतोहराणि तानि विधाय मुद्रितपुस्तकानां मुखपृष्ठे मुद्रितानि कुरुते । अंतर्भागेऽपि तादृशान्येव चित्राणि तत्र तत्र स्थापयति । लोकसमूहस्य विशेषतो यूना युवतीना च नैसर्गिकी विषयभोगलालसा यथा प्रक्षुब्धा स्यात्तथा यावच्छक्य प्रयत्न विधत्ते । एतादृशेनैव प्रयत्नेन जनतायाः कल्याणं सिध्येत् । राष्ट्रस्य चोद्धारो भवेदित्यर्थकान् शब्दान् प्रयुज्य भास्वराणि प्रसिद्धिपत्राणि ( जाहिरात ) विनामूल्यं जनेभ्यः समर्पयति । ये यथेष्टं वित्तं दास्यंति तेषामनुकूलानि मृषा प्रसिद्धिपत्राणि ग्राहकाना हिता हिते अविचार्यैव पुस्तकस्यांतः पाठ्यकथाना मध्ये तत्र तत्र ददाति । आदावुत्तेजकाभासमुत्पादयति । परं पर्यवसाने निर्वीर्यताप्रदानि औषधानि राकेलतैले विनिर्मितानि केशरंजकानि [ भजकानि ] तैलानि पत्रपुटेसुगुप्तं स्थापितानि तूर्णमेव गुण–[ अवगुण ] प्रदानि विलासचूर्णानि तथा संततिनियामकानि ग्राम्यस्त्रीपुंव्यतिकरप्रवृत्तिवर्धकानि च साधनानि इत्येवमादीना सर्वस्वहर्तॄणा घातकाना पदार्थानां प्रसिद्धिपत्राणि वित्ताशया संमुद्य ग्राहकाणामालयेषु स्त्रीणा कुमारकुमारीणा च मध्ये तेषां प्रसारः क्रियते । इत्थं तेषा स्त्र्यादीनां शीले आरोग्ये च स्वार्थांधया दुर्बुध्या स्वयमग्निं निक्षिप्यापि तेषां सर्वेषा विशेषतस्तरुणतरुणीनां च हितं संपाद्यतेऽस्माभिरित्येवं निर्लज्जतया महान् घोषः क्रियते सर्वत्र ।

इत्थं यः सर्वनाशकरः प्रकारः सांप्रतं निरर्गलं प्रचलितोऽस्ति । तादृशः प्रकारः 'पुरा कदाऽपि' नासीत् । संस्कृतभाषायां भाणप्रभृतिकाव्यं विद्यमानमपि तदाधुनिकप्रकारस्य सहस्रांशेनापि स्पर्धां कर्तुं नालम् । किमुत सर्वांशपरिपूर्णेन तादृशेनाधुनिकेन निंद्यप्रकारेण ।

सांप्रतं जनताया आरोग्यं शीलं च सर्वथा संहर्तुं यथेयं निर्दिष्टा राक्षसी सर्वत्रोद्धतं नृत्यति । तथा परिस्थितिः प्राक्काले कदापि नासीत् । परितः स्वैरतया भीषणं तांडवं कुर्वत्या आधुनिकादमुनसंस्कृतेरागमनात् प्राक् भारतवर्षीयाः सत्पुरुषाः कवयो हरिदासाः पौराणिकाः प्रवचनकारादयश्च सर्वेऽप्येते जनतायां धार्मिकमाध्यात्मिकं च वातावरणमुत्पादयितुं प्रयतमाना एव परिदृश्येरन् । तेषां परिशुद्धायास्तस्याः कृतेः सुपरिणामः सांप्रतमपि न्यूनाधिकतया जनतायामुपलभ्यते । तेनैतद्देशीयेषु मानवेषु मनुष्यत्वं स्वल्पं वा भवतु, किंतूर्वरितमेवेति प्रत्ययो भवितुं शक्यः ।

लेखकैर्वक्तृभिर्वा स्वीयवाग्विनियोगस्तथा कार्यः, यथा वाचकानां श्रोतॄणां वा मनःसु विद्यमानाः स्वाभाविक्यो दुर्वासनाः सर्वथा विनष्टा भवेयुः । सद्वासनाश्च तत्र बद्धमूलाः स्युः । एतादृशो वाग्विनियोगः साम्प्रतं भवति वा नवेत्यस्य निरीक्षणप्रसंगः प्राप्त इदानीम् । "नरस्य नारायणः पुरुषस्य पुरुषोत्तमो जीवस्य शिवो नार्याः सावित्री पार्वती वा यथा स्यात् तथा प्राचीनैः सत्पुरुषैः प्रयत्नः कृतः । वाण्याः सद्विनियोगेनाशतो वा भवतु कार्यं कृतमेव तैः । तदानीं मुद्रणालयानि दैनिकादीनि वृत्तपत्राणि लेखवाहकस्थानानीत्यादिकं किमपि नासीत् । अथापि परःसहस्रा नरा नार्यश्चासन्मगार्गात् परावर्त्य सन्मार्गे समानीताः, इदमिदानीमपि वयं पश्यामः । तस्मिन् समये वाक्प्रसारस्य यानि साधनानि नासन् । तानि सर्वाण्यपीदानीं सम्यक्तया विद्यते । दैनिकानि, साप्ताहिकानि, पाक्षिकाणि, मासिकानि, त्रैमासिकानि, नियतकालिकानीत्यादिकं वाङ्मयजातं तूर्णं संमुद्र्य जनताया प्रकाश्य च तेन तया साकं वक्तुं शक्यमस्ति । अज्ञातं ज्ञापितुं पार्यते । सत्येवं वाङ्मयोपासकास्तेषां साधनाना सम्यग्विनियोगं कुर्वंति किम् । सांप्रतं यादृशं वाङ्मयं लोके प्रसिद्धं जायते । तन्मध्ये कियद्वाङ्मयमसुरभावात्परावर्त्य देवभावमापादयितुं समर्थमित्येतत्सुधीभिर्ज्ञायत एव । तथाहि--नियतकालिकप्रभृतीनां पत्राणामर्धाधिकभागेषु प्रसिद्धिपत्रिकाः ( जाहिरात ) मुद्र्यंते । तास्वपि पत्रिकासु स्वदेशीयसदुद्यमादिकमुत्तेजयित्र्यो जनतायाः

स्वास्थ्यं वर्धयित्र्यः तां सुपथे प्रवर्तयित्र्यश्च कियत्यः पत्रिकाः संति। ता अप्युपेक्ष्य मुख्यविषये दृष्टिः प्रदत्ता चेत्। तत्रापि पुरुषस्य पुरुषोत्तमो नार्याः सावित्री वा येन भवेत्, तादृशं लिखनं कियदस्तीत्येतत्सर्वमालोचितं चेत्, सत्स्वपि नैकविधेष्वनुकूलेषु साधनेषु तेषां दुरुपयोगं कृत्वा नितांतमात्महानिमापादयति लोकनिवहः, इदमेवांते पर्यवस्यति।

पुस्तकादीनां लेखनकाव्यप्रणयनवक्तृत्वादिभिरेव लोकशिक्षणकार्यं सिध्यतीत्येव न। अपितु दैनिकादीनि पत्राण्यपि शिक्षणोपयोगीन्येव। तेषां पत्राणां मुद्रणकलासाहाय्यमपि विद्यते।

तच्च साधनं स्वायत्तमस्ति। आर्षकाले समर्थरामदासप्रभृतिसत्पुरुषकाले वा यद्विशिष्टं कार्यं विधातुं कालदैर्घ्यमावश्यकमासीत्। तत्कार्यं—स्वल्पेनैव कालेनेदानीं कर्तुं शक्यम्। किंतु लेखकैर्मुद्रकैर्वक्त्रादिभिश्च नरस्य नारायणीकरणमुद्दिश्य तत्तत्कर्मसु प्रवृत्तैर्भवितव्यम्। तर्ह्येव तत्सिध्येत्। अधुनातनी प्रवृत्तिस्तु यः स्वभावत एव मनुष्येषु प्रबलतया वर्तते स काम एव यावच्छक्यं वर्धनीय एतादृशी प्रायः परिदृश्यते। ये लेखका मुद्रकाश्च तथा प्रयत्नं कुर्वंति। तेषामेवाधिका वित्तप्राप्तिर्भवतीत्यालोच्यान्येऽपि तमेव जघन्यं पंथानमनुसरंति। केचन महाशयाः स्पष्टमेवेत्थं ब्रुवंति। "विशिष्टशृंगाररसवर्धकं रमणीयतरं कामिनीचित्रं मुखपृष्ठे प्रदत्तं चेदेवास्माकं मासिकमहमहमिकतया सर्वे गृह्णंति। अन्यथा वक्रदृष्ट्याऽपि तन्न पश्यति कोऽपि मनुष्यः" इति।

अत एव यानि मासिकानि वृत्तपत्राणि वा स्वदेशीयमुच्चतरं ध्येयमादौ पुरस्कृत्य जनिमागतानि। तान्यप्यधुना बहिरंतश्च शृंगाररससंदब्धानि दृश्यंते। 'बोलपट' इदमप्येकं नूतनमेव शिक्षणसाधनमस्मद्देशे समागतमस्ति। आदौ चित्रपटमवलोक्य युवानश्चौर्यकर्माणि प्रवृत्ताः। तथेतराण्यपि कुकार्याणि कर्तुमुद्युक्ताः। 'स्त्रैणवृत्तेः प्राबल्यं जात' मित्येवं लोकवार्ता सर्वत्र प्रसृता। तदा बीभत्सं दृश्यमवश्यं नियंत्रितव्यमिति लोकैः प्रयत्नः कृतः। ततो राजाज्ञया चित्रपटानां नियंत्रणकारि मंडलं संस्थापितम्। तन्मंडलं

स्वीयं कर्तव्यं सम्यक्करोति वा नवेत्यन्यदेतत्। परमिदमेकं सत्यमस्ति। यदाधिभौतिकचिकित्सामूलक यद्यद् भोगसाधन लोके प्रादुर्भवति। तस्य तस्य दुरुपयोग एव परिदृश्यते। केनात्र कारणेन भाव्यम्।

अस्मद्दृष्ट्या त्विदमेवास्य बीजम्। यदस्मद्देशे सांप्रतं शिक्षणं प्रवृत्तमस्ति। नास्मिन् धर्मभावनाया गधोऽपि न वर्तते। तस्यास्तस्मात्सर्वथोच्चाटनमेव जातम्। एतावता–सत्स्वप्युत्तमेषु वाङ्मयप्रसारसाधनेषु तेभ्यो जनताया अभ्युन्नतिस्तु दूरैव। प्रत्युतावनतिपथैव सा प्रधावतीति निःसंदिग्धमवगतं भवेत्। तत एव च मानुषाणा शारीरसामर्थ्यस्य आयुषः अनामयस्य मानसिकशांतेश्च प्रत्यहं ऱ्हासो जायते इति दरीदृश्यते। वस्तुतः शिक्षणेनैतेषु सामर्थ्यादिषु वृद्धिर्भाव्या। सा नैव जायते।

“अहिंसा, सत्यम्, अस्तेयं, ब्रह्मचर्यम्, अपरिग्रहः, पावित्र्यम्, संतोषः, तपः, स्वाध्यायः, ईश्वरप्रणिधानम्” इमानि मनुष्यस्य दश असाधारणानि लक्षणानि सति। तेषां यथा संप्राप्तिः स्यात् तथा शिक्षणं नैवास्तीदानीम्। अपि तु तद्विपरीतप्रवृत्तेः पोषकं वर्धकं च साक्षरतायाः शिक्षणं स्वैरं नृत्यति सर्वत्र। तेन मनुष्यनिकटे समागतमपि हितप्रदं साधनं तदर्थमनुपयुक्त सत् अहितार्थमेवोपयुज्यते इत्यहोकष्टम्।

वाङ्मयविषये यथाऽश्लीलत्वमनुभूयते। तथा बोलपटे चित्रपटेऽपि दरीदृश्यते। सर्वत्रैकयैव जघन्यया दिशा कार्यं प्रचलति। साधनाना निंद्यमार्गेणोपयोगः क्रियते। तेनामृतमपि विषात्मना परिणमते। वस्तुतो मानुषी बुद्धिरियती समर्था यत्तया विषमपि अमृतं कर्तुं शक्यम्। परिमतीव दुःखास्पदमिद यद्भगवत्कृपया सुधाकल्पा वाणी स्वायत्तापि तस्या दुर्विनियोगेन स्वस्यान्यस्य च हानिमापादयति लोकः। लेखकैर्वक्तृभिश्च स्वशिरसि वर्तमानो भारः सुष्ठु विज्ञेयः। आपाततो रमणीय भासत इति जघन्य वाङ्मयं निर्मातुं स्वीयशक्तेरपव्ययो न कर्तव्यः। तदपेक्षया किमपि न लिखितं चेत्तदेव सम्यक्। यतस्तेन कस्याप्यहितं न भवेत्।

येषा लेखन्या काऽपि विशिष्टा शक्तिर्विद्यते। तैर्लेखकैस्तु स्वदेशीया परिस्थितिमालोच्य विशिष्टमुन्नतं वातावरणं निर्मातुमेव लेखन्या उपयोगः

कर्तव्यः । सांप्रत पारतंत्र्येण विशेषतो धार्मिकीं दीनावस्थामापन्नोऽयं धर्मप्रधानो भारतभूप्रदेशः। अतो यथा तस्मात्पारतंत्र्यान्निर्मुच्य समुन्नतो भवेत्। तथाकरणस्य भारः सर्वथा लेखकेषु वक्त्रादिषु च वर्तत इति तैर्न विस्मर्तव्यं कदापि। येन वाङ्मयेन नीतिरास्थिरा स्यात्, वाचकानां दुर्व्यसनेषु प्रवृत्तिर्भवेत्, चित्तवृत्तयो विकृता भवेयुः, आरोग्य विनाशोन्मुखंस्यात्, मानसं स्वधर्मपराङ्मुखं भवेत्, परधर्माभिरुचिं च कुर्यात् तादृशस्याधमस्य वाङ्मयस्य सर्वैः सर्वत्रावश्यं निषेधो विनाशश्च विधेयः। जनताया स्थैर्यं विशेषतो धार्मिकनैतिकव्यवहारोपजीवि वर्तत इति लेखकादिभिः प्रधानतो मनसि स्थापनीयम। धर्मनीतीविनष्टे चेत्सुतरा लोकसंघोऽव्यवस्थितप्रायः मजान एवेति ज्ञेयम। तथा सति—

"सकृत्प्रवृत्तायाःकिमवगुंठनेन"

इति रीत्या भृशमवनतस्य लोकसमूहस्य समुद्धारो मनुष्ययत्नानधीन एव भविष्यतीति सुधीभिर्लेखकैर्वक्तृभिर्मुद्रकैर्वाङ्मयोपासकैश्च मनसि दृढं संस्थापनीयमित्यावेद्य तादृशीं सन्मतिं तेभ्यः प्रददातु भगवान् सर्वेश्वर इत्याऽऽशास्यालं कुर्त इति सर्वं शिवम्॥ श्रीः॥

---

## ॥ श्रीः ॥

## ॥ ब्राह्मण्यविमर्शः ॥ (२२)

**उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती।**
**स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते॥**

**मनुस्मृति १।९८**

अथैकस्मिन् समये श्रेष्ठनराध्यात्मशक्तिसंपन्नस्तपस्तेजसा समिध्यमानो ब्रह्मवृदः साप्रतं धार्मिक नैतिकमार्थिक च ऱ्हासमनुभवन् दरीदृश्यते। पुरा-

काले त्वय राजाधिराजेष्वपि स्वीयं सात्विकं प्रभुत्वं निराबाधमस्थापयत ब्राह्मणसमूहः। जनतायै समुन्नतिप्रदं शिक्षणं चाऽदात्। तस्यानुग्रहो भाव्यस्तस्मान्मंगलाऽऽशीः संपादनीयेति, आमहाराजमा च दीनजनं सर्वोऽपि लोकोऽहमहमिकया प्रयत्नं करोति स्म। तस्य निग्रहशक्तेः पुरत इंद्रादयो देवा अपि भयकंपिता अभूवन्। इत्थं निग्रहानुग्रहशालि सामर्थ्यं यद्द्विप्रवर्गे प्रागासीत्। तल्लोककल्याणकारि विशुद्धविज्ञानतस्तपसा च तास्मिन् समागतम्। ज्ञानतपसोः संगमाद्यद्दिव्यं तेजः समुत्पद्यते। तत्समस्तस्य जगतः श्रेयस्करमिति पूज्यं भवति। तपश्चर्यामंतरेण ज्ञानं विकलम्। ज्ञानं विना च तपश्चर्या विकलेति ज्ञेयम्। तपश्चर्योपबृंहितं ज्ञान काममुज्ज्वलं व्यवहारे प्रभावकृच्च भवति। विना तपश्चर्यां सिद्धिर्नास्ति। ज्ञानमंतरेण च सिद्धेः सार्थक्यं सदुपयोगो वा भवितुमशक्यः। अत एव ज्ञानतपसोरेकनिष्ठतयाऽऽराधनं ब्रह्मवृंदो यावदकरोत् तावत्तस्य जगति निरुपमं महत्त्वमासीत्। यदेदमाराधनं शिथिलं जातं तदारभ्य तस्यैव ब्रह्मवृंदस्य ऱ्हासः संप्रवृत्तः। ईश्वरस्यावकृपायाः प्रधानं चिन्ह यद्। 'बुध्दिभ्रंशः' स तस्यांतःकरणे प्रादुर्भूतः। तेन स वाडववर्गस्तस्मान्निरुपमोच्चस्थानात्क्रमश अधोगाम्यभवत्। अद्यापि तदधोगमनं प्रचलितमेवास्ति। अथापि तस्य मौलिकपुण्यातिशयस्य सत्वाद्विशुद्धज्ञानवतां तेषां परंपरा न्यूनाधिकतयाऽद्ययावत्प्रवृत्ता परिदृश्यते। परंत्विदानीं तस्य ब्रह्मवृंदस्य संस्कृतेर्ऱ्हासः सवेगमारब्ध इति वक्तुं सुशक्यम्। प्रतिकूलपरिस्थितेरयं परिणाम इत्यंगीकारेऽपि तेन तस्याः परिस्थितेः परिवर्तनं न जायते। अतस्तादृश्यां परिस्थितावेव स्वीयसंस्कृतेः सर्वथा ऱ्हासो यथा न स्यात्तथा किं कर्तुं शक्यमित्यस्या विमर्शो विप्रवृंदेनालस्यं विहायाऽऽवश्यं विधेयः। तेन परिस्थित्यधीनेन नैव भाव्यम्। किं तु सा परिस्थितिरेवात्मसात्कार्या। तदर्थैव पुरुषार्थः। विशेषतो ज्ञानसदाचारमूलकमेव ब्राह्मणाना ब्राह्मण्यं महत्त्वं च। तयोः प्रतिकूला काऽपि तेषा प्रवृत्तिस्तानधःपातयेदेवेति न संदेहः।

सांप्रतमेतौ ज्ञानसदाचारौ द्वावपि युगपत्तेभ्याश्चिराय कृतप्रयाणविमर्शौ दृश्येते। यद्यप्यद्य ब्राह्मणसमूहो ज्ञानसंपादनेऽग्रेसर इव प्रतिभाति। तथापि स

आभास एव । ज्ञानेन हि तथा बुद्धेर्विकासो भाव्यः । यथा कस्यामप्यवस्थायां सम्यग्भव्यमार्गनिर्धारणसामर्थ्यं तस्यामुत्पद्येत । स्वातंत्र्येण कर्तृत्वप्रकाशनस्फूर्तिराविर्भवेत् । न्याय्येनोपायेन वैभवं संपादयेयमित्स्यात्मविश्वासो दृढः स्यात् । अभ्युन्नतेर्दुर्धरमपि पंथानं विना श्रममाक्रमितुं स्वस्मिन्नसाधारणं सामर्थ्यमागंतव्यम् । सदसद्विवेचनशक्तिर्वर्धनीया । क्षुद्रं मोहजालं नितरां दूरीकर्तुं धैर्यं प्रकाशनीयम् । तर्ह्येव तस्य ज्ञानस्य विद्यायाश्च साफल्यं सिध्येत् । ब्राह्मणसमूहस्येदानींतनं विद्यासंपादनमेतादृशमास्ति किम् । आधुनिकं शिक्षण शीलं कर्तृत्वमात्मविश्वासं स्वधर्मश्रद्धां नीतिं च नियमेन संवर्धयति किम् । इत्यादेः प्रश्नजातस्येदमेव निश्चितमुत्तरम् । यद्भूसुरसमूहो गत्यंतरस्याभावात्सांप्रतिकं शिक्षणं कथंचिद् गृण्हाति । तेन शिक्षणेन स्वीयसंस्कृतेर्ध्वंसो जायते । शीलस्य सुतरां भ्रंशो भवति । कर्तृत्वं लुप्यति । नैराश्यं वर्धते । वित्तार्जनमशक्यं भवति । नीतिर्यमालयं याति । स्वधर्मश्रद्धाया नामापि न श्रूयते । इत्थं पराक्रमशाल्यस्ति सांप्रतिक शिक्षणम् ! तस्मिन् बुद्धिभ्रंशकार्यंशः प्राचुर्येणास्त्येव । तदपेक्षयाऽपि सर्वत्र विपरिवर्तमाना दुष्टा वात्याऽधिकं वर्तते । ब्राह्मण्यस्य सर्वथा विघातकं तदस्ति । तेनोत्तरसंततेरनिष्ट जायते । पित्रादय. पालकाः सर्वत्र प्रसृमरस्यास्योदंतस्य किंचिदपि विमर्शं न विदधतीति दुरदृष्टं भारतीयानामुत्तरसंततेः । इतः प्राग्ब्राह्मणानां शिक्षणं ब्राह्मणाधीनमासीत् । इदानीं त्वन्यधर्मीयाधीनं विद्यते । यद्यपि केषुचिच्छिक्षणालयेषु ब्राह्मणाः शिक्षकाः संति । तथापि तेषु ब्राह्मण्यसंरक्षकभावनाया. सर्वथाऽभावादिच्छाराहित्याद्वा ते ब्राह्मणशिक्षका एव ब्राह्मण्यभक्षकाः संवृत्ताः ।

अथ गृहशिक्षणेन ब्राह्मणाना संस्कृतिः परिपालिता स्यादिति वक्तुमप्यशक्यम् । यतस्तस्य गृहशिक्षणस्य सर्वत्रात्यंताभावोऽस्ति । निजां संततिं शिक्षणेन संस्कृतां कर्तुं पित्रादीनामवसरादेरभावात्तेभ्यः पित्रादिभ्यः संस्कृतेः संरक्षणस्याऽऽशा खपुष्पतुल्यैव विज्ञेया । ऐदानींतनशिक्षणस्य फल ( नोकरी ) मपि दुर्लभं संवृत्तमास्ति । तेन स्वीयसंस्कृतेः संरक्षकाः सुविचारा मनसि कदापि नोद्भवति । एतस्यामवस्थायां दारिद्र्यतो ब्राह्मणवर्गस्यावनतिर्महता वेगेन

जायन इत्यत्र किमाश्चर्यम्। मनस उदात्तविचारस्यांशतोऽपि परिचयाभावात्प्रतिकूलपरिस्थितेरुत्पद्यमानं दारिद्र्यं मनुष्यमात्रस्य नैतिकमधःपातं कर्तुमेव बद्धपरिकरं भवतीति ज्ञेयम्।

वेदशास्त्रपाठशालासु संस्कृतविद्यापीठेषु चाध्येतृभिश्छात्रैः पारंपरीकं शिक्षणं लभ्यत इति तद्द्वारा ब्राह्मणसंस्कृतेः परिपालनं भविष्यतीति बलवत्याशा कर्तुमशक्यैव। यतस्ताः पाठशालास्तानि च विद्यापीठानि साम्प्रतिकपरिस्थितिचक्राऽऽक्रान्तानि दृश्यन्ते। तथा हि— ताभिः शालाभिस्तैश्च पीठैः केवलं विद्यार्थिनश्छात्रा न लभ्यन्ते। अध्यापकवृंदोऽपि यथा ब्राह्मण्यभावनापरिप्लुतोऽपेक्षितः प्रायस्तथा नोपलभ्यते। न्यायपूर्वोत्तरमीमांसादीनि शास्त्राणि परमगंभीराणि धर्मोपकारकाणि च यद्यपि संति। अथापि ब्राह्मण्यपरिपालनं यथा स्यात्तथा छात्राणां मनसि सस्कारोत्पादनमध्यापकानामाद्यं कर्तव्य विद्यते। तद्याथार्थ्येन तासु शालासु तेषु च पीठेषु प्रचलतीति वक्तुमशक्यमेव। एवं धनिकानां पुंसां यावत्साहाय्यमपेक्षितं तावन्न लभ्यत एताभिः पाठशालाभिः। इदमप्येकं तत्र दैन्यादेः कारण वर्तते। इमानि न्यायादिशास्त्राणि काममुच्चैरुद्देश्यानि। अतः किंचिल्लौकिकव्यवहारसंबंधरहितानीव दृश्यंते। ततोऽधीतं शास्त्रं संरक्ष्य व्यवहारे नैपुण्यसिध्यर्थं विद्यार्थिभ्यो लौकिकशिक्षणप्रदानमप्यावश्यकम्। शास्त्रव्यवहारयोर्भिन्नदिक्त्वं तु नेष्टम्। शास्त्रीयज्ञानेन व्यवहारसिद्धिः कथं संपादनीयेत्ययं प्रश्नो यद्यपि कठिनो वर्तते। अथापि यथामति विचारणीयोऽप्यस्ति। न कठिन इत्युपेक्षणीयः केनापि। सांप्रत प्राथमिकशिक्षणं पाश्चात्यविद्याशिक्षणं च न ब्राह्मणाधीनम्। परतंत्रं तद्वर्तते। तद्ब्राह्मणैरल्पशो वा भवतु स्वाधीनं कार्यम्। तदंतरेण नान्या गतिरस्ति। बाल्ये वयसि जायमानाना संस्काराणां महत्त्व ज्ञात्वा तस्मिन् वयसि बालकेभ्यः सुशिक्षणप्रदानस्य भारो बहिरंतो ब्राह्मण्येन परिप्लुतैः शिक्षकैर्ग्राह्यः। सांप्रतं ब्राह्मणायत्तं शिक्षणं तु वेदशास्त्रपाठशालीयमेव। तस्मा एव किंचिद्व्यापकं स्वरूपं दत्वा प्राथमिकस्य माध्यमिकस्य च शिक्षणस्य तत्र संयोजनं कृतं चेद् ब्राह्मणानां शिक्षणस्य ब्राह्मण्यसंरक्षकमभीष्टस्वरूपं सिध्येदिति भाति।

राजभाषेयमित्याङ्ग्लभाषाया यद्यपीदानीं महत्त्वमुपलभ्यते । तथापि तदुत्तरत्र तथैव स्थास्यतीति वक्तुमशक्यम् । तस्माद् ब्राह्मणैर्विशेषतो ब्राह्मणसमूहस्याध्यात्मिक उत्कर्षो भाव्य इतीच्छावद्भिर्त्राडवैः सुविचार्य तदनुसारं प्रयत्नो विधेयः । यतोऽयं विषयोऽत्यंत महानंतरंगश्च विद्यते । ऐहिकामुष्मिकेष्टकार्यविद्यासंपादनं कल्पतरुवज्ज्ञेयम् । तदुक्तम्—

जाड्यं धियो हरति सिंचति वाचि सत्यम्
मानोन्नतिं दिशति पापमपाकरोति ।
चेतः प्रसादयति दिक्षु तनोति कीर्तिम्
किं किं न साधयति कल्पलतेव विद्या ॥ इति ॥

यदिदं विद्यादेव्या माहात्म्यमुपवर्णितमस्मिन् पद्ये भर्तृहरिणा । तत्रत्यपापनाशनसत्यनिष्ठयोर्वर्तमानशिक्षणे प्राधान्येनातर्भावो भाव्यः । तर्ह्येव ब्राह्मणवर्गस्योदर्कः समुज्ज्वलः स्यात् । तस्मात्—ब्राह्मणैः स्वीयसंततेः शिक्षणं स्वातंत्र्येण स्वाधीन कथं कार्यम् । तस्या च संतत्यां ब्राह्मण्यस्य भावना कथं सुस्थिरा भवेत् । इत्यस्यावश्यं विमर्शं कृत्वा तदनुसारेण प्रयत्नो विधेय इत्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

॥ श्रीः ॥

# ॥ ब्राह्मण्यापत्प्रतिकार विमर्शः ॥ (२३)

**ब्राह्मण्यं बहुभिरवाप्यते तपोभिः**
**तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।**
**स्वाध्याये तपसि दमे च नित्ययुक्तः**
**मोक्षार्थी कुशलपरः सदा यतस्व ॥**

**( महाभारत, शांतिपर्व. )**

अथाऽऽश्रयाशसंदीप्ते सद्मनि निश्चिंततया गाढनिद्राकरणमात्मघातकिनो मानवस्य लक्षणमिति महात्मनामुक्तिर्वर्तते । सांप्रतं ब्राह्मणसमाजस्य प्रायश एतादृश्येवावस्था जाताऽवलोक्यते । ब्राह्मण्योच्छेदकेषु नैकविधेषु विघ्नेषु सर्वतः शिरस्सु पतत्सु मोहनिद्रानिमग्नो भ्रष्टमतिर्ब्रह्मवृंदस्तान् विघ्नानेव प्रेम्णा गाढमालिंगितुं यदि प्रवृत्तस्तदाऽस्योद्धारं कः कथं च कर्तुं शक्नुयादिति चिंता सहजत एव प्राप्नोति । इदं ब्राह्मण्यं तु वैदिकधर्मप्रासादस्य भूमिबंधो वर्तते । ब्राह्मणास्तस्य जागरूकत्वेन संरक्षणं विधातारो भैरिकाः संतीति वैदिकधर्मस्य योजना विद्यते । तदुक्तम्—

**उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।**
**स हि धर्मार्थमुत्पन्नो धर्मकोशस्य गुप्तये ॥ इति ।**

**म. अ. १**

**संपतन् देहजालानि कदाचिदिह मानुषे ।**
**ब्राह्मण्यं लभते जंतुस्तत्पुत्र परिपालय ॥ इति च ।**

**म. भा.**

सत्येवं ब्राह्मणा एव केनापि दुर्हेतुना बुद्धिपुरस्सरं ब्राह्मण्योच्छेदकाना विघ्नानां तीव्रता संपादयितुं परिकरं बध्द्वा सोत्साहं साहाय्यं कुर्वंतीति महत्तरं चित्रमस्ति । स्वस्योपर्यागच्छन्प्रत्यूहः प्रत्यूह एवेति संविच्चेद्यत्नतस्तं परिहर्तुमिच्छा समुत्पद्येत । परं सन्नपि प्रत्यूहः कुशलप्रदोऽयमिति विपरीतामातिश्चेत्तस्य परिहारेच्छा कथं भवेत् । इच्छाया असत्त्वे प्रयत्नोऽपि न स्यादेव । एतादृश्यां दुरवस्थायां वर्तमानस्यैकांतेन सर्वनाशकांद्विपत्सागरनिमज्जनमंतरा नान्या गतिरस्तीति ज्ञेयम् । प्रागेनादृशैकः समय आसीत् । यत्तस्मिन् समयेऽयं ब्रह्मवृंदो मंत्रबलेन संपन्नस्तपसा तेजस्वी, अंतःकरणेनोदात्तो ज्ञानेन च परिपूर्णः सन् दीनानुद्धर्तुं दुष्टान् दंडयितुं च समर्थ आसीत् । चक्रवर्तिनो भूपाला अपि तस्य पुरतो भीत्या कंपिता भवंति स्म । सर्वथाऽजेय एवासीत्तादात्विको ब्रह्मवृंदः । तदानींतनाना जनानामुद्गारास्तु—

**दुर्ग्राह्यो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी ।**
**दुर्धरा पृथिवी राजन् दुर्जया ब्राह्मणा भुवि ॥**

इत्यासन् । ब्राह्मणैः साकं वैरं चेदेव स्वस्य कल्याणं स्यादिति कुकल्पना स्वप्नेऽपि केषांचिन्नासीत् ।

**न ब्राह्मणविरोधेन शक्या शास्तुं वसुंधरा ।**

इत्यस्य प्रतिपदमनुभवः पृथिवीपालकानामागच्छति स्म । तदानीम्- " शापादपि शरादपि " इत्युभयतः सामर्थ्यं बभूव ब्राह्मणस्य । कुत्रेदं तादात्विकं सर्वथा स्वतंत्रं ब्राह्मणस्य तेजस्वितमं सामर्थ्यम् । कुत्र चेदानींतनस्तस्याधःपातः । पूर्वं राजानस्तपस्विषु सच्छीलेषु च ब्राह्मणेषु गोभूहिरण्यादिदानाना वृष्टिं कर्तुमिच्छति स्म । ते ब्राह्मणास्तु प्रतिग्रहेण स्वीयतेजोहानिः स्यादिति तेषा दानानामस्वीकारं कुर्वंति स्म । इत्थं मोहलोभादिदोषैरस्पृष्टानां तेषां तीव्रतरया तपश्चर्ययैव भूपाः प्रभीता अभूवन् ।

तद्वंशोत्पन्नानामेवाऽऽधुनिकानां भूदेवाना कीदृशी दुरवस्था जातेति पश्यत । तेषां तपः प्रायशो नामशेषता गतम् । तेजः प्रविलुप्तम् । ज्ञानमुत्सन्नम् । निग्रहानुग्रहयोः सामर्थ्यस्यासत्वात् तेषां कोपप्रसादावजागलस्तनाविवोपेक्षणीयौ संवृत्तौ । स्वेच्छाप्रयुक्तः स्वार्थत्यागो विनष्टः । तत्स्थाने परेच्छया हठात्प्रस्थापितया जीविकाचिंतया विदीर्णत्वाद् भृशमनुचितोद्यमाचरणप्रसंगस्तेषामुपर्यापतितः । योगसामर्थ्यं तपसोऽभावान्मंत्रादिसामर्थ्यं च सुदूरं गतमित्येव केवलं न किंतु तादृशसामर्थ्यस्यास्तित्वेऽपि तेषां विश्वासो नितरां विनष्टः संवृत्तः । मंत्रशक्तेर्जागृतिविधायकमार्गस्यात्यंतविस्मृत्या दिव्यसामर्थ्योत्पादकेभ्यस्तेभ्यः पूततममंत्रेभ्यो भूतकालीनाः पाषाणा इष्टकाश्च कीदृश्य आसन् । लवणस्य परिचयः प्रत्नानां मानवानामासीन्न वा । उदधिस्तैरज्ञातो ज्ञातो वा । संख्याज्ञानं तेषां पूर्णमपूर्णं वाऽऽसीदित्येवं काकदतगणनावन्निरर्थककामपि विचारणां कुर्वंतः कालं यापयंति । तेषामानुवंशिकं सामर्थ्यं जागृतं सत् स्थिरं स्थास्यतीत्याशाऽपि व्यर्थैव । यतस्तद्राजकीयाऽऽपत्या प्रयाणोन्मुखं परिदृश्यते ।

येनेश्वरानुग्रहः संपादनीयः स एव ब्राह्मण इदानीं हीनजातीयसेवायत्तादात्म्यापादने च जीवितस्य कृतकृत्यतां मनुते । यथा वंचकैरजानानां

धनिकानां धनमपह्रियते । तद्वन्नास्तिकैः सुधारकैस्तेषां सन्मार्गानुसारिणी सात्विकी श्रद्धा शनैर्विनाशं प्रापिताऽस्ति । ब्राह्मणैरादौ राजसेवाया लोभेन धर्मसेवा सुतरां परित्यक्ता । साम्प्रतं सा राजसेवापि दुर्लभा जातेत्यगतिकया रथकारस्य व्योकारस्य सौचिकस्य भृतिभुजोऽगारविक्रेतुः काष्ठक्रेतुर्विट्संमार्जयितुश्चेत्यादीनि ब्राह्मण्यविघातकानि कर्माणि कर्तुं प्राचुर्येणोपक्रमः कृतोऽस्ति। नैज सुचरित्रं ज्ञानं च यथैतरेषामादर्शभूतं स्यात् । तथा वर्तनमकृत्वा कुचरित्राणि तैरिदानीमभ्यस्यंते । नैजस्त्रीणां सर्वथा परिरक्षणं येषां शीलं याः कदाप्यन्यसंस्पर्शरहिता आसन् । ता एव ब्राह्मणस्त्रियः सांप्रतं नाटकबोलपटादिषु सर्वेषां मनोरंजनं कर्तुं सोत्साहं प्रवृत्ताः परिदृश्यंते । अत्र कस्यापि विनोदिनः कवेर्वाक्यं स्मृतिपथमागच्छति । तच्चेत्थम्—

"मम माता स्वसा च यदा दिवंगताऽभूत् तदा प्रतिवेशिनीभिः स्त्रीभिरागत्यास्मानेवेदानीं मातरं स्वसारं च मनुत इत्युक्त्वा मम सांत्वनं कृतम् । अधुना मम पत्नी मृता । तर्हि काऽपि स्त्री पूर्ववन्मां सांत्वयितुं नायातीत्यहो कष्टम् ।"

इमां तस्य कवेरापदं सांप्रतिकं युगं निरसिष्यतीति भाति । यत्र वक्रदृष्ट्या ब्राह्मणीं द्रष्टुं कस्यापि प्रवृत्तिर्नासीत् । तत्रेदानीं विशुद्धकुलविघातिनी कपूयसंततिनिर्मात्री सुतराममंगला रजिस्टरी लगिनरीतिर्ब्राह्मणानां ब्राह्मणेतराणां च समाजे सवेगं पदनिक्षेपं करोतीति दुःसहः प्रसंगः प्राप्तोऽस्ति ।

अथापि ब्रह्माणसमाजः प्रगाढं सुप्त एवेत्यहो कलिवैभवम् । शमदमज्ञानविज्ञानादिगुणैः सत्कर्मणा च प्राप्यं ब्राह्मण्यमिदानीं गतप्रायमेव । तच्चाव्यक्ततया यत्र तिष्ठेत् तत्स्थानमपि विकृतप्रायम् । जातिब्राह्मण्यं तु दुर्ग्रहगृहीतमिव संवृत्तमस्ति । स्वीयोच्चकुलस्य वर्णस्य चोचिताभिमानपूर्वकं तदनुकूलाऽऽचरणं त्वत्यंतं दूरमेव । प्रत्युत राष्ट्रोद्धारराष्ट्रैक्यमिषेण नैजवर्णकुलाभिमानस्य द्विजोत्तमयुवभिः सुतरा घृणा क्रियते । तथा सह-

भोजनजात्युच्छेदविषयकाः साक्रियप्रलापाः क्रियते । इदमत्यंतमनुचितं तेषा ब्राह्मणब्रुवानाम् । एवं नैज स्वाभाविकं ब्राह्मण्य शत्रुं मत्वा धर्मविध्वंसकाः केचन नास्तिकशिरोमणय एव प्रकृता ब्राह्मणा इति प्रलप्य स्वहस्तेन स्वनाशो ब्राह्मणैर्विधेय इत्यस्याविवेकस्य मोहनिद्राया वा किं वक्तव्य तदेव न ज्ञायते । योऽयं ब्राह्मणाना वैदिकधर्माभिमानः प्रलुप्तः स किं तद्धर्मरहस्याधिगमसमर्था तेषा सहजा बुद्धिः सुतरामस्तंगतेति प्रलुप्तः । किंवा पूर्वजाना समुज्ज्वला विशुद्धा परंपरा त्याज्येति विपर्यस्ता मतिस्तेषा जाता । आहोस्वित् परःसहस्राब्दः समाभ्य कुलजातिवर्णविशुद्धया परपरया संप्राप्तम्—

" शमो दमस्तपःशौचं क्षातिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यम् "

इतीदं स्वाभाविक ब्रह्मकर्म मास्त्विति दुर्मतिः सवृत्ता । अथवा गुणकर्मतः श्रेष्ठ सदाचार विहाय कुत्सिताचारस्वीकृतावेव स्वस्योद्धारोऽस्तीति दुर्विश्वासश्चित्ते संगदोषेणोत्पन्नः । उत यथा " मृदूनि कुसुमादपि " तथा " वज्रादपि कठोराणि लोकोत्तराणा चेतांसि " इति महात्मनामौत्पत्तिकं स्वरूपं तेषु ब्राह्मणेषु विनष्टप्रायं जातम् । येन पुनर्विवाहविजातीयविवाहप्रतिलोमविवाहहीनजातीयैः सह खानपानादिव्यवहारास्पृश्यस्पर्शादिशास्त्रनिषिद्धान् तूर्णमवननिगर्ते पातयतो दुराचारान् स्वैरं प्रवर्तयता स्त्रियः प्रति स्वैराचारिणीः कुर्वता च पुंसापसदामेव जयजयकारः साप्रतिकैर्द्विजैर्निरपत्रपतया क्रियते ।

स्वधर्मनिष्ठान् सच्छीलाश्चाग्रणीन्निर्मातु क्षम ब्राह्मणानां सामर्थ्यमद्य सर्वथा विनष्ट सवृत्त किम् । उत सद्गुणाना पुरस्कारविधान तत्समाजे विलुप्तमेवाभूत् । यत् किमपि वा भवतु । ब्राह्मणसमाजस्योपरि सा घोरतरा विपत्तिरेव ज्ञेया । तस्याः प्रतिकारविधानमेव वैदिकधर्मरक्षणस्याद्योपायः । ब्राह्मण्य-

परिरक्षणमेव वैदिकधर्मसंरक्षणम् । तन्नाश एव तन्नाशः । वैदिकधर्मसंरक्षणार्थमेव ब्राह्मणैर्जीवितव्यम् । तदर्थमेव च मर्तव्यम् ।

" ब्राह्मण्यस्य हि रक्षेणन रक्षितः स्याद्वैदिको धर्मः । "

इति भगवत्पूज्यपादाः कथयंति । मोहवशतो बुद्धिभ्रंशाद्वा ब्राह्मणाना या ब्राह्मण्याच्च्युतिः सैव वैदिकधर्मस्यार्थात्सर्वजगतोऽत्यंतं हानिरवगंतव्या । जगतीतलवर्तिना विश्वेपा मानवाना यथाऽऽदर्शभूतं भवेत्तथा शीलस्य चारित्र्यस्य ज्ञानस्य च ब्राह्मणैः सपादनं न केवलं तेषामेव हिताय । अपि तु समस्तस्य जगतः कल्याणाय तदित्यवधेयम् । अभ्युदयनिश्रेयसोः सिद्धिरपि तेनैव भवित्री । नान्यथेति ज्ञेयम् । आधुनिका धर्मविरोधिनः सुधारकमन्या ब्राह्मणान् शत्रून् गणयित्वा तेषा नाशाय परिकरं बध्द्वा यत्नमातिष्ठते । इद्दगापत्समये ब्राह्मणैरंतर्मुखं भूत्वा नैजं पारमार्थिकमैश्वर्यं किम्, तत्कुतो विलुप्तम्, तेन कियती हानिः सवृत्ता, पुनरपि तस्यैश्वर्यस्य प्राप्तये किं विधेयमित्यस्याविकृतेन मनसा सम्यग्विमर्शं विधायालस्य दूरं निरस्य शास्त्रशुद्धाचरणेन समर्थैस्तेजस्विभिश्च भाव्यम् । यत आलस्यादेवेयं विपत्तिः प्राप्ताऽस्ति । तदुक्तम्—

" आलस्य यदि न भवेज्जगत्यनर्थः को न स्याद्बहु धनको बहुश्रुतो वा ।
आलस्यादियमवनिः ससागराता संपूर्णा नरपशुभिश्च निर्धनैश्च " ॥

इति । तस्मात् - भो ब्राह्मणाः,

" उत्तिष्ठत जागृत प्राप्य वरान्निबोधत "

इत्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

# ॥ ब्राह्मणस्यार्थार्जनोपायविमर्शः ॥ (२४)

**अध्यापनमध्ययनं यजनं याजनं तथा ।**
**दानं प्रतिग्रहश्चैव षट्कर्माण्यग्रजन्मनः ॥**
**षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ।**
**याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः ॥**

**मनुस्मृति अ १०**

अथेदानीं ब्राह्मणसमाजो यया कयापि विधया वित्तार्जनासक्त. परिदृश्यते । यथा तस्य शारीरो वाचिको मानसो वा यत्नः सर्वदा वित्तार्जने विनियुक्तः । न तथा स्वीयसंस्कृतिपारिरक्षणे । आदावुदरपूर्तेर्विचारस्यावश्यकत्वात् तथाभवनं स्वाभाविकमेव । केनापि कियदपि पाडित्यं जनतायाः पुरतः साटोप प्रदर्शितमपि मध्याह्नकाले स्वोदराग्निकुंडेऽन्नाहुतिप्रक्षेपमंतरा नान्या गतिरिति जीवनरहस्यमकामेनाप्यंगीकर्तव्यमेव । यद्यप्येवम् । अथाप्ययं वित्तार्जनव्यवसायः स्वीयसंस्कृतेर्धर्मस्य नीतेश्चानुकूलोऽस्ति न वेत्यस्य सदसद्विवेकशालिभिः प्रेक्षावद्भिर्विचारः कर्तव्य एव । धार्मिकसंस्कृत्यैकमूलकं ब्राह्मणानां ब्राह्मण्यम् । अतः संस्कृतेः सर्वथा रक्षणीयत्वात् स्वोदरभरणार्थं तैः संस्कृतेस्त्यागः कार्य इति कोऽपि विवेकी पुमान्न ब्रूयात् ।

दुःस्थितावपि पंचास्यस्तृणं नात्ति । मानधनः पुमाञ्जात्वपि मानं न मुंचति । तद्वत्सुशिक्षितः पुरुषः स्वीया संस्कृतिं न जहाति। प्राणव्ययेनापि रक्षणियाना वस्तूनां मध्ये धर्मस्य सस्कृतेश्चाग्रस्थानं विद्यते । अत एव महात्मानः काकवत्पिंडं भक्षयतः सुदीर्घजीवितानपि मानुषान् तुच्छीकुर्वंति । विज्ञानशौर्यविभवार्यगुणै. समेतं जीवितमेव यथार्थं जीवितमिति च वदंति । विप्राणामार्थिकपरिस्थितेर्विमर्शकाले उपरिनिर्दिष्टेय दृष्टिरवश्य मनसि कर्तव्या ब्राह्मणवृंदेन । वैदिकसंस्कृतेः सद्गुणाना च वैशिष्ट्यमित्थमद्भुतमास्ति

यत्सति प्रसंग ऐहिकं सर्वस्वं त्यक्तुमुद्युक्तो भवति तेजस्वी पुरुषः। तस्मात्त्यागादेव तस्योत्कर्षः सिध्यतीति प्रसिद्धिः।

सुसंस्कृतस्य सद्गुणोपेतस्य च मानवस्य दूरदर्शी परिशुद्धो विवेको लोकसंग्रहस्य सहाय्यभूतो जायते। तेन जनतायाः समुत्कर्षः सुकरो भवति। अत एव विप्राणा विप्रत्वे यद्वैशिष्ट्यमस्ति तत्परिपाल्य तन्मर्यादाः स्वीकृत्यैव च तेषा द्रव्यार्जनविचारस्तैः कर्तव्यः। साप्रतमात्मान महात्मानं मन्यमानाः केचन धर्मं पश्चात्कृत्यैव द्रव्यार्जनस्य विचारः कार्यो विप्रैरिति ब्रुवंति। तत्र धर्ममर्यादाः परिपाल्यार्थसंपादनं दुःष्करमिति कल्पनया किंवा विनष्टेऽपि धर्मे न काचित् क्षतिः। परं विप्रसमूहो वित्तेन सुसपन्नो भाव्यः। तथा सति सिद्धनः समीहितानित्युच्छास्त्रकल्पनया वा तथा जल्पनं स्यात्तेषाम्। परं ब्राह्मण्यसंरक्षणदृष्ट्या तदतीव तुच्छमित्युपेक्षणीयमेव। इदानीं केवलमुदरंभरण मुद्दिश्य यैः स्वैरमकार्या अपि व्यवसायाः क्रियंते। तेषा संस्कृतेः कीदृशी दुरवस्था संवृत्तेति चक्षुरुन्मील्य तैर्द्रष्टव्यम्।

धूमयानं, [ मोटार ], अश्वयानं, ( टांगा ), वस्त्रनिर्मितिस्थानं [ गिरण्या ], अपेयद्रवद्रव्यपानापणं (चहा हाटेल) एवमादिव्यवसाय कुर्वता मध्ये ये भूदेवाः प्राविष्टाः, तेषा वर्तनादिष्वनिष्टः परिणामो दरीदृश्यते। मद्यपानसदृशैर्मानुष्यध्वंसकैर्दुर्व्यसनैर्नितातं ग्रस्यते। धर्माद् भ्रश्यते। नैतिकाचरणाद्धीयते। समुच्छिन्नब्राह्मण्यास्ते भवंतीति किं न दृश्यते तैः। उदरनिमित्तमंगीकृतेऽप्ये तस्मिन् व्यवसाये यदि तैः स्वीया संस्कृतिररक्षिष्यत तर्हि ते तेन व्यवसायेन सहाभ्युन्नतिं प्रत्यपत्स्यंत। राजसेवायां प्रविष्टो ब्राह्मण उत्कोचको ( लाचखाऊ ) जातश्चेत्स तस्य नैतिकोऽधःपात एव। व्यवहारपदेऽर्थिनः प्रत्यर्थिनो वा प्रातिनिध्यं (वकीलपत्र) मूल्येन स्वीकृत्य ब्राह्मणेन तेन वितथमभिधातुं साक्षिणः शिक्षिता यदि तस्य ब्राह्मण्यं कथमप्रच्युतं तिष्ठेत्। ऋणदानादिव्यवसायं कुर्वतामुत्तमवर्णादिना विप्रेणाधमर्णादीन् वंचयित्वा तेषां वित्तापहार एव द्रव्यसंपादनस्योत्तमः पथा इति दुर्बुध्या सत्यपि साम-

र्थ्येऽकिंचनतायाः प्रदर्शनं (दिवाळे) कृतं चेत्तस्याधमस्य ब्राह्मण्यं कथं विध्वस्तं न भवेत्। बुद्धौ भ्रष्टायामवशिष्टस्य जीवितस्य कीदृशं महत्त्वमस्ति। ब्राह्मणाना महत्वं तु तेषा त्रिविधसत्त्वाभिरुचौ नीतिमत्तायां तेजस्वितायां निस्पृहतायां धार्मिकतायामल्पसतुष्टताया च वर्तते।

एतेषां सद्गुणाना मौलिकसुगमस्थानं विहितधर्माचरणमेव। अद्ययाच्छास्त्रविहितधर्माचरणादेव ब्राह्मणसमाजेन लोकेषु समादरो लब्धः। धर्माचरणादेव तस्य बुद्धिः शुद्धाऽऽसीत्। धर्माचरणेनैवेदानीनपि देशहितार्थमावश्यके स्वार्थत्यागे ब्राह्मणसमाजोऽग्रेसरो वर्तते। अस्य ब्राह्मणाना वैशिष्ट्यस्य विघातकरणं तु न केवल तेषा विघातः। अपि तु स्वीयराष्ट्रस्य विघात एवेत्यत्रवधेयं विवेकिभिः। ब्राह्मणस्यैदानींतन्यकिंचनावस्था तु पाश्चात्यशिक्षणस्य परिणामः। सेवायास्तच्छिक्षणस्य ध्येयत्वात्। राजसेवैव प्रायशो ब्राह्मणसमाजस्य वित्तार्जनोपायः। तेन तस्य स्वावलबिनी वृत्तिर्विनष्टप्राया सवृत्ता। तच्छिक्षणमादायापि निरुद्योगितयावस्थानं तत्फल जातम्। अनेन पारक्यशिक्षणेन तादृशराजसेवया च स्ववृत्तेरधःपाततो ब्राह्मणसमाजो ब्राह्मण्याद् भ्रष्टः सवृत्तः। पाश्चात्यसंस्कृतिरेव सर्वश्रेष्ठेति विपर्यस्तभावनावशतः स्वीयोच्चतमसस्कृतेस्त्यागः समारब्धः। तेन 'शिव शिव न हिंदुर्न यवनः' इतिवत् अतोभ्रष्टस्ततोभ्रष्टावस्थयापि नितातमनुकंपनीयः संवृत्तो भूदेवसमाजः। अतो यथा ब्राह्मण्यस्य परिपालन स्यात् तथा स्वीयशिक्षणस्य पुनः संयोजनं कया विधया कार्यमित्यस्य स्वधर्मनिष्ठैर्ब्राह्मणैर्निपुण विमर्शं कृत्वा स्वातंत्र्येण तदनुसारी यत्नः कार्यः।

विनोद्योगं न किमपि सिध्यति। ब्राह्मणानामुत्कर्षकालेऽपि सर्वे ब्राह्मणाः वित्तेन सुसंपन्नानाऽऽसन्। तादात्विकं तेषामाकिंचनत्वं न परेच्छाप्राप्तमासीत्। अपि तु स्वेच्छीयमेवाऽऽवर्तत। वस्तुतस्तु न तद्दारिद्र्यं किं तु वैराग्यमेव तत्। तेन तेषामभ्युन्नतिरेवाभूत। न कदाप्यवनतिः। द्वित्रिदिनपर्याप्तं धान्यं संगृह्य यद्यपि तेषां वर्तनमासीत्। तथापि परमेश्वरो जात्वप्यस्माकमुपेक्षां न कुर्यादित्यात्मविश्वासस्तेषां दृढ आसीत्। ते

यदृच्छया राजदर्शनार्थं गताश्चेत्तेषामुपरि वित्तस्य सादरं वृष्टिर्भवति स्म । तैस्तद्वित्तं स्वीकृतं चेन्महानयमस्मास्वनुग्रह इति ते राजानो मन्वते स्म । तेषां कालो मन्त्रजपादौ यज्ञाद्यनुष्ठाने तपश्चर्यायां देवतोपासनायां च गच्छति स्म । इत्थं धर्माचरणोद्भूतपुण्यसंपदा तेष्वपूर्वं तेज आविर्भूतमासीत् । तेन तेजःसामर्थ्येन लौकिकव्यवहारेऽपि योग्यसमये तेषां युक्ता बुद्धिः प्रस्फुरिता भवति स्म । योग्यसमये योग्यबुद्धेः स्फुरणमेव देवकृतं मनुष्याणां परिरक्षणम् । तदुक्तं भारते—

**" न देवा दंडमादाय रक्षंति पशुपालवत् ।**
**यं तु रक्षितुमिच्छंति बुध्या संयोजयंति तम् ॥ इति ।**

भगवतः परमेश्वरात्कल्याणबुद्धेर्वरप्रदानस्य संपिपादयिषा चेदनन्यशरणतया तदुपासनं विधाय तत्कृपा संपादनमत्याऽऽवश्यकम् । तेनैव विप्रसमाजस्यैहिकः पारमार्थिकश्चोत्कर्षो निर्विघ्नं भविष्यति । दृश्यसृष्ट्यपेक्षयाऽदृश्या सृष्टिः प्रशस्यतरा वर्तत इत्येतत्सृष्टिरहस्यस्य याथार्थ्येनाधिगमाय वैदिकं शास्त्रमेव शरणीकरणीयम् । तदुक्तेन चानुष्ठितेन साधनकलापेन जायमानः स्वस्मिन् सूक्ष्मतया वर्तमानायाः शक्तेर्विकासो लौकिकोत्कर्षस्याप्युपकारको भविष्यति ।

समर्थश्रीरामदासस्वामिभिराधिकारयुक्तवाण्या यः सदुपदेशः कृतः । तस्मिन्नुत्कर्षेच्छुभिर्जनैरवश्यं दृष्टिर्देया । स चेत्थम्—

" आतां ब्राह्मणीं आपणाला । शहाणे करावें ।
देव पूजावा विमलहस्तीं । तेणें भाग्य पाविजे समस्तीं ।
मूर्ख अभक्त अव्यवस्थीं । दारिद्र्य भोगिजे ॥"

इष्टप्रदान् लौकिकोपायान् सर्वथा विहायेदं समर्थोपदिष्टमनुष्ठेयमिति न तस्यार्थः । किं तु स्वधर्मस्य स्वीयसंस्कृतेश्च मर्यादा परिपालनीया । तज्जन्यपुण्यसंपदा ते लौकिकोपाया उपबृंहणीया इत्यर्थकः स उपदेशः समर्थस्वामिनामित्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

॥ श्रीः ॥

## ॥ कुलोत्कर्षविमर्शः ॥ (२५)

**कः कुलकमलदिनेशः**
**सति गुणविभवेऽपि यो नम्रः ॥**

**श्रीशंकराचार्याः ।**

**धन्यं कुर्वंति ते वंशमन्वर्था तैः कुलीनता ।**
**येषां यशांसि शुभ्राणि व्हेपयंतींदुमंडलम् ॥**

अथ " कुलं जनपदे गोत्रे सजातीयगणेऽपि च । " इति कोशप्रामाण्याद्देशो वंशः सजातीयाना समूहश्चेत्येते त्रयः कुलशब्दस्यार्थाः प्रसिद्धाः। तत्र लोकव्यवहारे कुलशब्दस्य विशेषतः प्रसिद्धोऽर्थो वंशः ( घराणें )। स कुलशब्दस्य व्याप्योऽर्थ. । तस्य समुत्कर्षे सिद्धे तद्घटितसमाजस्य चोत्कर्षोऽर्थात्सिध्यति । न नत्सिध्यर्थं यत्नातरं विशेषतोऽपेक्ष्यते । वंशोत्कर्षस्तु धर्मश्रद्धा, आस्तिक्यं, स्वार्थांधतात्यागः, संयमः, परोपकृतिः, शोभना महत्त्वाकांक्षा, औदार्यं, स्वाभिमानः, सत्यनिष्ठा, कर्तृत्वं, धैर्यं, शौर्यमित्यादिभिर्गुणैर्निर्विचिकित्सं प्रसिध्यति । दुर्गुणप्रतिबंधकाः सद्गुणसंवर्धकाश्च सदाचारा महत्सु कुलेषु दरीदृश्यंते । तेन नेषु कर्तृत्ववता पुरुषश्रेष्ठाना परंपराप्यविच्छेदेन समनुवृत्ताऽवलोक्यते । सा यदि निर्दिष्टगुणसमुदायनः संप्राप्तोत्कर्षेण साकं स्वार्थांधता विषयसुखलोलुपता च तस्मिन् कुलेऽप्रविष्टा चेत्तर्ह्येयत्र । साऽतिभीषणा राक्षसी यस्मिन् कुले निष्प्रतिबंधं प्रविष्टा महदपि तत्कुल न केवलमपकर्षमपि तु नामशेषता प्राप्नोति । पृथग्जनेषु समीचीना महत्त्वाकाक्षा परिपूरयितुमावश्यकाना धैर्यशौर्यसंततोद्यमप्रभृतिगुणा नामसत्वात्तेषा स्वैरं कर्तृत्वं कथंचिदुदरपूर्तावेवापगतशक्तिकं भवति । स्वार्थांधमनस्कैर्यैः स्वोदरभरणार्थमेव विविधं छलं स्वीकृत्य 'बक' न्यायेन जनता प्रतार्यते । कामाद्यंधतया कुपथो नैव त्यज्यते । तेषा क्षुद्राणा मनसि भव्या विमर्शाः कुत आगच्छेयुः । यदृच्छया जातुचिदागता अपि सामर्थ्याभावात् कृतौ कथमानेतव्यास्तैः । अत एव कुलसंरक्षयित्री सत्कुलवर्धयित्री च

समाजरचनाऽत्यावश्यकी। भारतीयानामस्माकं समाजरचना तादृश्येवास्ति। अत एवास्माकं संस्कृतिर्नैकाविधाभ्य आपद्भ्यः सुरक्षिता सत्यद्यापि तिष्ठति। किं त्विदानीन्तनायाः सुधारणायाः समस्ताः स्वैरकल्पनाः सत्कुलसंरक्षयित्र्याः संस्कृतेर्विघातका परिस्थितिमुत्पादयन्ति। कुलीनताया भावना मूलत एवोत्खातयतः प्रमाणबहिर्भूतास्तर्काः समाजे निर्विघ्नं रंहसा प्रवहंति। कुलीनाना जनाना कुलीनतायाश्च सर्वत्र मुक्तकंठं परिहासः प्रचलति। कुलविध्वंसकान् दुर्गुणानाच्छाद्य पामराः प्रकामं स्तूयंते। इत्थं परिस्थितिः सांप्रतं प्रायशः सर्वत्रोपलभ्यते। कुलीनताया विघातकमेवेदानींतनायाः सुधारणाया वास्तवं स्वरूपं वर्तते। पुराकाले राजानस्तत्तदधिकारेषु योग्यान् पुरुषान्नियोक्तु प्रथमं तेषां कुलपरीक्षणं कुर्वंति स्म। उद्वाहसमये आदौ कुलं परीक्ष्यैव विवाहा भवति स्म।

अधुना तत्सर्वं विपर्यस्तमेवावलोक्यते। धर्मपरिवर्तनम्, आचारव्युत्क्रमः प्रेमविवाहः, पुनर्विवाहः, प्रतिलोमपरिणयः, जात्युच्छेदोपक्रमः, धर्मांतरस्वीकारः इत्येवमादयः सांप्रतिकाः सर्वे प्रकाराः कुलस्य कुलीनतायाश्च विध्वंसकाः संतीति नैवाव बुध्यते मिथ्यासुधारणाभिमानिभिः स्वैराचारैः पुंभिः अर्थकामप्रधाने सांप्रतिके जनसमाजे 'यस्यास्ति वित्तं स नरः कुलीनः' इत्ययं निहीनो नियमः सर्वश्रेष्ठ इति भावनाया. प्राबल्याज्जनतायास्तेनाभद्रं जायते। "कारणगुणाः कार्यगुणानारंभंते" इत्यस्य निरपवादसिद्धांतस्य जागरूकत्वादानुवंशिका गुणा उत्तरसंतत्यामनुवर्तन्त इति नियमं मनुष्येतरप्राणिष्वगीकुर्वंतोऽपि केचन सुशिक्षितमन्याः "कुलीनता पालयत" इत्युच्चैः कथयत्यपि धर्मशास्त्रे पारकीये चानुवंशशास्त्रे तदनुकूलं विचारं प्रकटयत्यपि मनुष्येषु तं नियमं न स्वीकुर्वंतीति महच्चित्रमेतत्।

भगवद्गीतायाः प्रमुक्तकंठं स्तुतिं कुर्वंतो मानुषाः—

**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।**
**अथवा योगिनामेव कुले भवति धीमताम्॥**

इति भगवद्वाक्यं विस्मरंतीत्यहो बुद्धिमत्ता तेषाम्।

भारतीययुद्धस्य पर्यवसानमालोच्य वीरशिरोमणेरर्जुनस्य चित्ते महती भवित्री कुलक्षयभीतिः समुत्पन्ना। तया चात्यंतमवसन्नः सन् भगवंतं श्रीकृष्ण-मित्थमवोचत्स नरवीरः पार्थः—

कुलक्षये प्रणश्यंति कुलधर्माः सनातनाः।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत॥
अधर्माभिभवात्कृष्ण प्रदुष्यंति कुलस्त्रियः।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः।
संकरो नरकायैव कुलघ्नानां कुलस्य च॥

इति कुलक्षयमन्वगस्य भवित्र्या अनर्थपरंपराया भीतिस्तदानीमर्जुनस्य मनस्युद्भूता। किं त्विदानींतनानां मर्त्यविशेषाणां दुराचारः स्वधर्मत्यागो जात्युच्छेदप्रयत्न इत्यादयो दुर्विषया एवात्यंतं प्रियाः संति। आस्तां नामेदं तेषां किमपि प्रियतरम्। कुर्वंतु च ते तदर्थं यत्नम्। तेषां शास्ता दक्षिणदिशि संयमिन्यां नगर्यां जागरूकस्तिष्ठत्येव। परमात्मनः कुलेषु पुरुषश्रेष्ठानां जननं भाव्यमिति येषां दृढा मनीषा स्यात् तैः कुलस्य सर्वथा संरक्षणं कर्तव्यम्। कुले पुण्यकर्मणां वृद्धिर्यथा स्यात्। कुलस्य पावित्र्यं पुण्यात्मनां जीवानां जन्मग्रहणाय यथा क्षमं भवेत्तथा विमर्शपूर्वकः प्रयत्नोऽवश्यं कुलीनैर्विधेयः। तदर्थं कुलस्योत्कर्षापकर्षयोर्ये ये नियमाः शास्त्रेणोपदिष्टास्ते प्रथममधिगंतव्याः। ते च यथा—

**“ तपो दमो ब्रह्मवित्त्वं तितिक्षोद्वाहपुण्यकौ।**
**सांत्वनं चान्नदानं काले शौर्यं तथैव च॥**
**एते सप्त गुणा येषु निवसंति युधिष्ठिर।**
**महाकुलानि तान्येव शीलवंति निबोध मे॥**
**येषां न वृत्तं व्यथते न योनिः।**
**चित्तप्रसादेन चरंति धर्मम्॥**
**ये कीर्तिमिच्छंति कुले विशिष्टाम्।**
**त्यक्तानृतास्तानि महाकुलानि॥**

स्वस्वधर्माचरणं शास्त्रविहितम्, इंद्रियनिग्रहः, स्वस्वविद्यायाःशिक्षणं, यथाधिकारं पंचमहायज्ञादिधर्म्यं कर्म, पुण्यो विवाहः, क्षातिः, अन्नदानं, उत्कृष्टं शीलं चैते गुणा यत्र कुलेऽनुवर्तते । तानि महाकुलानि ज्ञेयानि । तथा यस्मिन् कुले शीलभ्रशः कदापि न जायते । पूर्वजाः पित्रादयश्च स्वकुलोत्पन्नाया उत्तरसततेः सौशील्येन दुर्गतिं न गच्छति । यानि प्रसन्न-मनसा स्वधर्ममनुतिष्ठति । यान्युत्तरोत्तर पुण्या कीर्तिमभिलषंति । यैस्त्रिविध-मनृत सर्वथा विसृष्टम् । तानि महाकुलानीति ज्ञेयम् । महाकुलप्रख्यापकेषु सद्गुणेषु मध्ये शील सर्वश्रेष्ठमस्ति । यतः—

**धर्मः सत्यं तथा वृत्तं बलं लक्ष्मीस्तथैव च ।**
**शीलमूला महाराज सदा नास्त्यत्र संशयः ॥**
**शीलेन हि त्रयो लोका जेतुं शक्या न संशयः ।**
**न हि किंचिदसाध्यं वै लोके शीलवतां सताम् ॥**

इत्युक्ते.—

**अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।**
**अनुग्रहश्च दानं च शीलमेतत्प्रचक्षते ॥**

तथा–"शीलं स्वभावे सद्वृत्ते" इति कोशात् सद्वर्तनं शीलशब्दस्यार्थः सिध्यति । नतो महाकुलीनत्व सर्वथा सद्वर्तनायत्तमिति बोध्यम् । शीले ब्राह्मण्यतायाः देवपितृभक्तनायाश्चाग्रं स्थानं विद्यत इति न विस्मर्तव्यं केनापि । विशेषत इदानींतनैः सुशिक्षितमात्मानंमन्यैः । एत्र पुण्यो विवाहः कुलीनतायाः संरक्षणस्य प्रधानं साधन विद्यते ।

प्रेमविवाहस्तु पापविवाह एव । तादृशाद्विवाहाद्धर्मविद्वेषिण्यनृताचरणी क्रूरा संततिर्जायते । तदुक्तम्—

**" जायंते दुर्विवाहेषु नृशंसानृतवादिनः ।**
**वेदधर्मद्विषश्चैव सुताः कुलविघातकाः ॥ इति ॥**

तथा–सदाचारोऽपि कुलीनताया उपबृंहकः । तदप्युक्तम् 'आचारो हंत्यलक्षणंम्' इति । स आचारः श्रुतिस्मृत्युपदिष्टो बोध्यः । तथा हि–

**श्रुतिस्मृत्युदितं सम्यङ् निबद्धं स्वेषु कर्मसु ।**
**धर्ममूलं निषेवेत सदाचारमतंद्रितः ॥ इति ।**

वित्तसत्ताप्रभृतिवैभवं कुलीनत्वापादकमिति कुत्रापि नोपदिष्टम्। प्रत्युत सत्यपि वित्तादिवैभवे सद्वर्तनं न चेत् कुलहानिकरं तदित्युक्तम्। यथा—

**वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च।**
**कुलानि न प्ररोहंति यानि हीनानि वृत्ततः॥**
**कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च।**
**कुलान्यकुलतां यांति धर्मस्यातिक्रमेण च॥**
**देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च।**
**कुलान्यकुलतां यांति ब्राह्मणातिक्रमेण च॥**
**शिल्पेन व्यवहारेण नास्तिक्येन च कर्मणाम्।**
**कुलान्याशु विनश्यंति यानि हीनानि मंत्रतः॥ इति।**

**म. भा. अ. ३१४**

तात्पर्यम्—कुविवाहः, स्वधर्मत्यागः, परधर्माचरणं, दुराचारः, देवद्विजद्रव्यापहारः, नास्तिक्यमित्यादिदोषदुष्टानि कुलानि तूर्णं विनाशोन्मुखानि भवंतीति ज्ञेयम्। यैश्च कुलैः सदाचरणपूर्वकं वेदादिसद्विद्याभ्यासेन स्वीया तेजस्विनी वृत्तिः संरक्षिता। तान्येव जातिमंति कुलानि कुलीनताया मातृगृहतुल्यानि। तेभ्य एव कुलेभ्यो देशस्य वास्तवः समुद्धारो भवितेति ज्ञेयम्।

अस्मत्पूर्वजैः कुलीनताया महत्त्वं सम्यगवबुध्य स्वीयोत्तरसंततिः सुशीला सद्गुणवती च भूत्वा कुलस्य यशः संवर्धयिष्यति। सुमहत्कृत्यैः कुलस्य समाजस्य च समुत्कर्षं साधयिष्यतीति दृढभावनया स्वस्वकुलसंबंधिनः सद्गुणाः सदाचाराश्च यत्नेन परिपालिताः। अत एव विवाहादिधर्मकृत्येषु ते विशेषतः कुलीनताया दृष्टिं ददति स्म। राजानस्तेषु तेष्वधिकारेषु योग्यान् पुरुषान्नियोक्तु तेषां कुलान्यादौ परीक्षयामासुः। जगन्मंगलकराणि महांति कर्माणि कर्तुं समपेक्षितं सामर्थ्यं प्रशस्तकुलीनेष्वेव पुरुषेषु संभावयितुं शक्यम्। नेतरेषु क्षुद्रेषु मनुष्येषु। तदुक्तम्—

"एव युक्ता भारसहा भवंति महाकुलीना न तथाऽन्यमर्त्याः॥" इति।

सद्गुणोत्पत्तौ तेषा स्थैर्ये च सद्वृत्तमहाकुलसदृक्षं नान्यदुत्तमं क्षेत्र-मस्ति ।

वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसंख्या च गच्छंति कर्षंति च महद्यशः ॥

तथा—अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हनो हतः । इति ।

एतावताऽधुनातनाना कुलोत्कर्षसंबधिनो विचाराः कथं प्रामादिकाः संतीति ज्ञातु शक्येत । वित्तस्य वैपुल्य, प्रचुर क्षेत्रोद्यानादि, प्रशस्ता भूसंपत्ति., हर्म्यादीना पौष्कर्यमित्यादिना केनापि कुलस्य महत्त्वं कुलीनत्वं च न ससिध्यति । तच्च तच्च केवलं सच्छीलावलंबीति बोध्यम् । शीलहीनाना सा सपत् तत्कुलसलग्ना शूकरकीटपक्तिर्ज्ञेया । न तया संपदा शीलशून्याना तेषा कर्तृत्वादिक वर्धते । लेशतोऽप्यौदार्यस्याभावात् तया संपत्या जनसमूहस्य न कोऽप्युपकारः सिध्यति । धर्मकार्ये तस्या विनियोगो नैव जायते । तेन शीलहीनस्य तस्य मनःशरीरे पर ऱ्हसतः । तदीयसंपदः सदा दुर्विनियोगं दृष्ट्वा सा इतरैर्न विषह्यते । शीलवतः संपत्तिस्तु सद्विनि-योगतः स्वस्येतरेषा च चिरायोपकारका भवतीति सर्वैः सशिरःकंपं श्लाघ्यते । शीलवन्निकटे वित्तं यावदधिक स्यात्तावत्तस्य पुण्यकर्माणि परोपकृतौ चाधिक उपयोगो भवतीति कुलशीलयोः समा व्याप्तिरविच्छेदेन भाव्येत्यर्थादायाति । कुलोत्कर्षमिच्छद्भिर्मानवैः सजातीयप्रशस्यकुलैः सहोद्वा-हादयः संबंधा. कार्याः । हीनकुलानि दूरतस्त्याज्यानीति भगवान्मनुराह—

**उत्तमैरुत्तमैर्नित्यं संबंधानाचरेद्बुधः ।**
**निनीषुः कुलमुत्कर्षमधमानधमांस्त्यजेत् ॥ इति ।**

धनधान्यादिना समृद्धान्यपि विवाहसंबधे त्याज्यानि कुलानि तेनैव प्रदर्शितानि । यथा—

**हीनक्रियं निष्पुरुषं निच्छंदो लोमशार्शसम् ॥**
**क्षय्याऽऽमयाव्यपस्मारिश्वित्रिकुष्ठिकुलानि च ॥**

गर्भाधानादिशास्त्रविहितसंस्काररहित पुंस्त्वहीनं कन्याजन्मबहुलं वेदादि-सद्विद्याध्ययनशून्यमत्युल्बणमुखादिलोमयुतमर्शःक्षयसचारिरोगापस्माराश्वित्रकुष्ठादि-व्याधियुतं च कुलं सर्वथा त्याज्यम् । तथोक्तदोपरहितमपि हीनजातिकुलं त्याज्यमेव । तदुक्तम्—

**हीनजातिस्त्रियं मोहादुद्वहंतो द्विजातयः ।**
**कुलान्येव नयंत्याशु ससंतानानि शूद्रताम् ॥ इति ।**

सांप्रतं निकृष्टजातीयमनुष्येभ्यो महत्वप्रदानप्रथायाः प्राचुर्येण प्रवृत्त-त्वादानुवंशिकाः सद्‌गुणा यया संरक्ष्यते सा कुलीनता प्रायः परिलुप्ता दृश्यते सर्वत्र । जात्युच्छेदप्रवृत्तिस्तु कुलक्षयस्याद्योपायः । चिराय धर्मांतर-प्रविष्टाना शुद्धीकरणसौकर्यार्थं तैः साकं विवाहादिसबंधं कुर्वंतो मर्त्याः स्वात्मानं स्वीयकुलानि च भ्रंशयतीति बोध्यम् ।

रजोदर्शनात्प्राक् कन्यानामुद्वाहः कुलस्य पावित्र्यपरिरक्षणदृष्ट्याऽ-त्यंतमावश्यकः । यतो रजोदर्शनानंतर तासा मनस्सु वैषयिक-भावनाना प्रादुर्भावस्यापरिहार्यतया तेन तासा प्रीतिः कदा कुत्र संलग्ना स्यात्कमनर्थं कुर्यात्तद्वक्तुमशक्यमेव । तादृशाः कुप्रसगाः केषुचित्कुलेष्विदानीं परिदृश्यंत एव । तदुपेक्षणं सर्वथाऽनुचितमेव । न तत्साहसं विवेकिभिः कार्यम् । प्रौढविवाहोऽत्यंतं निंद्यः । घातकश्च ज्ञेयः । तथा सांप्रतिके समय उपजीविकायै यस्य कस्याप्यविहितस्य व्यवसायस्य चिराय स्वीकारो बाहुल्ये-नावलोक्यते । सोऽपि कुलसंरक्षणदृष्ट्या न हितावहः । आपद्धर्म इत्यंगी-कारेऽप्यापन्निरसनानंतरं विसृष्टश्चेदेव कुलस्य सरक्षण भवितुं शक्यम् । नान्यथेति ज्ञेयम् । एवमेवेदानीं सर्वत्र प्रसृमरं सहभोजनं सहपानं च (ग्यादरिंग) सामान्यजनचित्ताकर्षकमपि परिणामतः कुलस्य कुलीनतायाश्च विध्वंसकमेव । अत एवैकंकारचिकीर्षया धर्मभ्रष्टा महत्याऽऽरभव्या सहभोज-नादिकं दुराचारं समाजे पुरस्कुर्वंति । तेनेदानीमावश्यकमेव सहभोजना-दिकम् । न तेन कापि हानिर्भविष्यतीति बालाना बुद्धौ जातायां शनैर्भक्ष्या-

भक्ष्याविवेकोऽपि लुप्तो भवति । ततः शाकाहार एवास्माभिः कार्य इत्याऽऽग्रहः शिथिलः सन् मांसाद्यभक्ष्याशनं कर्तुं तेषा मनस' प्रवृत्तिर्जायते । ततस्तमोगुणस्यात्यंतमुद्रेकाद् बेटीव्यवहारेऽपि को दोषः ।

**न मांसभक्षणे दोषो न मद्ये न च मैथुने ।**
**प्रवृत्तिरेषा भूतानाम् ।**

इत्यनेन मनुवचनेन प्रदर्शितपश्चाचारमनुसृत्य सर्वथा शास्त्रनिषिध्दं व्युत्क्रमविवाहं कर्तुं बद्धपरिकरो भूत्वा नरकप्रदं संकरमात्मसात्कुरुते सहभोजनादिकर्ता मनुष्यकीटः । इदानींतनानां केषाचिन्महात्मशब्दाभिलप्याना पुसा प्रतिलोमसंकरांतर्गतैर्निसर्गत अस्पृश्यैः साकमित्थं तादात्म्याभिमानः परिदृश्यते । यद्धर्मतोऽस्यर्थमशक्यमुक्त्वा स्पृश्यताया निवारणं न सिध्येच्चेत्स धर्म एव विनष्टा भवत्विस्यद्धरहस्ते बालिशाः सर्वथाऽसभाव्यां प्रार्थना विदधतीति । केवलमस्पृश्यताया उत्सादनं भाव्यमित्येव न तेषामिच्छा । अपित्वय सनातनो धर्म एव भस्मसाद्भवत्विति दुराशा वर्तते । इयती तेषा मनुष्यापसदा मतिः प्रवृद्धतमसा भ्रष्टा संवृत्ता । यत्तया कुशलोदर्कस्यास्य धर्मस्य पवित्रतमं महत्वं लेशतोऽपि नावगम्यते । इत्थं निहीनबुद्धिमतो मर्त्यान् महात्मेति संबोधनं तस्योदात्तशब्दस्य परिहास एव । न केवलमस्यैवैकस्य शब्दस्यापि तु महर्षिराजर्षिपुण्यश्लोकप्रभृतीनामपि पूततमशब्दाना परिहासो दरीदृश्यते सांप्रतिके समाजे । किंतु तत्तच्छब्दबोध्यानां वस्तुतो महात्मादीना पुरुषश्रेष्ठानां वचस्सु धर्मादेर्नाशस्य प्रार्थना जात्वपि नावलोक्यते । धर्मादेर्नाशं प्रार्थयिता जंतुर्निसर्गतो धर्मादेर्द्वेष्टा एवेति निर्विचिकित्सं सिध्यति ।

तात्पर्यम्—कुलस्य कुलीनतायाश्च समुच्छेदकोऽयं सहपानाशनव्युत्क्रमोद्वाहप्रमुखो दुराचारः सर्वथा परिहर्तव्यो धर्माभिमानिभिर्भारतीयैर्मानवैरिति सर्वांतर्यामिणं भगवंतं संप्रार्थ्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

———

॥ श्रीः ॥

# ॥ अन्नादेर्विमर्शः ॥ (२६)

**अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठते ।**
**आदित्याज्जयते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥**

अथेदानीमस्य भारतवर्षस्य कीदृग् दुरवस्था सवृत्तेत्याबालवृद्धमनुभवतः सर्वेषां परिचितमेव । व्रीहिगोधूमयुगधरचणकतूवरादिधान्यजातं क्षीराज्यतैल-लवणशाकप्रभृतिभक्ष्यभोज्यपेयपदार्थजातं चात्यंत महर्घं संवृत्तम् । तादृश-मपि यल्लभ्यते तन्निःसत्वमेव । अतः सात्विकं पौष्टिकं चान्नं भृशं दुर्लभमिति किं पृथग् वक्तव्यमस्ति । किं च प्रायः सर्वत्र प्रज्वलितस्य युद्धाग्नेः प्रचंड-ज्वालाभिर्निःशेषं जगद् भर्जितं भवति । यथाकालं वृष्टिरपि दुर्लभा । तन्म-ध्ये ' गंडस्योपरि पिटकः संवृत्त ' इतिवत्सासर्गिकाणां ज्वरादिरोगाणा दुःसहमाक्रमणमित्यादिभिरापद्भिर्निरंतरा ग्रस्तं भारतं कांदिशीकं किंकर्त-व्यताविमूढं च जातमित्यत्र किमाश्चर्यम् ।

सर्वासामासामापदां निदानं तु स्वधर्मभ्रंशः सदाचारत्यागश्चेति शास्त्रं कथयति ।

**विहितस्याननुष्ठानान्निषिद्धस्य च सेवनात् ।**
**अनिग्रहाच्चेंद्रियाणां नरः पतनमृच्छति ॥**
**अनभ्यासात्स्वविद्यानामाचारस्य च वर्जनात् ।**
**आलस्यादन्नदोषाच्च मृत्युः सर्वान्जिघांसति ॥**

इति प्रचलितं युद्धं न धर्मयुद्धम् । किंत्वधर्मप्रवृत्तेर्दुष्परिणामोऽयम् । शुभाशुभकर्मणोः फले शुभाशुभ एवेति पारमेश्वरो नियमः । सम्यगन्नादि-प्राप्तिः शुभकर्मणः फलम् । अन्नोत्पत्तिरीश्वरप्रेरितपर्जन्यायत्ता । पर्जन्यःसत्कर्मा-धीनः । इत्येवमीश्वरनियमानुसार्येतद् बोध्यम् । ईश्वरदत्तस्यान्नस्य सद्विनियोग एव धर्मः सत्कर्म वा । असद्विनियोगस्त्वधर्मोऽसत्कर्मेति चोच्यते । यथाधिकारं

पंचमहायज्ञान् कृत्वाऽन्नाशनमयं तस्यान्नस्य सद्विनियोगः । तानकृत्वा स्तेन-वददनं त्वसद्विनियोगः पापमेव तत् ।

**" केवलाघो भवति केवलादी सत्यं ब्रवीमि वध इत्स तस्य । "**
**तैर्दत्तानप्रदायैभ्यो यो भुंक्ते स्तेन एव सः ।" इति श्रुतिस्मृत्योः ।**

इदानीं तु प्रायशः पापस्य चौर्यस्य च वर्धनेन दुर्भिक्षादिस्तस्य परिणामः सर्वैरेव भोक्तव्य इत्यापतितम् । अन्नानुसारिणी बुद्धिरिति भगवदुक्तेर्यादृश आहारस्तादृश्येव मनोवृत्तिर्जायते । सात्विकः पौष्टिकश्चाहारो भाव्य इत्यालोचितं चेदपि तादृशस्य तस्यास्मिन् समये दारिद्र्यादिनाऽत्यंत दौर्लभ्यं जातम् । जनताया दारिद्र्यं पाल्यपालककृतिभिः प्रकाममुपचीयते । त्रिंशच्चत्वारिंशद्वा वत्सरेभ्यः प्राग्यादृशं मौक्तिकादिक क्रयेण लब्धुं शक्यमासीत् । तादृशमिदानीं दुष्प्राप संवृत्तम् । द्विगुणितमपि मूल्य वितीर्य तत्सर्वं देशांतरे नीतम् । तत्स्थानं कल्चरसंज्ञिकेन मौक्तिकेनाक्रातम् । श्रीमतां सामंतादीनामपि च ललनानां कर्णनासिकाद्यवयवेषु कल्चरमौक्तिकं प्रतिष्ठितं दृश्यते ।

स्वर्णं तु पंचविंशतिं विहायाशीतिमुद्राभिः क्रय्यतोलकं जातम् । अतस्तेनाप्यस्म द्भारतवर्षाद्दूरे पलायितम् । तस्यासनं गिनीगोल्डेनाधिष्ठितम् । रजतस्यापीयमेव वार्ता । समधिकराजतांशमुद्राभिरन्यत्र गत्वा न्यूनतरतदंशरूप्यकैरत्रागमनं कृतम् । तदपि वैरल्येन । यतो राजसत्तया नियमितकागजखंडैरेव सर्वो व्यवहारो निष्प्रतिबंधं प्रचलति । ताम्रं पित्तलं कार्ष्णायसं चापि महर्घमत एव दुर्लभं वृत्तम् । जर्मनसिल्वर आल्युमिन रंगपात्राणामपि स एव पंथाः । कतिपयैरेवाहोभिः कुलालविरचितपात्रेष्वन्नादिकं पक्त्वाऽशनप्रसंगः प्राप्नुयाद्वा तन्न ज्ञायते । इत्थं समस्तापि संपदस्माद्भारतान्निःशेषं जिगमिषुर्दृश्यते । तथा व्रीह्यादिधान्यानां सारभागोऽपि यंत्रादिना ( गिरणी ) प्रक्षालितः प्रदग्धो वा भवति । तेनाम्बेमोहोर, जिर्गे, तामसाळ, प्रभृतीनां तंडुलानां चणकमुद्गतुवरसतीनकादिद्विदलानां गोधूमयावनालप्रभृतिधान्यस्य च यंत्रभर्जितपिष्टकृतभक्ष्यभोज्यपदार्थानां चास्वादो नैवानुभूयते । निर्दोषसत्वयुक्तस्नेहजनकानां तिलकौसुंभानां स्थानं भूमुद्गेनात्मसात्कृतम् ।

बुध्द्यायुर्वर्धकं सात्विक गोमातुर्दुग्धं घृतं च दुष्प्रापमेव। स्वभावतो जडं महिषीक्षीरं यद्यपि प्रचुरम्। अथापि तन्न सुविशुद्धं मिलति। यन्मूल्येन लभ्यते तन्नीरसमिश्रं निःसारम्। प्रचुरधनप्राप्तिर्जायत इति गावो वृषभाश्च कृतघ्नैर्नरपशुभिः सौनिकेभ्यो विक्रीयते। क्षेत्रादावपेक्षितं जलं यंत्रेणानीयते। पेट्रोलप्रयुक्ततूर्णगतिमद्यानस्य वैपुल्यतः प्राचीनानि स्वतंत्राणि वृषभयानानि नाम्नैवोर्वरितानि। प्रयोजनाभावात्तपस्विनो बलीवर्दाः सूनालयोन्मुखाः क्रियते नृशंसैः पुंभिः। केदारोपकारक तेषा गोमयादिकं निरर्थक दह्यते। तदभावात् केदारा निःसत्वा भवंति। तादृक्केदारोत्पन्नानि धान्यान्यपि तथैवोपलभ्यते। तादृग्धान्यनिष्पादितपदार्थाशनेनोत्पन्नानामुत्पत्स्यमानानां च मर्त्याना खपुष्पतुल्यैर्बुद्धिशौर्यधैर्यौदार्यादिगुणैः कुलस्य राष्ट्रस्य वा समुन्नतिः स्यादिति भावन मनोराज्यान्नातिरिच्यत इति ज्ञेयम्। यद्यपि महिष्यो गोवलीवर्दवन्न शस्त्रग्रस्ताः। तासा दुग्धं च न सात्विकम्। तथापि तद्घनं समधिकोत्तमघृतजनकं च विद्यते। किं तु राजाधिराजचहामाहाराजार्थं तस्य महिषीक्षीरस्य विनियोग आबालवृद्धमाविद्वदंगन च प्राचुर्येणाहर्निशं प्रचलति। तत्र घृतस्य वार्ताऽपि कुतः। चहाशर्करे प्रकाम महर्घे। अथाप्याचाडालवाटीमाच महाराजप्रासादं प्रतिदिन द्विवार त्रिवार चतुर्वार पचवारं तदधिक यथेच्छं वा स्वीयदर्शन पिपासुभ्यो वितीर्य नेत्ररोगक्षयउदरमधुमेहहृद्रोगबहुमूत्रादीनामचिकित्स्याना गदाना सुप्रसाद प्रददातिं स चहामहाराजः। तस्य सेवनाद्भवत्यप्येवमनर्थसार्थे तदासक्तिर्दिने दिने भृश वर्धत एवेति खेदास्पदं महच्चित्रम्। तदासक्तमानवोत्पन्नबालकैरपि बालग्रहापस्मारज्वरादिरोगस्यानुवांशिकः प्रसादो लभ्यत इति सुप्रसिद्धमेव।

विशुद्ध कृष्णातीरीय वेणुग्रामीय ततुवाटस्थ चात्युत्तम घृतम्। इत्येवमादीनि घृतप्रशस्तिपत्राणि (जाहिरात) दैनिकादिषु वृत्तपत्रेषु भूरीण्युपलभ्यंते। पर यत्र परिशुद्धस्य क्षीरस्यैवाभावस्तत्रोत्कृष्टं घृतं नाममात्रमिति ज्ञेयम्।

सांप्रत वनस्पतिविशेषादन्यस्माद्वा कस्माच्चित्पदार्थाद् यंत्राद्युपायेन विनिर्मितं प्रतिकृतिभूतं स्वल्पमूल्यः घृत सर्वत्र प्राचुर्येण प्रसृतं परिदृश्यते।

तस्मिन् घृते सुरभिरसुरभिर्वा कोऽपि गधो नायाति । तस्य वर्णस्त्वत्यंतं शुभ्रः । तस्मिन्नपूपादिपदार्थानां पाचनसमये लोहितो वर्णः प्राप्नोति । पुनरधः-स्थापिते शुभ्र एव । भक्षणसमये तस्य स्वादो हरिततृणवदुपलभ्यते । पाचन-काले गंधस्तु नारिकेलत्वग् ( करवंटी ) दाहोद्भुतगंधवदाच्छति । सदा घनीभावस्तस्य प्रकृतिः । वह्निसंयोगाद्द्रवीभूतमपि तूर्णं पूर्ववद्घनं जायते । भूमौ पतितास्तस्य बिंदवः पांडरदीपवर्तिका ( मेणबत्ती ) बिंदव इव धवलाः कठिनाश्च भवंति । तस्मिन् पाचिताः पदार्थाः कठिना रुचिशून्याश्चानुभूयते । पौष्टिकतागुणस्तस्मिन् घृते स्यान्न स्याद्वेति विवादः । किं तु सदा सेवनेनापकारो भवेदिति भाति । आस्तां नामेद यथा तथा । उपसंहारे प्रकृतं किंचिदनूद्य तत्र समासतो ब्रूमः ।

सांप्रत भारतीयकैदारकस्य गोवृषभादीना तदुलादिधान्याना मानुषाणा च निकृष्टावस्था संवृत्ताऽस्तीति प्रसिद्धमेव । अन्नमयः प्राण. प्राणायत्तश्च पराक्रमः । सात्विकस्य सतः पौष्टिकस्यान्नस्याभावे कुतो बलं कुतो वा पराक्रमः । अत इयं निकृष्टावस्था यथाऽपगता स्यात्तथा राष्ट्रधुरीणैस्तत्तत्समा-जाग्रेसरैश्च प्रयतितव्यम् । न चेत्सर्वथा ऱ्हाससमयो नैव दूर इति प्रतिभाति ।

सांप्रतमस्य राष्ट्रस्योन्नत्यर्थं सर्वत्र नैकविधाः प्रयत्नाः प्रचलंति । किं तु ते यत्ना ईशकृपया यदा यशस्विनो भवेयुस्तदैव सुप्रभातं बोध्यम् । ताव-त्सर्वैरेव यथाधिकारं यथासंभवं च भगवतश्चिंतनमाराधनं नामजपाद्यनुष्ठानं च वाङ्मनःकायैरवश्यं विधेयम् । यतो मानुषप्रयत्नेषु भगवदधिष्ठानमत्यावश्यकम् । तत्सिध्यर्थं सर्वैरेवादौ सादरं यतितव्यम् । तदैव कृताः प्रयत्नाः सफलाः स्युरित्यावेद्यालं कुर्म इति शम् ॥ श्रीः ॥

---

॥ श्रीः ॥

## ॥ दुराचारपरिणतिविमर्शः ॥ (२७)

दुराचारो मनुष्यो हि लोके भवति निंदितः।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥
मनुस्मृतिः।

अथ कयाचिदार्यकुलोत्पन्नया कुशिक्षितकुमार्या केनचिद्यवनयूना साकमुद्वाहः कृत इति प्राक् श्रुतम् । तथान्यया कयाचित् तादृश्यैव कुमार्यान्येन केनचिद्यवनतरुणेन सह लग्नं कृतमित्यपि श्रुतम् । एवं केनचिद्गाडवपुत्रेण पोलंडदेशीया युवतिरुद्वाहिता इदमपि श्रुतम् ।

एतादृशमुच्छास्त्रस्त्रीपुरुषसंबंधं प्रति विवाह इति कथनं तु तस्य पवित्रार्थकनाम्नो विडंबनमेव । तदपेक्षया ' निका ' इति कथनमेव वरम् । एतादृशो दुराचारः साप्रतं कुतो जायत इत्यस्य समालोचनसमयः प्राप्तोऽस्ति किल ।

भारतीयसनातनार्यधर्मे वर्णानामाश्रमाणा च विशिष्टाः सस्थाः सति । प्रत्येकेनापि भारतीयमानुषेण यथाधिकारं तासा धर्माः परिपालनीया इत्यपि निर्बंधो वर्तते । तदनुकूलाः सदाचारा अपि शाश्वतिका शास्त्रादावुपदिष्टाः समुल्लसंति ।

अद्ययावद्भारतीयनरनारीभिस्ते ते धर्माः सदाचाराश्च श्रद्धया यथायथ परिपालिताः। तदर्थं महाति कृच्छ्राण्यपि तैस्ताभिश्च सोढानि । प्रसंगविशेषे स्वीयप्राणा अपि विसर्जिताः । किं तु धर्मो न त्यक्तः । इत्थं तेषां तासां च स्वीयधर्मेऽत्युदात्तोऽभिमान आसीत् । यावनराज्यसमयेऽपि सत्तामदमत्तानां बलात्कारेण भीत्यांऽथप्रेम्णा वा कैश्चित्स्वधर्मं विसृज्य परधर्मो गत्यंतराभावात्स्वीकृतः । नेति न । किं तु तादृशान्युदाहरणानि भृश-

मल्पान्येवासन् । भारतीयबहुजनसमाजः स्वीयधर्मे दृढतरादर एवासीत् । अस्य मुख्यं निदानं तु समुज्ज्वलः स्वीयधर्माभिमान एव । तस्य जागृतिपूर्वकोपबृंहणं शतशः सत्पुरुषैः स्वीयाचरणेनोपदेशद्वारा च कृतम् । तेन धर्मपरिरक्षणं भारतीयार्यजनसमाजसंरक्षणं च संवृत्तम् । धर्मसंरक्षणकर्तॄणा महात्मना परंपरा श्रीमच्छंकराचार्यमारभ्य श्रीज्ञानेश्वरसमर्थरामदाससततुकारामप्रभृतिसत्पुरुषपर्यंतमाविच्छिन्नतया प्रवृत्ता बभूव । तस्याः सुदुपदेशेन विशुद्धाचरणेन च भारतीयजनता धर्मभ्रष्टतायाः प्रकामं परिरक्षिताऽऽसीत् ।

क्षत्रकुलचूडामणिना छत्रपतिना शिवरायेण यवनानुच्छिद्य स्वराज्य संस्थापितम् । तेन सनातनार्यधर्मः सुस्थिरमासन प्राप्तवान् । शिवरायो न केवल न्यायेन प्रजापालकः सम्राट् । अपि तु साधुपुरुषोऽप्यासीत् । तथा हि—

एकदा तस्य भटैर्यवनान्विजित्य प्रसभमुपायनत्वेनानीतामसाधारणलावण्यशालिनी यवनयुवतीं विलोक्य स्वीययोधान्निर्भर्त्स्य विकसितयौवनां ता सुदरी मातृकल्पेनोपचारेण सत्कृत्य सादर तस्याः पित्रालये ता प्राहिणोत् । अतस्तास्वनासक्तः शिवरायो नराकृतिर्भगः साक्षादिति विद्मः । अनेन परिशुद्धेन स्वीयाचरणेन स्वाः प्रजा. सम्यक् शिक्षितास्तेन महात्मनेत्येव कवल न । अपि तु सनातनार्यधर्मस्यात्युदात्तं प्रभुत्वं यवनेष्वपि तदानीतनेषु प्रास्थापयत्स पुरुषोत्तमः । तत्पुत्रेण संभाजीरायेणापि नृशंसेन यवनभूपेन प्रदत्तमतिभीषणं कष्टं विषह्यात्ते स्वप्राणोऽपि विसर्जितः । किं तु स्वधर्मो नैव परित्यक्तः । तेन श्रेष्ठोदाहरणेन सनातनधर्मावलंबिनो महाराष्ट्रीयवीरास्तेजस्विनीं स्फूर्तिं सप्राप्य स्वीयप्राणान्पणीकृत्य दुर्यवनैः साकं घोरतरं संग्रामं कृत्वा शिवरायेण संस्थापितं स्वराज्यं स्वातंत्र्यं च परिरक्षयांबभूवुर्यावनमाधिपत्यं च विध्वंसयाचक्रुः । इत्थं सनातनधर्माभिमानिना भारतीयवीराणामपराण्यपि बहून्युदात्तानि चरितानि विद्यंते । तेषु दिङ्मात्रमिदं प्रदर्शितमित्यवधेयम् ।

सनातनार्यधर्मसंबंधिनाः सदाचाराः प्रत्नानां राज्ञां जनतायाश्च मनसीत्थं सुस्थिरा आसन् । यत्तेषा मानसमसवर्णायां स्त्रियां कदाप्यासक्तं न भवति स्म। राज्ञो दुष्यंतस्य चित्तं यदा शकुंतलायां सस्पृहं संजातम् । तदा तेन, यतो मदीयमार्यं मनोऽस्या कुमार्यां साभिलापं बभूव । ततो नेयं विप्रकन्येत्यात्मविश्वास इत्थं प्रकटीकृतः —

असंशयं क्षत्रपरिग्रहक्षमा
यदार्यमस्यामभिलाषि मे मनः ।
सता हि संदेहपदेषु वस्तुषु
प्रमाणमंतःकरणप्रवृत्तय ॥

प्रश्नोत्तराभ्या च स आत्मविश्वासो यथार्थ एवेति निश्चयानंतरमेव—

**भव हृदय साभिलाषं संप्रति संदेहनिर्णयो जातः ।**
**आशंकसे यदग्निं तदिदं स्पर्शक्षमं रत्नम् ॥**

इत्युद्गारस्तन्मुखान्निर्गतः । इति ।

यथा विशुद्धप्रेमगगाया प्रवाहो विशुद्धजातिसागरमेव प्रविशेत् तथाविधैवातिनिर्मला सनातनार्यसंस्कृतिर्वर्तते । स्वीयपवित्राणि शरीराण्यपवित्रयवनादिस्पर्शदूषितानि मा भवंत्विति बह्वीभी रजपूतललनाभिरात्मदेहाः सानदमग्निसात्कृताः । इय प्राक्कालीना पावित्र्यभावना कुत्र । ऐदानींतनी चोच्छृखला यवनादिभिः साकं विप्रकुमार्या निकानिर्वर्तनस्य निरयगामिनी गर्ह्या प्रवृत्तिः कुत्रेत्यालोचयत सदसद्विवेकशालिना चित्तेन ।

मानुषाः सर्वे हस्तपादाद्यवयवैराहारनिद्रादिव्यवहारैश्च समाना यदि तर्हि तत्रायं 'बीचमे मेरा चांदभाई' इतिवत् प्रसभ प्रविष्टो जातिभेदः कीदृश इत्येवं कुशंकां केचन पामराः कुर्वंते । तैर्मानवेतरप्राणिषु मनाग्दृष्टिर्देयेत्युपदिश्यते। तथा हि—जरायुजाण्डजस्वेदजोद्भिज्जादिभेदैश्चत्वारः प्राणिवर्गा संति । तत्र जरायुजा मनुष्याः पशवश्च । अंडजाः पक्षिणः सर्पादयश्च । स्वेदजाः कृमिकीटादयश्च । उद्भिज्जा वृक्षलतागुल्मादयः । पशुषु ग्राम्या आ-

रण्या इति प्रकारो विद्यते । पतत्रिष्वपि विविधाः प्रकाराः संति । तथा सर्पादिष्वपि विद्यंते । लतासु फलपुष्पतरुषु वनस्पतिष्वपि नैकविधा अवांतरभेदा उपलभ्यंते । ते सर्वेऽपि प्रकारा औत्पत्तिका विश्वसृण्निर्मिता एव । तत्तत्प्रकारांतर्गतस्त्रीपुरुषसंबंधः परस्पर सजातीयेष्वेव जायते । न कदापि विजातीयेषु । सिंहो व्याघ्रीं नाभिलषति । श्वा मार्जार्यां न कामुको जायते । सैरिभो वडवायां न प्रेमाधो भवति । हंसो वरटायामेव गर्भमादधाति । बको बकीमेवान्वेषयति । चटकश्चटकायामेव सुरतमभ्यस्यति । करिणी रासभं न पतित्वेन वृणुते । शुकी काकं न भर्तारं मनुते । आम्रतरौ दाडिमानि नोत्पद्यंते । दाडिमीवृक्षाद्रंभाफलानि न लभ्यंते । रंभाया जंबीरं न प्राप्यते । तांबूलिका क्रमुकाश्लेष एव विशेषतः स्पृहावतीत्येवं सृष्टेर्नैसर्गिको नियमो विराजते । मानवेनापि स औत्पत्तिको नियमोऽवश्य परिपालयितव्यः । तस्यातिक्रमे तु भीषणा दुष्परिणामा भवेयुरेवेति पूर्वापरविमर्शेनाधिगत्य जात्वपि स पारंपरीको नैसर्गिकः सृष्टेर्नियमो मनुष्यमात्रेण नोल्लंघनीयः स्वीयकल्याणेच्छुना । तदर्थमेवेश्वरेण तस्मै विशिष्टा बुद्धिः प्रदत्ताऽस्ति । सा पश्वादिषु यद्यपि न वर्तते तथापि निसर्गसिद्धनियमपरिपालनक्षममौत्पात्तिकं ज्ञानं तेषु संस्थापितमेव । मानवेषु या बुद्धिरस्ति सा पशुगतौत्पत्तिकज्ञानस्य विकासात्मिकेति बोध्यम् । जन्मसिद्धज्ञानेन पशुभिर्यद्यदवगम्यते तत्सर्वं मानवेनाप्यधिगम्यत एव । किं तु तदपेक्षयाप्यधिकज्ञानार्थं सा विशिष्टा बुद्धिस्तस्मै प्रदत्ता विश्वसृजा ।

कोऽपि पश्वादिः प्राणी स्वीयपश्वादिजातिव्याप्यजातीयनरे नार्यां वा यत्सासारिकं प्रेम प्रकटयति । तज्जन्मसिद्धज्ञानप्रयुक्तमित्यवगंतव्यम् । तत्प्रयुक्तो निसर्गनियम. स मानुषेणाप्यवश्यं परिपालनीयः । वैपरीत्ये तु भगवद्दत्ताया विशिष्टबुद्धेर्दुरुपयोग एव । तेन पश्वपेक्षयापि हीनतरकोटिं गच्छति मानव इति ज्ञेयम् । सजातीययोरेव स्त्रीपुरुषयोरुद्वाहो भाव्य इति शास्त्रसिद्धो निसर्गनियमः । तं चापल्यादिनोल्लंघ्य तस्मिन् कृते के दुष्परिणामा जायंत इत्यस्याऽऽलोचनायामिदमादौ पुरतः समापतति । तत्तज्जातीयशरीरादेः स्वरूप, मुखाद्यवयवानां

रचना, तदनुसारि वर्तनमित्यादिषु किमपि पार्थक्यमस्तीति । विजातीय-विवाहेन तद्विपरीतमेव स्वरूपं जायमानं प्रायश उपलभ्यते । तत्स्वरूपं जनकयोः स्वरूपापेक्षया निकृष्टमेव दृश्यते । यथेदं शरीरादेर्नैकृष्टयम् । तथा बुध्यादीनामपि तद्बोध्यम् । एवं क्रमशोऽन्ते संतत्युत्पत्तेरेवाभावो भवतीत्ययं निसर्गसिद्धो नियम इति सृष्टितत्त्वसंशोधकानामाधुनिकविदुषां सिद्धांतः प्रसिद्ध एव । एवम्—

कुविवाहैः क्रियालोपैः स्वाचारस्य च वर्जनात् ।
कुलान्यकुलतां याति निषिद्धाचरणेन च ॥

इति मानवशास्त्रवचनमपि तत्र प्रमाणं विद्यते । इदं सर्वं समालोच्य सदसद्विवेकवता मानुषेण श्लाघ्यमाचरणं विधेयम् । न पश्वादिभिरप्यननुष्ठितमुच्छृंखलं निंद्यवर्तनं कार्यम् । तदर्थमेवात्मज्ञानवद्भिः प्रत्नैर्महात्मभिर्मानवजातेर्भव्याय वर्तननियमाः समुपदिष्टाः । ते मानुषमात्रेण यथाधिकारं परिपालनीयाः । तर्ह्येव तेषा प्रत्नानामृणादुत्तीर्णा भवंत्यग्रिमा मानुषाः ।

सजातीयेन साकमेवोद्वाहं विधातुं प्रत्येकस्य स्वीयजातेर्दृढतरोऽभिमानोऽपेक्षितः । तदर्थं शास्त्रोपदिष्टाः सदाचारास्तेन तेन पुंसा सावधानतयाऽनुष्ठेयाः । तेन क्रमशः प्रत्येकस्य समुन्नतिर्भूत्वा दुष्टपरिणतेर्विजातीयोद्वाहस्याभिलाषः स्वप्नेऽपि नोदेयात् । सजातीयोद्वाहादुत्पत्स्यमाना संततिः पित्रोराकारगुणस्वभावादियुतैव प्रायशः सभविष्यति । तेन ते ते वंशाश्चिराय स्थिरास्तिष्ठेयुः । समाजं प्रति च शाश्वतं स्वरूपमागमिष्यति । इत्थं सदाचरणस्य भव्यं स्वरूपमुल्लसति ।

**अनिंदितैः समुद्वाहैरनिंद्या भवति प्रजा ।**
**निंदितैर्निंदिता तस्मान्निंद्यान् दूरे विवर्जयेत् ॥ इति ।**

विजातीयोद्वाहप्रवृत्तेः प्रामुख्येन कारणत्रयं वर्तत इति भाति । तत्रैकं विवाहो नाम मिथः समय ( करार ) इति भ्रमः । द्वितीयं सर्वे मनुष्याः समाना एवेत्यवबोधः । तृतीयं तु कारणं सहशिक्षणं, सहभ्रमणं, सहाशन ( ग्यादरिंग ) मित्यादिकम् ।

अन्यान्यप्यवातराण्यनेकानि कारणानि संति । तानि नेहोच्यंते । विवेकिभिरनुभवेन ज्ञातुं शक्यानि तानि । विवाहो नामैकः करार इत्यतिवेलभ्रातभावनया कस्याश्चिदेकस्याः स्त्रियो विंशतिवत्सराभ्यंतरे एकोनविंशतिर्लग्नानि वृत्तानीत्युदाहरणमन्यदेशीयाना समाजे श्रुतम् । मन्ये तद्देशीया स्त्री नाम मिथः संकेतस्य [ कबुलायत ] भूमिर्नूनम् । कयं बत दुरवस्था तासामापतितेति मनागालोचयत ।

वस्तुतो नैवायमुद्वाहः करारः । अपि तु नितरां पवित्रः संस्कार इति शाश्वितभावनयोद्वाहे निर्वृत्ते स्त्रीभिरत्युन्नता पदवी यथा संप्राप्यते । तथाविधा चिरकालमारभ्याद्ययावदनुवृत्ता शास्त्रोपदिष्टा कल्याणोदर्का योजना भारतीयेष्वेवार्येषु वर्तते । नान्यत्र । इत्थं वास्तविक्यां स्थितौ सत्यां मत्सरांधैः कैश्चिदन्यदेशीयैर्भारतीयस्त्रीणा तत्समाजे भृशं हीना पदवी विद्यत इति विपर्यस्तः कोलाहल. कठशोषफलकः क्रियत इत्यहो मात्सर्यं तेपा मूढानाम् । अयमुद्वाहाख्यः पवित्रतमः संस्कारः सजातीयेष्वेव भाव्य इति नियमः समुन्नतपदवीप्राप्त्यर्थमेव समुपादिष्टः शास्त्रादौ । तदंतर्भूतास्तदुपकारकाश्च केचन दैनंदिनवर्तननियमा अपि प्रतिपादितास्तत्र । ते त्वन्नपानव्यवहारनियमा वेषभूषादयः, अप्रौढविवाह इत्यादयोऽवगतव्याः ।

शास्त्रविहितविशुद्धसंस्कारसंस्कृतस्य स्वालयीयान्नस्याऽऽहार आचारपूतसजातीयपंक्तावुपविश्यान्नग्रहणमित्यादयो भोजननियमाः शारीरमानसपावित्र्यदृष्ट्या उत्तमा इत्यत्र न कोऽपि संदेहः । अय च विजातीयोद्वाहादिकार्यं तिरस्कर्तुं तेषामतिशयेनोपयोगोऽप्यस्तीति ज्ञेयम् । ये विजातीयानामन्नादिकं नैव भुंजते । ते तैः साकं विवाहादिसंबंध त्रिधातु स्वप्नेऽप्युद्युक्ता न भवंति । निर्दिष्टानामन्नपानादिसदाचारनियमाना विलोपेन विवाहसंबंधिनियमा अपि दूर गता इत्यत्र किमाश्चर्यम् ।

आपणस्थितान्नालये ( हॉटेल ) केषामपि मानुषाणा पंक्तावुपविश्य केनापि पाचितं कस्मिन्नपि पात्रे केनापि परिवेषितमन्नादिकं निःशंकं

खादितुं प्रायः कस्यापि पराङ्मुख्यं नात्रलोक्यत इदानीं समये। पाचकः परिवेषिता च जात्या बहिरंतश्च निर्मल समलो वा। तदन्नमनुच्छिष्टमुच्छिष्ट-सपृक्त वा। यस्मिन्पात्रे तत्परिवेषितं तत्सम्यग् धौत किंवा कस्याप्यु-च्छिष्टेन लिप्तामित्यादेः कोऽपि विचारः प्रायः कस्यापि मनसि नोदेति। कदाचित्तत्र नैकविधाना रोगिणा सर्वथाऽस्पृश्यानां मानुषाणा तुंडसलग्नचहा-पानपात्रेषु (कप् बशा) बहुमूत्रहृद्रोगादिव्याध्युत्पादक जातिकुलभ्रंशकरं सर्वथा गर्ह्यं चाहापानादिकमनुष्ठातु कस्यापि काऽपि शका नोद्भवतीति श्रूयते। एतादृश दूषितमन्न पेय वा पातु भोक्तुं च यस्य पुसः स्त्रियो वा मनसि वांत-वत्तिरस्कारः समुत्पद्येत तस्य पुंसस्तस्याः स्त्रियो वा चित्ते यवनसदृक्षात्रिजातीय-मानुपेण साक लग्न कर्तुं गर्ह्योऽभिलाषः कथ प्रादुर्भवेत्। उपर्युक्तस्तिरस्कारो यासा चित्ते मूलत एव नास्ति ताभिरेव तादृशो धर्मनिषिद्धो लोकनिंद्यश्च शरीरसंबंधः क्रियन इति ज्ञेयम्। एतावता परिशुद्धान्नपानादिव्यवहारस्य किय-न्महत्वमस्तीति सलीलं बोध्दुं शक्येत विवेकिभिरिति। अशनपानादिसंबंधि-नियमाना परित्यागेन यथा जात्यभिमानो गलितो भवति। तथा वेषभूषादि-निर्बंधविसर्जनेनापि स तथाविधो जायते। भारतीययुवभिः साप्रतमंगीकृतेन चड्डील्यादिपरिधानवस्त्रखंडेन चंदनादितिलकशून्यभालस्थलेन चाऽऽर्यकुलो-त्पन्नेषु तेषु यवनादिभ्यः पार्थक्यं नोपलभ्यते।

स्त्रीभिरेतावत्कालं यावत् स्वीयवसनभूषणादीना मदभिमान मम्य-ग्विधृत आसीत्। किंत्विदानीं ताभिः शनैः परित्यक्तः स पारपरीकोऽभिमान इत्यतीव खेदास्पदमिदम्। भारतीयस्त्रीणा बसनभूषणादिवेषः स्त्रीजातेरनु-कूलोऽस्ति। स तासामतीव शोभते। तस्मिन्ननुत्तमा रीतिर्निवेद्यते। अर्थपूर्णोऽ-प्यस्ति सः। येन निंद्यरोगेणान्यदेशीया भृशं ग्रस्ता श्रूयंते। येन हेतुना तैस्तद्देशीयाः स्त्रियो विसदृशपुरुषवेषीयाः कृतास्तस्य रोगस्य किंचिदपि स्पर्शो भारतीयनारीणा माभूत्। भारतीयमहिलाभिः स्वीयवेषभूषादिकं परित्यक्तं चेदिद जगदेकस्मादभ्यर्हिततत्त्वाच्चिराय वचिनं भविष्यति। अस्मिञ्जगत्येकं भारतं वर्षमेव नितरा संस्कृतं स्थानं वर्तते। यत्र स्त्रीभिः कीदृशो वेषो धार्य

इत्यस्यात्युत्तमं दृश्य प्रत्यक्षमुपलभ्यंत । देशांतरीयस्त्रीणां सायंकालीनो वेषः प्रकाम ह्रीनरुचेरुद्दीपकः । तज्जनकाः पुरुषा एव । तस्मादेव तत्र प्रागुक्तमुच्छृंखलत्व स्वैर नरीनर्ति । पुंभिः सहशिक्षणस्य यः पुरस्कारः कैश्चिदविवेकिभिः पुरुषापसदैः क्रियते स द्वयोरपि पुरुषत्वाभासहेतुरनर्थोत्पादकश्चास्तीति भारतीयनारीभिः कदापि न विस्मर्तव्यम् । अय सहशिक्षणपुरस्कारस्तु सदसद्विवेक्यभिमानधारिण' पाश्चात्यविदुषो निरर्गलमुखान्निसृतो जल्पोऽत्रत्यैः कैश्चिदनुज्ञाप्यत अधानुसरणकृद्भिरित्यवगंतव्यम् । एतावता, अशनपानादिसंबंधिनो सदाचारा यथा परिपालनीयास्तथा वेषभूषादिसंबंधिनोऽप्याचाराः सर्वे' संरक्षणीयाः कुशलेच्छुभिरिति ज्ञेयम् ।

प्रौढायाः कुमार्या उद्वाहो निरर्गलः स्वयंवरश्चेत्येताभ्यां बहवोऽनर्थाः प्रभवंति । साप्रत राजकीयनियम ( कायदा ) प्रतिबंधाच्चतुर्दशवत्सरेभ्यः प्राग्यद्यपि कुमारीणां विवाहः कर्तुं न पार्यते । अथापि तदूर्ध्वं तस्मिन्नुपेक्षा पालकानामनिष्टकारिणीत्यवगंतव्यम् । तेषामुच्छास्त्रौदासीन्येन विवाहसंस्कारस्य पावित्र्यं निरस्त भवति । अन्येऽपि दोषाः प्रादुर्भवंति । सहशिक्षणमप्यनिष्टमेव । कुमारीणा शिक्षणे पार्थक्यमिष्ट चेत्तत्र सहशिक्षणस्यावसर एव न विद्यते । सत्येवमियं सहशिक्षणस्यानर्थकारिणी रीतिः कुतो नोच्छिद्यते ।

स्त्रीणां कदाचिद् भ्रमणमावश्यकमपि ताभिः पुरुषैः साकमेव गंतव्यमिति न नियमः । पुंभिः सह गमने का केन साक कथं गच्छतीति ज्ञातुमशक्यप्रायम् । तेन तु मर्यादातिक्रमस्य प्रसंगः प्रादुर्भवति । निर्दिष्टानां सदाचाराणा प्रत्याख्यानेनैव विजातीयोद्वाहस्य प्रसक्तिरापतिता । तस्मिन् कापि गर्ह्यता कस्यापि न प्रतिभातीत्यहो दैवदुर्विलासो भारतीयानामस्माकम् । मृषा समत्वभावनाया अयं दुष्परिणामो ज्ञेयः । समता तु सर्वभूतस्थिते आत्मन्यस्ति । न शरीरे । तत्र भिन्नतैव वर्तते । साऽवश्यं परिपालनीया । नैव चापलान्नरकप्रदसांकर्यदोषदूषिता कर्तव्या । निसर्गसिद्धः शरीरादेर्भेदः शुभाशुभकर्माध्यक्षेश्वरप्रणीत एव । स केनाप्युच्छेत्तुमशक्य इति समर्थश्रीरामदासप्रभृतयो महात्मानः कथयंति । तदतिक्रमेण तस्य न्यूनता न स्यादित्येव न । अपि तु प्रकाममभिवृद्धिरेव स्यादित्यवधेयम ।

सर्वत्रैक एवात्मा विद्यत इति दृढानुभव एव समताशब्दस्यार्थः। सर्वाणि शरीराणि समानीति मत नितातभ्रम एव। यतस्तेषु निसर्गतो वैषम्यं वर्तते। तथा हि विभिन्नं शोणितादिकम्। विभिन्ना जातिः। विभिन्नो धर्मः। विभिन्नं वर्तनम। विभिन्नो देशः। विभिन्ना भाषा। विभिन्नो वेषः। विभिन्नं मनः। विभिन्नमशनं पानं चेत्यादिभिस्तत्तद्देहेषु वैचित्र्यं प्रत्यक्षमुपलभ्यते। नैसर्गिकं तदुच्छेत्तुं प्रवृत्तिर्विफलाऽनिष्टा च। अतः प्राकृतिकं तद्वैषम्यं यथायथ परिपाल्यमेव। तदर्थं किल तत्तद्वर्णस्य तत्तज्जातेश्च वर्तननियमाः पृथक् पृथगाचाराश्च शास्त्रकृद्भिर्महात्मभिरुपदिष्टाः। तेषु परित्यक्तेषु विजातीयविवाहादौ तत्परिणामो भूत्वाऽन्ते संकरः पर्यवस्यति। तस्य तु फलं नरकः प्रसिद्ध एव। ऐदानींतनया भाषया तु नरको नाम समाजनाशः। स कथं भवतीत्येतत्प्रागुपपादितमेव।

अतः समाजस्थैर्याय स्वीयस्वीयाऽऽचाराणां परिरक्षणमावश्यकमेव। तास्मिन् किमस्ति। एतस्मिन् को विशेषो वर्तते। तेन किमिष्टं स्यात्। एतेन वा कोऽनर्थः प्रसज्येत्। इत्येवं तात्कालिकसुखाभासे दृष्टिं दत्वा शुष्कः प्रलापो न कर्तव्यः। तत्तत्सदाचारपरित्यागस्य शनैः शनैर्भवितारं दुष्परिणामं विवेकेनालोच्य यथा तस्य हानिर्न स्यात्तथा सर्वैर्जागरूकैर्भवितव्यम्। एकवार वर्णजातिसंकरो जातश्चेद्भारतीयसमाजानां पुनः पूर्ववत् सुस्थितिरत्यंत कष्टसाध्येति निश्चितमवधेयम्।

धार्मिकाचारनियमसंरक्षणार्थं धर्मगुरूणां धार्मिकी सत्ताऽवश्यमंगीकर्तव्या। लोका मन्वत इत्येतस्मादेव हेतो राजसत्ता स्थिरा तिष्ठति। यथा राजसत्ता भीत्या मन्वते तथा धर्मसत्ता श्रद्धया मतव्या। पारलौकिकभीत्या वा सा स्वीकार्या। तेन व्यक्तेः समाजस्य च कुशलमेव भविष्यति।

उपसंहार उपक्रमोपन्यस्तवद्विजातीयसंसर्गो भारतीयार्यधर्माभिमानिनां माभवत्वित्यातरिकी मनीषा स्याच्चेत्तत्रायमेव संरक्षकोपाय इति निश्चित्य तथा सर्वैः प्रयतितव्यमित्यावेद्यालं कुर्म इति शम्॥ श्रीः॥

---

॥ श्रीः ॥

# । आर्यस्त्रीणां शिक्षणविवाहयोर्विमर्शः ॥ (२८)

स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।
स्वं च धर्मं प्रयत्नेन स्त्रियं रक्षन् हि रक्षति ॥
सूक्ष्मेभ्योऽपि प्रसंगेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥

म. स्मृ.

अथेदानीं स्त्रीणां शिक्षणस्य प्रौढोद्वाहस्य च प्रशंसा सर्वत्र सर्वैः क्रियते । किं तु पुरुषस्यार्धांगं स्त्री । तदुक्तम्—

द्विधा कृत्वाऽऽत्मनो देहमर्धेन पुरुषोऽभवत् ।
अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः ॥ इति ।

म. स्मृ.

अत एव धर्मादिचतुर्विधपुरुषार्थसिध्यर्थं स्त्रियः सहाय्यमवश्यमपेक्षितम् । परमाधुनिकशिक्षणेन पुरुषा यथा संशयवादिनः संवृत्तास्तथा नेन स्त्रियोऽपि जाताश्चेद् गृहसौख्य दत्तजलाजल्येव भविष्यति । सनातनार्यसंस्कृतौ न केवलं कामसतर्पण विवाहस्योद्देश्यम् । अपि तु सुप्रजोत्पत्त्यादिकम् । तदुक्तम्—

अपत्य धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितृणामात्मनश्च ह ॥ इति ।

म. स्मृ.

कन्याया विवाहो नाम स्वसजातीयान्यवशेन सह तस्याः संमेलनकृद्वैदिकः संस्कारविशेषः । स चाप्रौढावस्थाया जातश्चेदेव यथाविधि संमेलनं भवितुं शक्यम् । यतः स्त्रीरियं जननी । अर्थाज्जन्मभूमिर्विद्यते । तया भूम्या पवित्रतमया भाव्यम् । निर्मलाया भुवि विशुद्धबीजावापः । तत्र

सदाचारस्योपकरणम् । सुविचाराणां वृष्टिः । एतेषा योगश्चेन्निराबाधं सुप्रजोत्पत्तिर्भविष्यति। सांप्रतं व्याप्यजातावपि कन्योद्वाहप्रथा प्रवृत्ता परिदृश्यते। किं तु तासा व्याप्यजातीनां स्वभावस्य वर्तननियमानां बुध्यादेश्च पार्थक्यं स्वाभाविकम् ।

स्वभावस्य च दुरतिक्रमत्वात्तत्परिवर्तनमशक्यप्रायम् । अभिजातसंबधमतेरण सुप्रजोत्पत्तिर्भवितुमशक्या । साप्रतमन्यदेशीयानां नीतयो वर्तनक्रमाश्च महता संरंभेण सर्वैरनुस्त्रियंते। स्त्रियो हि स्वभावतोऽधिकभावनायुता अनुकरणशीलाश्च सन्ति । तासा शिक्षणं प्रकाम गंभीरोऽयं प्रश्नः। तच्छिक्षणातर्गतं सम्यगसंम्यग्विचारैकमूलकं किल भाविन्याः संततेः पावित्र्यं चारित्र्य कुलीनत्वं च वर्तते । सत्येवं तासा शिक्षका धर्मविषये न केवलमुदासीना अपि तु तद्विरोधिनश्चेत्कथ तद्दत्तशिक्षणेन ताः शीलवत्यो भवेयुः। कथं च तासा सततिः सुचरित्रा स्यात्तन्न जानीमः । अस्य स्त्रीशिक्षणस्योद्गमस्तावद्गतभर्तृका आधुनिकरीत्या शिक्षिताश्चेत्सलीलमेव विधवाविवाहस्य जनताया प्रसारः स्यादिति कुविमर्शतरंगिणीतः संवृत्तः । तत्रेद बोध्यम् । अथ विधवोद्वाहविषयकः प्रश्नो ब्रह्मक्षत्रस्त्र्युद्देश्यक एव वक्तव्यः। तासामेव हि स्त्रीणामाचारतः शीलतश्च सर्वथा परिरक्षणप्रयत्नः प्राक्कालादारभ्याद्ययावत्प्रामुख्येन प्रचलति । किमस्य निदानं तदविकृतेन मनसा किंचिदालोचयत। तथा हि– स्वधर्माय स्वदेशाय शीलाय स्वसंस्कृतये स्वातत्र्याय च स्वात्मनो बलिदानं कुर्वतः पुरुषश्रेष्ठा एताभ्यामेव ब्रह्मक्षत्रवर्णाभ्यामधिक प्रादुर्भूताः । एतद्वर्णद्वयातर्गतस्त्रीभिराचारतः शीलतश्च स्त्रीयं पावित्र्यं जागरूकतया सरक्षितमिदमेव तत्र बीजम् । यैः शास्त्रकृद्भिः स्त्रीणामतिशयेन धर्मनिर्बंधाः कथितास्त ऋषयो निर्दयाः सारासारविवेकशून्याः स्त्रीद्वेष्टारो नूनं नासन् । स्त्रीणा जनिभूमित्वात् क्षेत्रदृष्ट्या तासा पावित्र्यम त्यावश्यकम् । सुक्षेत्रे ह्युप्तं बीजमनुकूलपरिस्थित्योच्चतमाकुरभावं धत्त इति प्रसिद्धम् । देशांतरेऽप्युच्चकुले स्त्रीणां पुनर्विवाहो न प्रशस्यत इति श्रूयते । सत्येवं सुधारणामिषेण विशेषतो धर्मज्ञानरहिताना स्त्रीणां पुरत इमं पुनर्विवाह-

प्रश्नमुपस्थाप्य तेन चलचित्ताना तासां मनसि सनातनार्यसंस्कृतेर्विघातिनीं प्रेरणामुत्पादयितुं स्वैरं प्रयतन राष्ट्रस्य दुरदृष्टमेव नूनम्। दयातत्वे शुष्कं भर दत्वा कैश्चित्सुधारकंमन्यैरुपस्थापितस्य क्षुद्रस्य पुनर्विवाहप्रश्नस्येदानींतनशिक्षणाशिक्षिताना स्त्रीणा मनसि जातसंस्कारेण व्यक्तिस्वातंत्र्यस्य विपर्यस्ताः कल्पनाश्चित्ते कृत्वा कतिपयाभिस्ताभिरयं प्रश्नः स्त्रीसमाजे पुरस्कृतोऽस्ति। अथापि यथार्थाऽऽर्यसंस्कृतिसंपन्नाः शीलवत्यः सत्कुलीना स्त्रियः प्रश्नस्यास्य छायामपि मनसा नैव स्पृशंतीति बोध्यम्। आर्याणा यः शास्त्रविहितः समुद्वाहसंस्कारः स न केवलं पाश्चात्यदेशीयाभ्यर्हितध्येयशून्यविवाहवद्व्यावहारिकः संबंधः। किंत्वाध्यात्मिकं ध्येयं पुरस्कृत्य धर्मार्थं यथाशास्त्रं सयोजितः कदापि केनाप्यनुल्लंघनीयः पूततमः संबंधः। अस्मिन्नुद्वाहे कन्याया यथाविधि दानमनुष्ठीयत इति न विस्मर्तव्यं केनापि भारतीयाभिमानिना। अद्य स्वय पतिरन्वेषणीयः। श्वो विवाहः कार्यः। परश्वो राजसभाया घटस्फोटसंबंधी व्यवहारः कार्यः। ततस्तूर्ण पत्यंतरं विधेयम्। इत्येवं वैलायत्यं गर्ह्यं चांचल्यमार्याणामुद्वाहे जात्वपि नैवास्ति। इयमन्यदेशीया रीतिरनुकरणीयेति येषां मतिस्तैर्विवाहस्य तत्प्रतिपादकशास्त्रस्य च चिकित्सा कुतः कर्तव्या। आधुनिकाना बुद्धिस्तु व्यक्तेर्वैषयिकं सुखादिकमालोच्य तदनुकूलशास्त्रार्थस्य ग्राह्यत्वं मन्वाना विद्यते। दारिद्र्यमल्पायुष्ट्वमित्योभिर्निमित्तैर्गतभर्तृकाणा संख्या प्रत्यहं वर्धत इति दृष्ट्वा ताभिः पुनर्विवाहः कार्य इत्येते ब्रुवंति। तेन समाजे स्वास्थ्यं स्यादिति तेषां कल्पनाः संति। परं व्यावहारिकदृष्ट्या समालोचितेऽप्यस्मिन् विषये सांप्रतं कुमारिकाणामेवोचितवरलाभो दुर्लभः संवृत्तः। तत्र गतभर्तृकाणां प्रवेशश्चेत् समाजस्वास्थ्यं कीदृशं कियच्च स्यात् तच्चिंत्यमेव। यस्या विषयवासना दुर्निवारा भवेत्सैवैकोच्छास्त्रं कर्म कर्तुं प्रवर्तेत। निरर्गलं सार्वत्रिक्यनुमतिश्चेत्तत्सर्वा एव गतभर्तृका पुनर्विवाहं कर्तुं प्रवृत्ता भवेयुः। तथा सति कुमारिकाणा प्रकाम दुरवस्था स्यात्। इदानीमपि तासा प्रौढावस्थया प्रतिगृहं कीदृशी दुःस्थितिर्दरीदृश्यते तदवलोक्यत। योग्यसमये विवाहस्याजातत्वात् काश्चन कुमारिका अंत-

शिंचताजर्जरिताः सत्यो भृशं कृशा निस्तेजस्काश्च भवंति । प्रमाणातीतप्रौढावस्थां गतानां कासांचिदुचितं पतिकुलं न लभ्यते । काश्चनापस्मारग्रस्ताः संदृश्यंते । राजयक्ष्मव्याप्ता अपि काश्चनोपलभ्यंते । इत्थं कुमारिकाणा दुरवस्थया क्वचिदात्महत्यायामपि पर्यवसानं भवति । अथापि शिक्षणेन स्त्रीसमाजस्य प्रगतिरेवास्तीति मुक्तकंठमुद्घोषयंतीति महदाश्चर्यमेतत् । यथा पुंसा तथा स्त्रीणां शिक्षणमावश्यकमित्यत्र न विवादः । किं तु तयोः शारीररचनाया मनोभावनाया कर्तव्यकर्मणि च निसर्गतो महदंतरस्य सत्वात्प्रदेयं शिक्षणमपि पृथगेवापेक्षितम् । यस्य यत्स्वभावतः कर्तव्यं तस्मै तस्यैव शिक्षणं दातव्यम् । परमिदानीं कुमाराणां कुमारीणा चैकस्मिन्नेव शिक्षणचक्रे निक्षिप्य भृश पेषणस्योपक्रम सवेग प्रवृत्तः । स किं भव्यो विद्यते । विदेशीयस्त्रीशिक्षणस्य वर्तनक्रमस्य च पद्धतिरस्मद्देशे चिराय स्थिता चेद् गृहराज्याधिकारं विहाय तद्बाह्यैनैकविधोद्यमेषु स्वस्य घनिष्ठः संबधो भाव्य इति भावनया तथा प्रयत्नान् विदध्यु. । ततोऽशनपानादिकं सर्वं बहिरेवेति हौणी रीतिरत्र सर्वशः प्रवर्तेत । तस्मादार्यसंस्कृतिमनुसृत्यैव स्वीयप्रयत्ना भाव्याः । स्त्रीपुरुषयोर्मनस्यव्यभिचरितमैकातिकं सात्विकं प्रेम बालविवाहमंतरेण भवितुमशक्यम् । प्रेम्ण उद्गमात्प्राक् संजातोद्वाहसंस्कारेण तयोः सर्वास्वनुकूलप्रतिकूलास्ववस्थासु साहचर्येण यावज्जीवमवस्थानं चेदेव विशुद्धं प्रेम तयोर्मनसि चिराय स्थास्यति । एतादृशं परिपूतं प्रेमान्न्यस्मि कस्मिन्नपि विवाहे द्रष्टुमशक्यम् । पित्रोर्विशुद्धप्रेमच्छायायां संवर्धितानां कुमारकुमारिकाणा मनस्सु बालविवाहेन तादृशप्रेमोद्गमो भवितुं शक्यः । व्यक्तेः समाजस्य वा हितदृष्ट्या विमृष्टं चेदपि बालविवाहं विहायान्यस्यां विवाहपरिपाट्यां प्रकृतं प्रेम जनितुमशक्यम् । अतः स्वजात्यनुसारतो यं कमप्युद्यमं कुर्वतो मानुषस्य बालविवाह, अर्थादप्रौढविवाहः स्वैरवृत्तेः प्रतिबंधकत्वात् स्वीययत्नत उपजीविका विधातुं प्ररोचकत्वात् सात्विकसुखानुभावकत्वाद्धर्म्यत्वाच्च सर्वथा श्रेयस्कर इत्यवगंतव्यम् । सत्येवं ये दुराग्रहिणः स्वार्थैकदृष्टयः समाजसुव्यवस्थाविघातकवैषयिकसुखलिप्साक्रांतस्वांतास्त

एवास्य शास्त्रोपदिष्टस्य पावनस्य विवाहस्य प्रतिकूलाः। शास्त्रकृद्भिः प्रेक्षावद्भिर्यद्ध्येयमुद्दिश्य वर्तननियमाः समुपदिष्टास्तदत्युत्तमं ध्येयमाकलितुमसमर्थानां सत्संप्रदायसंस्पर्शरहिताना वैदिकधर्मरहस्याधिगमो भवितुमशक्य इत्यत्र किमाश्चर्यम्।

अस्याध्यात्मिक ध्येय तत्प्राप्ते साधनानि चेत्यादिकं सर्वं यथार्थं श्रेयस्करमिति विज्ञातुं परलोकपुनर्जन्मशुभाशुभकर्मफलतद्दातृदेवतेत्यादिष्वलौकिकेषु वस्तुषु तत्वतो विश्वास आवश्यकः। उक्तेष्वेतेषु विश्वस्य स्त्रीशिक्षणतद्विवाहयोर्विमर्शं कर्तुं य इच्छेयुस्तानुद्दिश्यैवायं प्रकृतविषयस्य विचार प्रवृत्त इत्यवधेयम। निसर्गक्रमेण भोग्यपदार्थाः क्रमेण प्रकामं वर्धने। तेषां भोक्तारस्तु तानुपभोक्तुमक्षमा जायंते। एतस्यामवस्थाया दुरदृष्टतोऽनिष्टापातश्चोद्विवेकपूर्वक धैर्यमवलंब्य सन्मार्गेण जीवन यापयितु सनातनाऽऽर्यधर्मः कथयति।

सुधारकास्तु पुनर्विवाहेन गतभर्तृकाः सुखाब्धौ हठात् पातितुमिच्छंति। तदर्थं तासां शिक्षणादिष्वनेकविधः प्रयत्नस्तैः क्रियते। किंत्वनेन तेषा प्रयत्नेनार्यस्त्रीणा चित्ते चिराय कृतपदो वास्तविकः स्त्रीधर्मो विनष्टो भवतीति तैर्न ज्ञायते। अथवा ज्ञात्वाऽपि स्वयं नष्टेति न्यायावलंबिनस्त इत्यपि वक्तुं नाशक्यम्। आर्यस्त्री न केवलं तृतीयपुरुषार्थसिध्यर्थमिति भ्रमितव्यम्। अपि तु जनिमागतेन पुंसा नियत संपादनीपुरुषार्थचतुष्टयसिध्यै सहाय्यभूता विधिनागीकृता धर्मपत्नी सा वर्तते। इत्थभूतायास्तस्याः शास्त्रीयं धर्मपत्नीत्व शास्त्रनिषिद्धेन कामैकमूलकेन गर्ह्येण पुनर्विवाहेन विनष्टं चेत्कथं सुप्रजोत्पद्येत कथं वाऽऽर्यस्त्रीधर्मा अव्यवस्थिता न स्युः। स्त्रीभ्यो विभिन्नावयवधारिणो ये ते पुरुषा इत्याभिधीयंते लोके। किं तु वास्तवपौरुषोपेतः पुमान् कश्चिदेव। स्त्रीत्वमपि तथा स्याच्चेन्नमोऽस्त्वस्यै सुधारणायै। किमन्यद्वक्तव्यम्।

योग्यसमये यथाविधिसंजातोद्वाहानतर सदाचरणपूर्वकं पत्यैकनिष्ठतया काल याप्य गर्भधारणं सुप्रजानिर्मितिस्तस्याः परिपालनं सा यथा शालिसंपन्ना

स्वकुलोन्नयने च समर्था भवेत् तथा तन्मनसि सुविचारबीजारोपणमित्यादि-सत्कृत्येष्वार्यस्त्रीणा स्त्रीत्वं संचितमस्ति। सत्येवमबलोन्नतिरिति कर्णमात्रमधुर-नाम्ना देशोद्धाराय सहाय्यभूताभिस्ताभिर्भाव्यमिति वितथाग्रहेणाबलाः सबलाः कर्तुमनैसर्गिको व्यापारः कैश्चित्क्रियते। पर तत्रेद नावगम्यते तैः। यत् पुरुषाणा मध्येऽल्पसंख्याकाः पुरुषा यथार्थपौरुषेण वर्तेयुश्चेन्न केवलं स्वदेशस्यापि तु भूगोलस्यापि राज्यं संपादयितुं शक्नुयुः। किंत्वस्माकं दुरदृष्ट-मित्यं वर्तते। यत् पुरुषेभ्यः पुरुषत्वस्य शिक्षणप्रदानमत्यंतं दूरमेव। ते तु यत्किंचित्सामान्यध्वनिनापि यथा भीता स्युस्तथा दुर्बलाः पापिनः पितरः सजाताः। एतत्साक्षात्कृत्याप्यबलाः सबला कर्तुं महताऽऽडंबरेणोपक्रान्तान् विसंवादिनो व्यापारान् दृष्ट्वा किं हसितव्यं वा रुदितव्यं तन्न जानीमः। अद्य या कामपि तरुणीं "त्वं किं भवितुमिच्छसी" ति पृष्टे सा "ब्यारिस्टर, एग्लरडाक्तरान्यतमा भवितुमिच्छामीत्युत्तरयति। वंदनीयार्यपुत्रस्य जननी भवानीति भवितुमिच्छामीति कापि न ब्रूते। प्रकाम स्वैरं वर्तनं सर्वत्र प्रसृतं सदवनत्याश्चरमसोपाने पदं निक्षेप्तुं स्पृहा प्रदर्शयतीत्येताद्धितकरं किं तद्वि-चारयत। शास्त्रवचनेषु सता वाक्येषु च पदाघातः कस्यापि कदापि न कल्याणप्रद एतन्न विस्मर्तुं योग्यम्। तानि प्रमाणवचांसि संसारः सर्वथा त्याज्य इति नोपादिशंति। अभ्युदयनिश्रेयसोः सिद्धिर्यथा स्यात्तथा संसारे स्थित्वैव वर्तनं विधेयमित्युपदिशंति। आमहाराजमाचाकिंचनं सर्वेष्वपीष्टानिं-ष्टप्रसंगः प्राप्नोत्येव। तत्र "अभद्रादपि भद्रम्" इति रीत्या विवेकधैर्ययो-र्बलेन तस्य सदुपयोगः करणीयः। प्रारब्धवशतः प्राप्तं संकटं विषह्य पारमा-र्थिक ध्येयं यथा सान्निहितं भवेत्तथा प्रयतनमेवास्माकं भारतीयानामार्याणामु-चितम्। एको मृतश्चेद्द्वितीयः सोऽपि दिवंगतश्चेत्तृतीय एतादृशं पांसुलत्वापादकं दुर्विवाहं कर्तुमिच्छा प्रेरणा वा धर्म्या समाजस्वास्थ्यकरी चेति कदापि भवितुं नार्हति। पशुत्व एतादृश्या च वृत्तौ किमतरम्। तर्हि किं दुःस्थितावेवावस्था-तव्य, सुस्थितसमूहे कदापि न। यो ह्यनाथविधवागृहाणि निर्माय तेषु गृहेषु ताः प्रति विषयकर्दमे नियोक्तुं वित्तव्ययो जायते। तादृशमशुभं द्रव्यव्ययमविधाय

सुशिक्षणेन ता आदर्शभूताऽऽर्यस्त्रियः कृत्वा ताभिरार्यस्त्रीधर्मसेवां कारयितुं तस्य वित्तस्योपयोगः कर्तव्यः ।

सुशीलानामार्यस्त्रीणा पंक्तावस्मानुपवेशयत । इत्येवं दुराग्रहस्ताभिर्नैव कर्तव्यः । शास्त्रेणेत्थ सुव्यवस्थायां कृतायां सत्यां सनातनार्यसंस्कृतेर्विघातिनी पशुगर्ह्या प्रवृत्तिः कस्मात्कर्तव्याऽऽर्यधर्माभिमानिभिः । नेदं जात्वपि विभूषणं तेषामित्यावेद्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

## ॥ मतिभ्रमविमर्शः ॥ (२९)

येषां दुरभिमानेन ग्रस्ता तु मतिरंगभूः ।
निःसंशयं तत्र नटो भ्रमः स्वैरं प्रनृत्यति ॥१॥

अथास्मिञ्जगति विशुद्धं ज्ञानमौदार्यं, परोपकृतिः सत्यनिष्ठा, वाङ्मनःकायानां पावित्र्यम्, सौशील्यम्, सदुद्यमप्रियत्वमेवमादीन् दैविकान् गुणान् प्रविकासयतो वैदिकधर्मस्योपरि सांप्रतिका आत्मानं सुधारकं मन्यमाना मर्त्याः संततं विचित्रान् प्रहारान् कुर्वंति सर्वतः । कुशकाशावलंबनन्यायेन स्वीयशस्त्राणि सज्जीकृत्य तं प्रहर्तुमीहंते । केषांचिद्भारतीयानामेव पुंसामिदं विचित्रं चरितमवलोक्य मनाक् खिन्नमिव भवत्यंतःकरणम् । मानवबुद्धेः शुद्धिं विधाय तस्यां विशुद्धं ज्ञानबीजमावापयितरि सद्धर्म एव ' अयं वैदिको धर्मो हतप्रज्ञोऽस्ति ' इत्यधिक्षेपः क्रियते । एतस्मादन्यत् किं दुरदृष्टं भारतीयाना नराणाम् । दंभदर्पक्रोधमात्सर्यनैष्ठुर्यमोहादीन् दोषानुन्मूल्य चित्तं निर्मलीकुर्वतो धर्मस्योपरि सः ' अहिफेनस्य गुटिका विद्यते ' ' सुरादीनां मादकद्रव्याणां मदोऽस्ति । इतीत्थं स्वैरं प्रलापाः प्रचलंति तेषाम् । कोऽयं व्यामोहः । कोऽयं दैवदुर्विलासः ।

केयमात्मवंचना। वैषयिकसुखप्राप्त्या हर्षोन्मत्ता मा भवत। दुःखपर्वतानां पतनेऽपि व्याकुलभावं मा भजत। दैवं पश्चात्कृत्य पुरुषार्थं कुरुत। मृत्योरुपरि विजयं संपादयत। इत्येवं चैतन्यस्य परिस्फूर्तिं ददतो धर्मस्योपरि स भृशं दौर्बल्यमुत्पादयिता विद्यत इति निरर्गलमारोपः क्रियत इत्यहो कलिकालप्रभवमाश्चर्यम्। मनसि चिराय कृतपदामासुरीं भावनां निःशेषं विनाश्य तत्र शौर्यौदार्यादीन् गुणान् संस्थापयिता यो धर्मः स धनिकानामुपकारको दीनानामनुपकारकश्चास्तीति विपरीतबुद्धेरुत्पादनं प्रकामं विषादस्थानमित्यत्र न संदेहः। कुलस्य समाजाना राष्ट्रस्य च सर्वथाऽभ्युन्नतिसंपादको यो धर्मः स समाजविध्वंसको राष्ट्रघातकश्चास्तीति सुधारकंमन्याना मतिर्भ्रान्त्येति कोऽयमभूतपूर्वः स्वात्मवंचकश्चमत्कारः। यं परिरक्षितुं श्रीरामश्रीकृष्णप्रभृतयो दिव्यावताराः संजाताः। यस्य महती व्यासवाल्मीकिसदृशैर्लोकोत्तरप्रतिभाशालिभिर्महर्षिभिर्गीता। यस्य समर्थनं विशदीकरणं च बादरायणजैमिनीश्रीशंकराचार्यभट्टकुमारिलसायणाचार्यमंडनमिश्रसमर्थरामदासज्ञानेश्वरएकनाथहंसराजतुकारामप्रभृतिभिः परिणतप्रज्ञैर्महात्मभिः संस्कृतप्राकृतभाषाभ्यां स्वकृतसूत्रभाष्यटीकादिग्रंथेषु कृतम्। तस्य भगवतो धर्मस्योपर्याक्रमणं कर्तुं साम्प्रतिकानां दुर्विषयलोलुपानां क्षुद्रमतीनां भारतीयानामर्वाचीनानां कुतो धार्ष्ट्यमागतं तदवश्यं विचारणीयमस्ति। आधुनिकैर्भ्रष्टमतिभिर्धर्मस्योपरि ये य आक्षेपाः क्रियंते ते तस्मिंस्तत्त्वतो न संभवंत्येव। एतेषामात्मानं सुधारकं मन्याना वैदुष्यं तर्कशक्तिर्वा भाष्यवार्तिककारादिभ्योऽप्यधिका वर्तते किम्। एतेषा मनांसि भगवदेकनाथतुकारामादिभ्योऽप्यधिकानि सद्वासनायुतान्यत एव निर्मलानि संति किम्। एतेषां कर्तृत्वं महाराजशिवरायादप्यधिकं वर्तते किम्। एतेषा प्रतिभा श्रीज्ञानेश्वरादपि विशालास्ति किम्। वयमेतेभ्यो महात्मभ्यो गुणैरधिका इत्याधुनिकानां सुधारकब्रुवा स्वीया मतिर्विद्यते किम्। एकतः श्रीशंकरज्ञानेश्वरतुकारामप्रमुखाः शुद्धबुद्धयो लोकसंग्रहं कर्तुं समर्थाः साक्षात्कारिणो दिव्यपुरुषाः समाहृताः, अन्यतश्च परकीयकुसंस्कारदूषितचित्ताः स्वार्थैकपरायणा उच्छास्त्रवर्तिनः सर्वेऽपि सुधारकंमन्याः क्षुद्राः समाहृताश्चेज्जीवानां वास्तवं मंगलं केनोपायेन

स्यादित्यस्य प्रश्नस्य सुनिश्चितं यथार्थमुत्तरं के वा दद्युरिति स्वीयमनसि सुधीभिर्विमर्शः कार्यः। उक्तदिव्यविभूतीनां चरणरजःसाम्यमपि येषां साप्रतिकानां सुधारकाणा नास्ति तेषां तुच्छस्वार्थांधाना वचनेषु विश्वस्य जनताया वर्तनं चेत्पर्यवसानेऽवनतिमतरा नान्या गतिरित्यवधेयम्। प्रमाणतो विमृश्यमाणे प्रतिपदं पर्वततुल्यान् प्रमादान् कुर्वतामेतेषा सुधारकाणा स्वस्यां स्वैरबुद्धौ विश्वस्तु सामर्थ्यमस्ति न वेति सदेहः। स्वीयदेहे काप्यल्पा विकृतिश्चेत्तूर्णं भिषड् (डाक्तर) निकटे धावतस्तद्वाक्यं वेदतुल्यं मन्वंत एते सुधारका यस्यानंतजन्मस्वविश्लथः सबधोऽनुवर्तते। यः सम्यगनुष्ठितश्चेन्मानवं स्वाराज्यभाजं कुरुते। तमिमं वेदोदित धर्मं निरंकुशेन तुंडेन स्वैरमाक्षेप्तुं निरपत्रया मत्या बद्धपरिकरा भवंति। किमिद सदसद्विवेकवता लक्षणमुत क्षुद्राणां पृथग्जनाना तन्निर्मत्सरैरार्यैर्विवेक्तव्यम्। कस्मादेते धर्मं वितथमेवाक्षिपंति। किं सम्यग्वस्तुविषयकः समादरस्तेषा मनस्सु मूलत एव नास्ति। उत सन्नपि विनष्टः सः। अथवा धर्मस्य वास्तव महत्त्वमङ्गिगंतु केनाप्यनिर्वचनीयेन हेतुना तेषा मतिरसमर्था सवृत्ता। इत्यस्याऽऽलोचने कृत इदमेकं निदानं पुरतः स्फुरति।

यद्धर्मवद्भासतोऽपि तत्वतो धर्मविरुद्धस्यानिष्टफलोत्पादकस्यान्यस्य कस्यचिद् भृशं कट्वनुभवेन तेषा मत्याऽऽक्रातया भवितव्यम्। तेन धर्मवद्भासमाने तस्मिन् दुष्टे वस्तुनि प्रहारमकृत्वा भ्रातैस्तैर्धर्मोपर्येवाकाशताडनन्यायेन प्रहारा. क्रियंते। तेन सामान्यजनसमूहो भृशं भ्रातः सन् प्रायशो दाम्भिकः स्वार्थांधः स्वैराचारश्च संवृत्त इत्यनुभवः प्रतिपदमागच्छति। अयं दंभस्तु गृहशत्रुर्वर्धते। कंचुकांतर्वर्ती वहिरस्ति। धर्ममर्मभेत्ता भीषणः कीटो विज्ञेय.। दंभस्यातरंगमासुरसंपदा व्याप्त कज्जलवन्मलिनमास्ति। बहिरंगं तु धर्मवदुज्वलं दृश्यते। तेन भ्रातो जंतुर्धर्मदंभयोर्विवेचन विधातुमसमर्थः सन् वंचितो भवति। मानससरोऽतर्गतानि तत्वज्ञानमुक्ताफलानि भक्षयिता राजहंसोऽन्यः; अथ कुतश्चिच्छ्वेतपत्रे संपाद्य ताभ्यां स्वीयं देहं कथंचिद्विभूष्य पुरीषगोलके न्यस्तदृष्टिरात्मानं हंसंमन्यः क्षुद्रकाकोऽन्य एव। इत्थं धर्मस्य प्रावरणमादाय धर्मस्वरूपेण जनताया संचरन् दंभः सामान्यजनवृंदं भृशं त्रस्तं कुरुते। तस्या-

तिभीषणमंतःस्वरूपमज्ञात्वा रमणीयेन बाह्यस्वरूपेण वंचितानां तमेव सर्वनाशकरं दंभं धर्मं मन्यमानानां जनाना धर्मेणैवास्माकमकल्याणं कृतमिति विपरीता गतिर्दुष्टस्य दमस्य संसर्गाज्जायते। मनसि भूतानुकंपाया लेशतोऽप्यभावाद् व्यवहारकाले दीनान् वंचयित्वा स्वीयधनवृद्धिं कुर्वाणः कोऽपि व्यवसायी धर्मेणोपदिष्टान् परिशुद्धानर्थार्जननियमानुपेक्ष्याधर्ममेव प्रकुरुते। अथ च जनतायां साधुरयमिति प्रसिध्यर्थम्—

" यजंते नाम यज्ञैस्ते दंभेनाविधिपूर्वकम्। "

इति। भगवदुक्तरीत्या धर्मस्याडंबरं लोके प्रसारयति। इत्थमासुरसंपद्दूषितस्वांतं दाभिक मनुष्यं धार्मिक इति संभावनं मूलतो मूर्खतैव। इमा मुर्खतामनुसरतो जना एव महाभाग धर्मं निरर्गलमनेकधा निंदंति। तथा वस्तुतो वैराग्यशीलाय महापुरुषाय दीयमानः समानः स्वस्मा अपि भाव्य इति दुरभिमानेन विषयवैराग्यमिषतो बहिर्ब्रह्मचर्यादेः प्रदर्शनं कुर्वंतोऽतरबला भ्रष्टयंतो नराधमा यमनियमादीन् स्वप्नेऽप्यपरिपाल्याऽऽत्मानं योगिनं प्रख्यापयंतो विषयकर्दमे स्वरवल्लुठंतो जतव एव धर्मस्य परमार्थतः शत्रवः। एतेषा संसर्गादेव धर्मदंभयोर्विवेचनं कर्तुमसमर्था जनाः प्रकामं वंचिता भवंति। तदवलोक्य धूर्ताश्छिन्नपुच्छफेरुन्याय ( स्वयं नष्टः परान्नाशयति ) मवलंब्य धर्ममाक्षिपंति। किं तु स आक्षेपस्तेषा कृष्णोपले क्षुरतैक्ष्ण्यवद्व्यर्थः सन् धर्माभासे दमे कार्यकृत्स्यादिति निश्चित्य सुधीभिस्तथोद्यम कार्यः। यथा सामान्यजनता श्रद्धया धर्ममेवाऽऽश्रयेत्। न धर्माभासं दंभम्।

तात्पर्यम्— भ्रातानां सुधारकंमन्याना वाग्जाले कुशलेच्छुभिः कदापि दृष्टिर्नैव देया। श्रद्धयाऽनुष्ठितं धर्माचरणं जात्वपि व्यर्थं न भवति। धर्म एवेहपरलोकयोर्वास्तवः सखा वर्तते। स एव जीवाना कल्याणकर्तेति भगवदुक्तेः सत्वेऽपि तत्राविश्वस्य प्रमादिनः सुधारकंमन्याः भ्रांततयैव धर्ममाक्षिपंतीति निःसंदेहमवगत्य विवेकवद्भिः सुधीभिर्धर्म एव सर्वात्मना शरणीकरणीय इत्यावेद्यालं कुर्मे इति सर्वं शिवम्॥ श्रीः॥

---

॥ श्रीः ॥

# ॥ सुधारणाभासविमर्शः ॥ (३०)

पाश्चात्यैरवलंबितां नवनवां रीतिं मनुष्याऽधुना
मत्वा सर्वशुभंकरीं प्रियतमां देवीमिवोपासते ।
स्थानं दृष्टिमनोहरं नु पुरतः प्राप्स्याम इत्याशया
नूनं नैकसुखालयं स्वसदनं कुर्वंति ते भस्मसात् ॥

अथेदानीमिदं सुधारणायुगं वर्तते । अस्मिन् समये सर्वेष्वपि शारीर-वाचिकमानसेषु व्यवहारेषु सुधारणाऽपरनाम्ना परिवर्तनेन भाव्यम् । इदमेवास्य कालस्य महद्वैशिष्ट्यं बोध्यम् । मास्त्वस्मिन् काले सुधारणा मास्त्वत्र च नूतनं किमपीति कथनं तु महान् दोषो महानपराधोऽयमिति केचनोद्घोषयंति । सिंहावलोकनरीत्या जनता निरीक्षिता चेत् तस्या आचारेषु विचारेषु च भृशमशुभोदर्का क्रांतिः सर्वत्र संवृत्तेति परिदृश्यते । पुंसां स्त्रीणां च शिरःप्रभृत्यापादमेकैकस्मिन्नवयवे समवलोकिते तैस्ताभिश्च किं विसृष्टं किं च गृहीतमित्यस्य स्पष्टीकरणं स्यादेव । तथा हि पगडी, रुमाल इत्यादिकं यद्भारतीयानां जनानामुष्णीषापरनामकं शिरोभूषणं तद्गतप्रायमेव । अथ च तत्स्थाने पाश्चात्यपद्धत्यनुसारेण नानाविधमभव्यं केशविरचनाकौशलं प्रादुर्भूतम् ।

"देवानभ्यर्च्य गंधेन सर्वपापापनुत्तये"

इत्यादिस्मृत्युपदिष्टं चंदनादितिलकधारणमकृत्वा तच्छून्यभालस्थापनरीतिः प्रसृता । सार्वकालिकया तयोच्छास्त्ररीत्या कदाचिद्द्रष्टुर्मनस्यमंगलाऽऽशंकायामुदिताया किमाश्चर्यम् । प्राक्काले दिनाकीर्तिकर्तृकस्य सांप्रतं तु परकीयरीत्या स्वकर्तृकस्य श्मश्रुकर्मणः शास्त्रोपदिष्टः कालः सुदूरं गत्वा तच्छ्मश्रुकर्म चाहापानादिनित्यकर्मांतर्भूतमेव संवृत्तमस्ति । आहारस्य विस्मृतिः स्यात्कदाचित् । किंत्वस्य श्मश्रुकर्मणः स्वप्नेऽपि विस्मरण न भवति । कालोऽप्यस्य कर्मणो न नियतः । व्यतीपातादिकुयोगेऽमावास्यादिपर्वसु ग्रहणे संक्रातावपराह्णे

रात्रौ निशीथे विवाहदिने श्राद्धदिने प्रेतयात्राप्रसंगे सर्वदैवेदं कर्म निष्प्रतिबंधं प्रचलति। नेदं कर्म वयोमर्यादामपेक्षते। केवलं श्मश्रूत्पत्त्यपेक्षमित्यवधेयम्। किमाधारमिदं श्मश्रुकर्म केशकर्तनं चेति प्रश्न इयं पाश्चात्यानां संस्कृतिरित्येवोत्तरं तत्र। नान्यत् किमपि बलवत्प्रमाणम्।

सांप्रतं पाश्चात्यसंस्कृतेः सर्वात्मनाऽवलंबनमिदमधुनातनानां विशेषतः सुशिक्षितंमन्यानां कुलदेवाराधनमित्यवगंतव्यम्। कंठादधःशरीरे दृष्टिर्निक्षिप्ता चेदादौ कंचुकादिकं दृग्गोचरो भवति। तत्र प्राक्कालीनस्याल्पमूल्यलभ्यस्याप्युपकारकदृष्ट्याऽधिकस्य 'बंडी, बाराबंडी, अंगरखा' इत्यादेर्नामापि न श्रूयते। तत्स्थानं समधिकमूल्येनास्मद्देशे सर्वथाऽनावश्यकेन 'गंजिफ्राक्, शर्ट, नैकविधकोटादिनाऽऽक्रांतम्। यदुत्तरीयवस्त्रं (उपर्णे) सभ्यतायाश्चिह्नमासीत्, तथाऽनेकधोपकारकं भवति स्म। तद्दिनष्टप्रायमेव। तस्याधिकारः सांप्रतं करवस्त्रेण (हातरुमाल) गृहीतः। तेन नासामलनिष्कासनं वा तुंडसंमार्जनं विहाय नाधिकं किमपि कर्तुं शक्यम्। कट्यधोभागः परिधानवस्त्रं (धोतर) विना चड्डी, विजार, ढिला पायजमा, एतैर्यथायथं व्याप्तः। तत्रापि साप्रतं ढिलीविजारवस्त्रस्यैव तरुणेषु बाहुल्येन प्रचारः परिदृश्यते। अंतरीयस्य (नेसण्याचें धोतर) तस्य च (ढिली विजार) तुलनायां कृतायां तूपसंव्यानमेव (धोतर) मूल्यतोऽल्पम्। यतो तत् ढिलीविजारद्वयं द्वाभ्यां त्रिभिर्वा मासैर्नूतनमेवापेक्षितम्। उपयुक्तताद‍ृष्ट्याऽपि परिधानवस्त्रापेक्षयाऽधिका गुणास्तत्र नोपलभ्यंते। केवलमुच्छिष्टानुकरणं तादित्येव। तदनंतरं जान्वोरधः पायमोजेवस्त्रं क्रमायातम्। किं तु विजारवस्त्रेण सह तस्य संमेलनाभावादंगीकारः। ततः परमवशिष्टः पादत्राणस्य क्रमः। तत्र प्राक्कालीनानां जोडा, चढाव तत्तद्देशीयसुदृढवाहाणाना च स्थाने द्रष्टुं रमणीयस्यापि चिराय स्थातुमसमर्थस्य गुरुत्वशून्यस्यापि मूल्येन समाधिकस्य चप्पलपदवाच्यस्याऽऽदेशवज्जायमानः प्रसारः परिदृश्यते। कदाचित बूटोऽपि भ्रियत इत्यन्यदेतत्। आधुनिकेषु युवसु केनाप्यनिर्वाच्येन वा हेतुनाऽऽस्तां, प्रायः प्रतिदिनं स्त्रीणां धर्मा उत्पत्स्यमानाः परिदृश्यंते। कोमलत्वापरपर्यायं मार्दवमेधते

पुरुषेष्वावश्यकं कठिनत्वं कामं श्रमसहिष्णुत्वं च गतप्रायमेव । सौरातपो न सह्यते । वृष्टौ छत्रमंतरा गमन सुतरामसंभवि । शीतं सोढुं न पार्यते । अल्पेनाप्यौष्ण्येन शिरो व्यथते । धान्यादीनां भारमुत्तोलयितुं तादृशसामर्थ्यस्याभावः । गुरुभूत वस्त्र परिधातुं नैव शक्यते । यद्धि परिधीयते वसनं तन्मत्स्यजालकवद्विरलमिति नातिशयोक्तिः । तादृशेनाबरेण लज्जायाः संरक्षणमपि दुर्लभम् । विवाहोत्सवादिमंगलकार्येषु नग्नशिरस्कतया गमनागमनादिव्यवहारस्त्वकरणे प्रत्यवायावहं नित्यकर्मैव संवृत्तः । तद्वैपरीत्येन स्मशानयात्रायामाधुनिकपद्धत्या कवचोष्णीषादिधारणमत्यावश्यकं जातम् ।

इदानींतनतरुणेषु शुचित्वाशुचित्वस्य (सोवळें ओवळें) विमर्शः काममस्तंगतः । विवाहादिधार्मिकभोजनप्रसंगेषु यूनां पंक्तिः पृथगेवावस्थाप्यते । तस्या पंक्तावुपविष्टास्तरुणा नैकविधविचित्रवेषधारिणो दृगञ्वनीना भवंति । विजारशर्टौ धृत्वा भोक्तारः प्रायः सर्व एव । कोटबूटादिकं धृत्वाऽपि केचन महात्मानोऽभ्यवहारकार्यं निर्वर्तयंति । नूनमधिकं तेषां धैर्यम् । शास्त्रीयो नित्यविधिस्तैर्मूलत एव निरस्तः । कावपि विधिनिषेधौ तैः स्वप्नेऽपि न पाल्येते ।

द्विजत्वाधायक उपनयनसंस्कारोऽपि क्रीडाविशेषस्तेषाम् । अनेन हि वेदोपदिष्टसंस्कारेण बटुर्ब्रह्मचारी जायते । परतु ब्रह्मचारिणः किमपि चिन्हं नोपलभ्यते तास्मिन् साप्रतिके बटौ । शिरसि केशाः स्त्रीणामिव सीमंतसरण्या स्तोकं कृत्वा धार्यंते । कौपीनं नैव ध्रियते । अशनपानयोर्नियमा न पाल्यंते । प्रथमदिनादारभ्यैव संध्योपासनस्यानध्यायः (सुट्टी), येन ब्राह्मण्यं सिध्यति स गायत्रीमंत्रोऽपि यथावदुच्चरितु न शक्यते । अग्निकार्यस्य तु त्रैकालिकसंसर्गावच्छिन्नप्रतियोगिताकोऽभाव एव । वैश्वदेवो गगनकुसुमायमानः । देवतापूजनं देशातरं प्रति कृतप्रयाणम् । श्रावण्या स्वल्पमूल्येन क्रीतो भट्टवर्यैः स्वैरं यज्ञोपवीतं (जानवे) संस्कृत्याऽऽनयत्येव । अतः कालापव्ययकारकं बहुकालं श्रावण्या व्यर्थमेवोपवेशनं कः समीक्ष्यकारी विदध्यात् । उपनीतबटोः शुचित्वं प्रथमदिनमारभ्यैवास्तं याति । उपनीतं प्रति यथेच्छं वर्तस्वेति पित्रादेर्मूकोपदेश एवास्ति ।

अथ जीवितावस्थाया मानुषेणानुभूयमानो विवाहोत्सवस्तादितरोत्सवा-पेक्षयाऽत्यंतमभ्यर्हित इत्यत्र न कस्यापि विप्रतिपत्तिः। तस्मिन्नुत्सवे त्वने-काश्चमत्कृतयः प्रभवंति। तत्सदृशाश्चमत्कृतयः कस्मिन्नप्यन्यस्मिन्नुत्सवे द्रष्टुमशक्याः। यान् यानुद्दिश्य ये विवाहा धर्मसंकरकारिण इति शास्त्रेण सर्वथा निषिद्धा स्तएव विवाहाः पितृपितामहादिपरंपराप्राप्तं सदाचारमतिक्रम्य कृताश्चेदेव महान् पुरुषार्थः। तादृशेनैव चोच्छास्त्रवर्तनेन राष्ट्रस्य समुन्नतिः शीघ्रं भविष्यतीत्याधुनिकाः कुशिक्षिता मन्वते। तथा कुर्वते च। धार्मिकविधीनां बुद्धिपूर्वकमुल्लंघनम्। अर्थात् स्वैरं वर्तनम्। वेदादिशास्त्रस्योपहासः। स्वधर्मनिंदा परधर्मप्रशंसा तदाचरणं च। पारंपरीकाया रूढौ सहसा पदाघातः। धर्माभासो, नीत्याभास. सदाचाराभासश्चेत्यादीना व्याख्यानादिषु प्रतिपादनं विधायाज्ञजनताया बुद्धिभेदः। एवमादिरेव पराक्रमः। अयमेव च पुरुषार्थः सांप्रतिकाना मानुषाणाम्। प्रायशः संप्रति प्रेमविवाहाः केचन भवति। केचन चंडालजातीयसंतत्युत्पादकाः सगोत्राद्या विवाहा अपि जायंते। कति-पगे वैवाहिकसंबंधाः प्रेमातिशयवशतो वर्णजातिविवेकमविधायैव सिध्यंति। कानिचिन् मिथुनानि पारंपरीका पद्धतिमधःकृत्वा विवाहरज्जुबद्धान्युपलभ्यंते।

केषाचिद्विवाहाः प्राथमिकदर्शनोत्पन्नप्रेममूलका संति। केषाचित् पुनरुद्वाहात्प्रागेव संजातप्रेमसंबंधहेतुका विवाहा विराजते। अपरेषा केषां-चिन्मिथः सत्याग्रहं कृत्वाऽपि भवति। कानिचिन्मिथुनानि प्रेम्ण आराधनं विधायैकत्र वसति। केषाचिद्दृष्टेः पुरतः स्वदेशप्रेमसमाजसुधारणे तिष्ठतः। अपरे केचन युवानो प्रकाम दयार्द्रचेतसः सतः पकाङ्गा रूपवतीस्तरुण्य-भिन्ना गा. पात्रयित्वाऽऽत्मसात्कुर्वंति। कानिचिद् युगुलान्यादौ देशांतरेण साकमात्मन. सबधं संस्थाप्याथ सौदर्यस्य कलायाश्च वृद्धिमुद्दिश्य प्रेम्णा सयुक्तानि भवति। एवं गमनागमनसंल्लापादिव्यवहारप्रसंगतोऽपि मिथश्चित्त-समाकर्षणेन विवाहाः संपद्यंते।

• तथा— प्रतिकृति ( सिनेमा ) दर्शनकालीनमेलनेन महाविद्यालय ( कॉलेज ), संबंधिस्वैरव्यवहारेण वातसेवनाय प्रातःसाय वा क्रियमाणा-

टनकाल एकांतप्राप्त्या च प्रेमसंबंधाः सिध्यंति । एतदन्येऽप्यवर्णनीयाः प्रकाराः संति विवाहस्य । इत्येवमियमैदानींतन्युद्वाहवार्ता निरूपिता । अथाशनपानयोर्विचारस्यावसरः । अस्मिन् विषये त्वाधुनिकानामत्यंतमग्रगामित्वं दृश्यते । प्रायः सर्वेषां बाहुल्येनाशनपानयोर्व्यवहारो बहिरेव ( हाटेलें ) निर्वार्तितो भवति । केन कृतं, किं भोज्यं, किं चा भोज्यमित्यत्र कावपि विधि-निषेधौ न वर्तेते । विशेषत इराण्यादीना भक्ष्यालयेऽशनपानानिर्वर्तनस्य प्राधान्येन बीज तु विशिष्टा रुचि ( चव ) रेव ।

एवं कालेजीयसहभोजने ( ग्यादरिंग ) श्रीमतां हर्म्यादौ ( बंगला ) चाभूतपूर्व आहारः समुपक्रातः श्रूयते । तस्याऽऽनंदस्तु पृथगेव विद्यते । स आनंदो ब्रह्मानंदमधःकुरुते । इतरेषामानंदानां तु का कथा । आहारविहारैकमूलकाः किल मानसाः सदसद्विचाराः । ते तु सर्वात्मना पाश्चात्याः सजाताः । भारतीयः कोऽपि विचारो नैव रोचते । यैः स्वराष्ट्रीयतायाः पुष्टिर्भवेत् ते स्वधर्मस्वभाषा-स्वीयाऽऽचारादयो विषयाः प्रतिपदं दूरतरं यांति । तेषा स्थाने तु परधर्मपर-भाषापराऽऽचारादीनामंधतयाऽनुकरणं रंहसा जायमानं दरीदृश्यते । स्वीयनामोच्चारणेऽपि यथाऽधिकतया इंग्लिशशब्दानामुच्चारणं स्यात्तथाऽभिरुचिरेधमाना समवलोक्यते । स्वनाम्नः फलका अपि पाश्चात्यलिप्यां लिखिता मुद्रिता वा दृश्यंते । तिथीना स्थाने तारिखानामुच्चारणं लज्जास्पदमिति भावनैव नोदेति । पितुः पुत्रं प्रति पुत्रस्य पितरं प्रत्यन्यस्यान्यं प्रति वा यत्पत्रं तदपींग्लिशभाषाया-मेव प्रायशो लिख्यते । न मातृभाषायाम् । यो हि ता भाषां न जानाति स मातृभाषाया लिखतीत्यन्यदेतत् । मार्गमध्येऽन्यत्र कुत्र वा कार्यवशात् परस्परयो-र्मेलने संवृत्ते नमस्कारादिना सदाचारेण संसूच्यमानो भारतीयः समादरः ' गुड् मॉर्निंग् ' ' गुड् नाइट् ' इत्यादिपरकीयशब्दैः कथंचिद्व्यक्तीक्रियते । एतेष्वेतदन्येषु च व्यवहारेषु कुत्रापि स्वधर्मस्य स्वभाषायाः स्वीयाऽऽचारस्य वा लेशतोऽपि संबंधो नोपलभ्यते । इदमेवाऽऽधुनिकं राष्ट्रीयत्वम् । किंवा सांप्रतिकी स्वदेशप्रीतिः । अथवा स्वदेशादेरुद्धारकः प्रयत्नः । अनुकरण-शीलासु बालकबालिकास्वपि ' गुड् इव्हिनिंग् ' इत्यादि दृश्यते । गृहांतर्वर्ति-

प्रात्यहिकव्यवहारेष्वपि पाश्चात्त्यपद्धतिरेवावलोक्यते । तामपि दिङ्मात्रं प्रदर्शयामः ।

वर्धापनतिथिः (वाढदिवस) व्रतबधः (मुंज) शिवरात्र्याद्युपवासः पित्रादेः श्राद्धदिनं पुण्यतिथिरेवमादयो धार्मिकविषया अप्यधार्मिकतारिखानुसारेण कथंचिदनुष्ठीयमाना दृश्यंते । किं बहुना देवतादीनां प्रासादे, साधुप्रभृतीनां मठे चाय तारिखाव्याधिः संसर्गं कुर्वन्नुपलभ्यते । यत्र साधुप्रभृतीनामेतादृशी रीतिः । तत्रेतरेषां का वार्ता । येन संरक्षितेन सर्वात्मनाऽभ्युदयः संसिध्यति । असंरक्षितेन चानभ्युदयः कंठे पाशायते । तच्छीलनामकमभ्यर्हितं महामूल्यं किमपि वस्त्वस्तीति कोऽपि न जानाति ।

साप्रतिकेऽसुरभिण्या परिस्थितौ स्थित्वाऽपि त्रिंशत्पंचविंशतिर्वा वत्सरपर्यंतं कुमारादीनां ब्रह्मचर्यमस्खलितं तिष्ठतीति केऽपि महाशया ब्रुवंति । परं विश्वासार्हं तत्तेषां वाक्यमिति कथनं साहसमेव । कुलीनाभिः कन्यकाभिर्नाटकादौ नृत्यकरणम् । ताभिस्तादृशकुमारैश्च सिनेमादौ सकेतितं वेषं धृत्वा कार्यकरणं सर्वथा गर्हितमपि साप्रतं विपर्ययेण प्रशस्तं गण्यते । तस्य दुष्परिणामश्चानुभूयते । अथापि तस्मात्कार्यात्पराङ्मुख्य न विदधतीति दुरदृष्टं भारतीयानाम् । आधुनिका युवानो युवत्यश्च यस्य कस्यापि हाटेलादौ गत्वा तत्रस्थमास्वादमनुभवति । अथ चैकीभूय प्रत्नान् विषयानुद्दिश्य महताऽऽवेशेन यथेच्छं वितडां कुर्वंति । तेषां तासां च तत्र ध्येयं तु प्राचीनाचारविचारात्मकस्य दुर्गंधिनो मलस्य जनतायाः सकाशान्नितरां दूरीकरणमित्येव । अभ्यर्हितं ध्येयं सौशील्यं च तेषु तासु च प्रायो विनष्टमेव । नष्टतायाः कारणकथनं कठिनमेव । अथापि सामान्यतः परकीयसत्ताप्रयुक्तस्वीयधर्मादिष्वश्रद्धा, इदमेकं निदानं वक्तुं शक्यम् । पित्रादीनामवज्ञा त्वेतत्कालीनो महान् युगधर्मः । यत्र तेषामवज्ञा । तत्रेतरैः साकं व्यवहारे विनयादीनां सद्गुणानां लोपश्चेत् किमाश्चर्यम् ।

एतावत्पर्यंतं कृतस्यास्य निरीक्षणस्य समासतस्तात्पर्यमित्थम् । स्वीयधर्मोपर्यत्यंतमनादरः । अत एव नैयत्येनानुष्ठेयानां धार्मिकविधीनां संवत्सरा-

यनर्तुमासपक्षतिथिविशेषेषु विहिताना शुभाचाराणां च भृशमज्ञानम् । ततस्तदुपहासो यथारुचि स्वैरवर्तनमेव राष्ट्रीयं कर्तव्यमिति मत्वा तदनुसारेणोच्छास्त्रमाचरणम् । येन केनाप्युपायेन सेवा (नोकरी) संपादनमेव पुरुषार्थः । तदेव च ध्येयम् । इति ।

यद्यपि परिस्थित्यनुसोरणास्माकं कानिचिद्वर्तनान्यन्यथाभूतानीव दृश्यंते । तथापि मूलतत्त्वस्य बाधः कदापि न भाव्यः । किंत्वस्माकं तादृशास्ते सद्गुणाः क्वापि विलीना एव । तेषा स्थान तु परेषामवगुणैरेवाऽऽक्रातम् । ततः पर्यवसाने शून्यमेवावशिष्यते । एवमात्मिकेयं दुःस्थितिरपि परिवर्तयितुं शक्याऽस्ति । किं तु यावत् स्वधर्मस्य स्वभाषायाः स्वीयाचारस्य च तीक्ष्णतराभिमानश्चित्ते नोत्पद्यते तावद्वास्तविक्या उन्नतेरारभो नैव भवितेत्यसंदिग्धम् । अत ईशकृपया सोऽभिमानो भारतीयानां चित्तेषूदेत्विति परमेश्वरं संप्रार्थ्यालं कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

॥ श्रीः ॥

## ॥ अस्पृश्यस्पर्शपरि ारविमर्शः ॥ (३१)

चंडालश्वपचादीनां बहिर्ग्रामात् प्रतिश्रयः ।
न तैः समयमन्विच्छेत् पुरुषो धर्ममाचरन् ॥
म. स्मृ. अ. १०

अथ योऽयं जनितोऽस्पृश्याना चंडालादीना निमित्ततोऽस्पृश्यानां चेतरेषां जनाना स्पर्श. परिह्वियते सनातनवैदिकधर्माभिमानिभिर्जनैः स धर्मदृष्टयैव परिह्वियते । तत्र स्पृश्यास्पृश्ययोरुभयोरपि कुशलमस्तीति शास्त्रं कथयति । तथा हि-

आचारः परमो धर्मः श्रुत्युक्तः स्मार्त एव च ।
शाश्वतेऽस्मिन् सदा युक्तो नित्यं स्यादात्मवान्नरः ॥

" आचारो हंत्यलक्षणम् " इति । तथा-
दुराचारो हि पुरुषो लोके भवति निंदितः ।
दुःखभागी च सततं व्याधितोऽल्पायुरेव च ॥ इति च ।

एवं स्थिते स्वैरं चापलमनुसृत्य निसर्गतोऽपरिहार्याया अस्पृश्यताया उन्मूलने बद्धपरिकराः केचनाऽऽधुनिकास्तत्र विषये हठान्नैर्घृण्यारोपस्य साहसं कुर्वंति । तद्द्रढयितुं च किमप्यसंबद्धं प्रलपंति । तथा हि– एते सनातनधर्माभिमानिनो जनाः पश्वपेक्षयाप्यस्पृश्यानधमान् मन्वते । यतः श्वमार्जारादिपशूनेते निःसंकोचं स्पृशंति । किंत्वस्पृश्याञ्जात्वपि न स्पृशंति । कदाचिज्जाते स्पर्शे विशुध्यर्थं स्नानादिकं कुर्वते । ईषत्पुरतो गत्वैवमपि वक्तुं शक्यम् । यन्निसर्गतउपद्रवकारिणः क्षुद्रतमान्मशकमत्कुणादीन्कीटानचेतनांश्च मृत्पाषाणादीन्स्पृश्यान् गणयंति । अर्थात्तदपेक्षयापि मनुष्यत्वादिना सजातीयानस्पृश्यानधमान्भावयंतीत्यहो महदाश्चर्यमेतत् । इति ।

इत्थं सनातानिषु तैरारोपितनैर्घृण्यस्य प्रदर्शिकां दुरुपपवर्त्तिं श्रुत्वा ऋजुमतयो जनाः प्रतारिता भवंति । इत्यत्र किं चित्रम् । विवेकिनः सनातनिनोऽप्येवं श्रुत्वा क्षणं भ्रांताः संतस्तन्नैर्घृण्यं तिरस्काराहं भावयेयुः । परं वस्तुतोऽयमस्पृश्य इति शास्त्रीयया भावनया स्वीयशुचित्वस्य परिरक्षणार्थं कृतेऽपि तैरस्पृश्यस्पर्शादेः परिहारे तत्र तेषां तमस्पृश्यं जनं तिरस्कर्तुमपमानितुं वाऽभिप्रायोऽस्तीति वक्तुं केनापि निर्मत्सरेण समीक्ष्यकारिणाऽशक्यमेव । सुस्नातः परिहितधौतवासाः कृतभसितत्रिपुंड्रः शुचिः सनातनिजनो यस्मिन् दर्भासने कृष्णाजिने काष्ठासने वा संध्योपासनाद्याह्निकं कर्तुमुपविशति । तत्कृष्णाजिनाद्यासनं प्रति स स्पृशत्येव । अथाप्यस्नातामधौतवसनां जननीं तादृशं पुत्रं वा नैव स्पृशति । किं तां तं च तिरस्कर्तुमपमानितुं वा तदानीं तस्य मनीषा वर्तते । किं वा तत्काष्ठाद्यासनतोऽपि मातरं पुत्रं वा हीनं भावयतीत्येतद्यथा वितथम् । तद्वत्तदपि कथनं मृषैवेत्यवधेयम् । अचिकित्स्यव्याधिग्रस्त मनुष्यमगदंकारो यदाऽस्पृश्यं मनुते तदा तन्मनसि तद्विषयकः किं तिरस्कारोऽस्ति । किं वा तस्य रुग्णस्य तेनापमानः क्रियते । रोगस्यान्यत्र संक्रांतिर्माभूदित्येव तत्र

भिषजोऽभिप्रायः । सोऽत्यंतं निर्घृण इति त्वयापि वक्तुमशक्यम् । तत्र द्वितीयाऽस्पृश्यताऽल्पकालादिना निवर्त्या । प्रथमा तु यावज्जीवमनुवर्तिनीति तयोर्विशेषः । शुचितायाः परिरक्षणं तूभयत्र समानमेव । अतो न तत्र कस्यापि तिरस्कृतिरवमानो वा ।

ब्रह्मनिष्ठा महात्मानः केवलं पवित्रतमस्वीयहस्तादिस्पर्शेनान्यस्मिन्शुभसंस्कारमाधातु शक्नुवंति । जंतोरधोगामिन जीवनौघं दिव्यसामर्थ्येन परिवर्त्य तमुच्चतमश्रेयोन्मुखं कुर्वंति । शिरसि वरदहस्तं संस्थाप्य तं कृतार्थयंतीति प्रसिद्धमेव । एतद्वैपरीत्येनेत्थमपि वक्तुं शक्यम् । यस्मिन् स्पर्शे जाते तस्याशुभ एव परिणामो भवतीति । मानुषशरीरमभिव्याप्यासमंतात् सूक्ष्मं तेजोवलयं वर्तते । तस्मिन् स्पर्शादिनाऽन्यदीयतेजोवलयस्येष्टानिष्टसंस्कारा जायंते । अतींद्रिया अपि तेऽवितथा एवेत्यदृश्यतत्वान्वेषिणामाधुनिकानामपि नासंमतम् । किं चेदमस्पृश्यत्वं तद्विशिष्टस्य स्पर्शादिपरिहारश्च शास्त्रविहित उक्तरीत्या सम्यगुपपन्नश्चास्ति ।

ननु स्यादुपपन्नः शास्त्रोपदिष्टश्च । अथाप्ययं धर्मो मम न रोचत इति तं परिवर्तयत । यथा च मम बुद्धेः समतो भवेत्तथाऽन्य धर्मं कथयत । इतीयं कस्याप्युच्छास्त्रवर्तिन उक्तिस्तुच्छैव । नह्ययं सनातनो वैदिकधर्मो मानुषपशोस्तव मतिमुपजीव्य प्रवृत्तः । अपित्वद्वितीयाऽऽत्मतत्वोपजीवी तत्पर्यवसानश्च सः । क्षुद्रबुद्धेरसमत इति केनापि तेनोपक्रांतः सर्वथाऽशक्यस्तत्परिवर्तनप्रयत्नः कीलोत्पाटिवानरवदशुभोदर्को भविष्यतीति विभावनीयम् । कालत्रयाबाध्यो ह्ययं वैदिको धर्मः । तस्य यथार्थस्वरूपं तु स्वस्वधर्माचरणमंतरेणाधिगंतुमशक्यमेव । “चातुर्वर्ण्यं मया सृष्टम् । सहधर्माः प्रजाः सृष्ट्वा० । सर्वेषां तु स नामानि कर्माणि च पृथक् पृथक् । पृथक्संस्थाश्च निर्ममे ।” इत्यादिवचनशतेभ्यस्तत्तद्वर्णजातिविभिन्नाः प्रजाः परमेश्वरप्रणीता इति यथा जन्मसिद्धाः । तासां पृथक् पृथक् कर्माण्यपि यथा जन्मसिद्धानि । तद्वत् स्पृश्यास्पृश्यत्वे अपि जन्मसिद्धे । इति ।

यावदस्पृश्यो जनोऽशुचिकर्म करोति तावदेवास्पृश्यत्वं तस्य । तत्कर्मत्यागे स्पृश्य एव सः” इति निरर्गलस्योक्तिस्तुच्छतरा । नहीदमस्पृश्यत्वं वर्त-

मानजन्मविहिताऽशुचिकर्मकरणप्रयुक्तम् । किं तु— "कपूयचरणाः कपूयां योनिमापद्यंते ।" "कर्मजा गतयो नृणामुत्तमाधममध्यमाः" इत्यादिश्रुतिस्मृतिभ्यः प्राग्जन्मन्यनुष्ठितपापाचरणकारणकाधमजन्मसिद्धं तदस्पृश्यत्वमत एवाऽशुचिकर्मत्यागेऽपि तज्जन्मसिद्धमस्पृश्यत्वं कदापि नापैति । किंच—

सहजं कर्म कौंतेय सदोषमपि न त्यजेत् ।
अकुर्वन् विहितं कर्म निषिद्धं च समाचरन् ।
प्रसज्जंश्चेंद्रियार्थेषु नरः पतनमृच्छति ॥

इत्यादिधर्मशास्त्रेण स्वस्वजातिविहितकर्मणस्त्यागे पातित्यदोषस्योक्तत्वाद्विहितकर्मत्यागजन्यदुरदृष्टेन तज्जन्मसिद्धमस्पृश्यत्वं दृढतरं भवेत् । तदपगमवार्ता तु दूरैव स्यात् । तथा सति—

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः ॥**

इति स्वजात्युचितकर्मप्राप्त्या भगवदुक्ता संसिद्धिर्नाम स्वात्मोन्नतिस्तत्कर्मणस्त्यागे कथं स्यात्तदविकृतेन मनसा विचारयत ।

नन्वस्पृश्येषु स्पृश्यानां सौनिकवद्वर्तनं निंद्यमेवेति चेद्बाढम् । किंत्वस्पृश्यतायाः परिपालनमस्पृश्यस्पर्शादेः परिहारो वा न मांसिकवदाचरणम् । तत्तज्जातिविहितकर्मकर्तृत्वं कारयितृत्वं वापि न वैतंसिकवद्वर्तनम् । यतः पुण्येऽपुण्ये वा कुले जननं प्राग्जन्मकृतकर्मणः परिपाकः । तेन स्वजातिविहितकर्मकर्तुश्चित्ते स्वस्य यस्मिन् कुले जनिर्जाता तत्कुलक्रमागतं कर्मैव मया क्रियते न तदनुचितं कदापीति समाधानं वर्तते । यस्य तु यत्कर्म शास्त्रेणानुपदिष्टम् । अर्थात्तदीयकुलानुचितं स्यात् । तदाचरणप्रसंगः केनापि हेतुना समाजे प्राप्तश्चेद्विवेकवतस्तस्य पुंसः स्वांते कीदृशं समाधानं भविष्यति ।

जन्मसिद्धमशुचिकर्माचरणं यदि कौटिकवृत्तिस्तर्हि तदशुचि कर्म यं प्रति शास्त्रेणाविहितम् । अर्थात्कदापि तज्जात्युचितं न भवति । तेन तत्कारयितृत्वं करणं वा सौनिकापेक्षयाप्यधमाकृतिरिति किमु वक्तव्यम् । अथाप्या-

धुनिकाः केचन महाशयास्तत्तज्जातिविहिताः कुलक्रमागता व्यवसाया अवश्यं परिवर्तनीया इति साट्टहासमुद्घोष्य शास्त्रनिषिद्धकृतेः पुरस्कारं कुर्वंति ।

शास्त्रीयवर्णजात्युपेतभारतीयमानवसमाजस्य कर्तव्यकर्मणामधिकाराणां च पार्थक्ये सत्यपि मनुष्यत्वादिना किमप्यव्यावर्तकं साजात्यं मत्वा धर्मे विषये छिन्नलांगूलभूरिमायवञ्जनता प्रतारयितुं प्रयतंत इत्यहो दुरदृष्टं तेषाम् । यस्मिन् देशे कुपरिणामिनं सर्वसाम्यवादमंधतया पुरस्कृत्य कथं, चिदेकवर्णः समाजो विरच्यते तत्र मनुष्यत्वेन साजात्यं यद्यप्युच्चैरुद्घोष्यते । तथापि वाङ्मात्रमेव तत् । प्रत्यक्षव्यवहारे त्वयं पाश्चात्यः, अयं पौर्वात्यः, अयमाग्लः, अयं हिंदुः, अयं शार्मण्यः, अयं रोषायणीयः, अयं जयप्रणीयः, धनीदरिद्र इत्यादिवैषम्यं तत्प्रयुक्तं च भीषण कलहादिकं प्रतिपद दृश्यत एव । इत्येनस्या दुरवस्थायां प्रत्यहमनुभूताया सत्यां सनातनधर्मीयैर्भारतीयैः पितृपितामहादिपरंपरया समागतां शास्त्रीयसमाजरचनां विहायाऽशास्त्रीया वैषम्यवर्धिनीमात्मघातकारिणीं समाजरचनामालिंगितुमव्यापारेषु व्यापारः कस्माद्विधेयः । अर्थान्नैव कार्य इत्येव सम्यक् ।

अथ साम्प्रतं विद्यमानेषु स्पृश्यजनेषु वर्णसंकरो न दृश्यते चेत् । अस्पृश्यताया निवारणेनास्पृश्येषु स्पृश्येषु सत्सु संकरः स्यादिति नैवाऽऽशंकनीयम् । यस्मादस्पृश्यतोन्मूलनसंकरयोर्न कोऽपि संबंधोऽस्ति । तथैवास्पृश्यताया उन्मूलनेन वैदिकसंस्कृतेर्नाशोऽपि न स्यात् । प्रत्युत विनाशोन्मुखायास्तस्या अस्पृश्यतानिवारणेन संरक्षणमेव भविष्यतीति केचन प्रलपंति । तत्रोच्यते—

आत्मतत्वकर्मतत्त्वयोरधिगमः, यथाधिकारं कर्मणः पार्थक्यम्, कुलपावित्र्यम्; कौटुंबिकी सुस्थितिः, कायमनसोः शुद्धिः, सात्त्विकी प्रवृत्तिः, आध्यात्मिकोन्नतिरित्यादीनि वैदिकसंस्कृतेर्धर्मस्य वा मूलतत्त्वानि । तेषा परिपालनार्थं पृथक् पृथक् प्राकारा उपदिष्टाः संति । तत्रोद्वाहनिर्बंधः प्रथमः प्राकारः, अशनपानस्पर्शनिर्बंधा उत्तरोत्तर बाह्याः प्राकाराः । यवनादिसंसर्गनिर्बंधस्तु सर्वतो बाह्यः प्राकार. । स च यदाऽस्माकं नि्धो गृहकलहसमये सहाय्यार्थं ते समाहूतास्तदारभ्यैव भग्न. । यतस्तदानींतैर्विशेषतो भारतवर्षमाक्रांतम् । अथ

पुनरपि भारतीयैः शिवरायप्रभृतिभिः क्षत्रियवीरैः सघीभूय निर्दिष्टानतः-प्राकारान् परिपाल्यैव स्वराज्यं संस्थापितम् ।

अथ कियता कालेन पाश्चात्त्या वाणिज्यमिषेणात्र भारते समागताः । तेऽपि सहाय्यार्थमाहूता अभवन् । तैर्धूर्तैस्तु भारतं दृढतरमाक्रान्तम् । इदानीं पुनरपि स्वाराज्यप्राप्त्यर्थं यत्नः प्रचलितो दृश्यते । किं तु स्वाराज्यरूपिणः प्राकारस्य विरचनसमये तत्सिध्यर्थमंतस्थितप्राकाराणां समूलभगाय सर्वत्र सवेगं यत्नः प्रक्रांतो दृश्यते । स्पर्शास्पर्शनिर्बंधाख्यः प्राकारो मनुष्यत्वादिना माजात्यावलंबनटंकेन भङ्क्तुमिष्यते । अयमेकः प्राकारो भग्नोऽप्यन्ये विवाहादि-निर्बंधादयः प्राकारा नास्माभिर्विदीर्यंत इति केचन वीरा ब्रूयुः । किंत्व-स्पृश्यतोन्मूलने बद्धपरिकराणां त्रिभुवनैकवीराणां विचारस्य भाषणस्य कृतेश्च साकल्येन समालोचने कृते ते न केवलमस्पृश्यतानिवारकाखिखडकीर्तयो वीर-शिरोमणयः । अपि तु जातिविध्वंसका संकरकारिणश्चेति व्यक्तं परिदृश्यते तेषां प्रयत्नतः । तथा हि–

स्पृश्या अपि येषां देवमदिराणां गर्भगृहं गत्वा पवित्रतमां देवमूर्तिं स्प्रष्टुं न शक्नुवंति । तत्रास्पृश्यान् बलात्कारेण प्रवेश्य तैर्देवमूर्तेर्भ्रष्टतापादनं, नैवेदमस्पृश्यताया निवारणम् । अपि तु जातिभेदविध्वसनमेव । किंच नानेन दुश्चेष्टितेन शास्त्रीयं जन्मसिद्धमस्पृश्यत्वं कदाप्यपगच्छेत् । परस्परं द्वेषः परं वर्धेत । अस्पृश्यतोन्मूलनाध्वर्युणा स्वीयतनूजस्याऽसवर्णविवाहेन यः प्रतिलोमसंकरः ससाधितः । तद्धर्म्यमिदं लग्नमित्यप्यपत्रपतयोद्घोषितम् । तथा–कस्याप्येकस्या अस्पृश्यकन्याया ब्राह्मणयूना साकं लग्नं कारितम् । किमेतदस्पृश्यतानिवारणम् । केवलमिदं वर्णसंकरकारि दुर्वर्तनमित्यत्र न संदेहः । मदमत्तय ऊर्णायुरिव गर्ते पतंतीत्यन्यदेतत् ।

यावन्मनुष्यत्वेन सर्वे समाना इत्यमगलोदर्कस्य समानाधिकारवादस्य समाजे प्रसरो नासीत् । यावच्च प्रत्येकेन मानुषेण स्वीयवर्णजातिविहित-धर्मेण वर्तितव्यम् । इति शास्त्रोपदिष्टं भावुकं तत्वं निराबाधं प्रचलितमासीत् । तावत्स्पृश्यजातिषु संकरस्यावसर एव नाभवत् । साप्रतं केनाऽपि साम्य-

वादमुद्घोष्य यथेच्छमधिकारो ग्राह्य इत्युच्छास्त्रं व्यक्तिस्वातंत्र्यं मनसि दृढं धृत्वा स्वैरं तांडवे कृते कोऽपि निर्बंधः स्थातुं न प्रभवेदिति।

अत्रैव भारतीयार्यसंस्कृतेर्विनाशबीजं तिष्ठति । पूर्वजैरंतःप्राकारान् संरक्ष्य बाह्यं स्वाराज्यप्राकारं विरचितुं यत्नः कृतः । अंतःप्राकारपरिरक्षणस्य तेषामसाधारणाधारो वेद एव। तस्यैव प्रामाण्यमुत्क्षेप्तुं परिवर्तनवादिना तुच्छः प्रयत्नोऽवलोक्यत इदानीम् । केचनाऽऽत्मानं पंडितमन्याः परिवर्तनिनो मनसि वेदप्रामाण्यमस्वीकृत्य बहिःपरं वेदविषयिणीं वंध्यामादरबुद्धिं यथेच्छ प्रदर्शयंति । अन्ये तदपेक्षयापि पुरतो गत्वा वेदादिग्रंथजातं तुच्छं मन्वते । महाभागाः केऽपि तद्दग्धुमप्युद्युक्ताः श्रूयते ।

अस्पृश्यतानिवारणेन साकं सहभोजनानि स्वैरं नृत्यंति । असवर्ण-रजिस्टरस्पृश्यास्पृश्यलग्नानि महताऽऽडंबरेण समाजे प्रक्षिप्तपदानि दृश्यंते । तथैतान् सर्वान् दुराचारान् राजकीयनियमैः स्थिरीकर्तुमपि दुरुद्योगा उप-क्रम्यंते । तस्मादस्पृश्यतोन्मूलनेन जात्युच्छेदसंस्कृतिनाशवर्णसंकरा नैव स्युरित्याशापोषणं निशि कोशबद्धद्विरेफविचिंतनवद्व्यर्थमेव केवलमिति न । अपित्वात्मघातकरमित्यवधेयम् । अस्पृश्यतानिवारणात्मकस्यास्य दुष्प्रयत्नस्या-नुपृष्ठमेवाहारोद्वाहयोर्निर्बंधोच्छेदस्य मुसलप्रवेशस्ताडवं विधास्यति । न हि न हि विदधात्येव । पारतंत्र्याज्जीवनकलहः प्रवृद्ध इत्युक्तानिर्बंधान् भङ्क्त्वा तस्य कलहस्योपबृंहणं तु सर्वनाशकरमेव ।

पाश्चात्त्यानां समाजे व्यक्तिस्वातंत्र्यतत्वं यदा नूतनमेव प्रविष्टम् । तदा तस्य सर्वत्र जयजयकारः संवृत्तः । परं व्यक्तिस्वातंत्र्यसर्वसमतातत्त्वाभ्यां समाजे वैषम्यमेव प्रवृद्धमित्यनुभवो यदा समागतः । तदैते तत्वे पश्चात्पतित्वा समाजसत्तावादः पुरतः प्रादुर्भूतः । अधुना कर्तव्यतत्त्वस्य पुरस्कारः प्रक्रांतो वर्तते । अर्थात्तत्र समाजरचनाया क्रमशउत्क्रांतिर्भवतीति प्रतिभाति ।

भारतीयसमाजस्तु कर्तव्यस्याऽभेद्याया मूलभित्तौ विरचित इति समु-त्क्रांतेः पथि प्रकाममग्रे गतः । इदानीं तु व्यक्तिस्वातंत्र्यसदृक्षाणां तुच्छतर-तत्त्वानां तस्मिन् बलात्कारेण प्रवेशन तस्य पश्चादाकर्षणमित्यविवादम् ।

अस्पृश्यतानिवारणं प्रत्येनादर्शस्यैव दुःस्तत्त्वस्याचानुकरणन्यायेनाऽऽधारो गृह्यते। तस्य फल तु— " अधस्थेवाधलग्नस्य विनिपात. पदे पदे " इति सुप्रसिद्धमेव । 'प्रत्ना अधश्रद्धा इति नूतनैरुच्यते । परं तेषां नूत्नानामधश्रद्धातः प्रत्नाना साऽधःश्रद्धा भृशं समीचीना । यतो नूत्नाना सा निस्सारसैकताधारा। प्रत्नाना तु घनतरशिलामयप्रदेशाऽऽधारेति विशेषः। सनातनिनः परितो वर्तमाना परिस्थितिं नावलोकयंतीति यावदवितथम्। तावन्नूतनाः परिवर्तनिनः समाजस्य वास्तव कुशलं कस्या सस्कृतावस्तीत्यस्य स्वार्थाधतया विमर्शमेव न कुर्वंतीत्यधिकतरं सत्यम् । नेतृषु द्विधादृष्टिरेव समाजस्वास्थ्यकरीत्यवधेयम् ।

पाश्चात्त्यप्रदेशेषु समाजस्थैर्याय निर्दिष्टाना व्यक्तिस्वातत्र्यसर्वसाम्यप्रभृतीना तत्त्वाभासाना प्रतिपद परिवर्तनान्यद्यापि दृश्यंते। तेन नाद्यापि स्थैर्यं लब्धम्। तच्च स्थैर्यं वेदोदितानामाचारविचारादिसाधनानामवलंबनमंतरेण नैव सिद्ध्येदिति केषाचित् पाश्चात्त्यानामेव तत्त्वज्ञानामुक्तिरस्तीत्यतः परिवर्तनवादिभिस्तावत्पर्यंत प्रतीक्षा कार्या । स्वैर वलीमुखवच्चापलं न कार्यमित्येव सम्यगित्यावेद्याल कुर्म इति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

# ॥ मनोबुद्धिविमर्शः ॥ (३२)

**यथा प्रयत्नः क्रियते बाह्यार्थोपार्जने नरैः ।**
**तथा प्रयत्नः कर्तव्यो मनोबुद्धिविवर्धने ॥**

अथ साप्रतं कैश्चिद् विज्ञविशेषैर्मानसशास्त्रस्य भृश वृद्धिं विधाय तच्छास्त्रं जनाना प्रात्याहिकव्यवहारे समुपयुज्य त संशोधयितुमुद्यक्तास्ते विज्ञाः परिदृश्यंते । मानुषाणा मनस्सु दौर्बल्यदुर्गुणयो रोगाऽऽरोग्ययोराशानिरा-

शयोरुत्साहाऽऽत्मविश्वसयोश्च, एवमन्ययोरपि मिथोविरुद्धयोर्द्वंद्वयोर्यथायथं बीजानि संति। तेषामुपचयेनापचयेन वा स्थूलशरीरे तन्निर्वर्त्ये व्यवहारे तेषां परिणामो जायत इति विज्ञाय स्थूलशरीरस्थितदोषनिवर्तकोपायमुपेक्ष्य दोषखनिभूतेऽन्तर्गतमनस्येव दोषनिबर्हकोपचारविधायकं शास्त्रं तैर्विज्ञैरुत्कर्षं प्रापितम्। तथा राष्ट्रीयसामुदायिकमनसः स्वाभीप्सितविशिष्टपथप्रवृत्तिशिक्षणार्थं नूत्ननूत्ना इतिहासाः शिक्षणालयोपयोगीनि विविधपुस्तकानि नैकविधकाल्पनिककथासंदब्धानि पुस्तकानि विचित्राश्चित्रपटाश्चेत्येवमादीनां स्वाभिमतपथगमनसाधनाना हेतुपुरःसर प्राचुर्येण दृढा योजना कृताऽस्ति तैः। तथा तदनुकूलप्रवचनव्याख्यानादिभिः सर्वत्र यथा तस्या योजनायाः प्रसारो भवेत्तथा साभिनिवेशं बहुल प्रयत्न विदधति च ते विज्ञाः।

तात्पर्यम्—व्यक्तिश. समुदायतश्च मनस्स्युपचारं विधातुं सांप्रत प्रायशः सर्वत्र सर्वेषा प्रयत्ना· परिदृश्यंते। ते च यत्ना न्यूनाधिकभावेन सफला अप्युपलभ्यंते।

इयं मनस्युपचारविधानस्य प्रथा साप्रतमभिनवैव निर्गतेति न। अपित्वनादिकालमारभ्यास्माकं पातंजलयोगशास्त्रं श्रुतिप्रमाणकामिमां योजनामुपदिशत्येव। मत्रशास्त्रेण तत्रशास्त्रेण चास्या एवावलंबः कृतः। किं तु ताभ्या शास्त्राभ्यामाधिभौतिकव्यवहाराय प्राधान्यमदत्वाऽऽध्यात्मिकार्थाया प्रस्थानं प्रदत्तमित्येव पार्थक्यम्। योगाभ्यासेन या अतींद्रियाः शक्तयो जागृता भवंति, ताभिः प्रसारितं मोहजालं निरस्य स्वीयाऽऽध्यात्मिक्युन्नतिः संसाधनीयेति शास्त्राणा परमं तात्पर्यम्। स्वीयधर्मपथा गमनसमये मंत्राणामनुष्ठितौ योगाभ्यासकाले च साधकेन सह ऋद्धिसिध्योः साक्षात्समागमो न चेत् 'तयोर्मोहवश्येन साधकेन नैव भाव्यम्' इत्युपदेशः शास्त्रेण कृतो निरवकाश एव भवेत्।

साप्रतमन्यदेशीयानां मानुषाणां तथेदानींतननाना केषाचिदेतद्देशीयानामपि पुंसां व्यवहारसिद्धेर्महत्त्वं यथा भासते तथा तस्या महत्वमस्माकं न प्रतीयत इति न। किं बहुना, केनाप्युपायेनैहिकोत्कर्षः संसाधनीय इयमेव

-सामान्यजनाना मनीषा विद्यते। एता सहजामिच्छामालोच्यैव काम्यकर्मोपदेशः शास्त्रेण कृतः। तत्रापि सात्विका तामसश्चेत्यर्थाद्दाक्षिणो वामश्चेति द्वौ पंथानौ विद्येते। तत्र वाममार्गेण गन्तॄणामंते महदनिष्टं जायत इति तस्य मार्गस्याव-लंबनं न कार्यमिति शास्त्रमेव कथयति। एवमपि वाममार्गं सप्रपंचं निरूप्य तदवलंबनेन किं किमिष्टं फलं साधयितु शक्यं तदपि शास्त्रेण प्रतिपादितम्। सर्वस्यैतस्य निष्कृष्टोऽर्थ इत्थम्—दृढतरानिश्चयेन मनसाऽलौकिकमार्गावलंबनं यथाविधि कृतं चेत्। मंत्रतंत्रकर्मोपासनाभिर्मनसि लीनाः शक्तयः समुत्थिता भवंति; जगत्कल्याणकारिदेवतानुग्रहेण च समभिलषित फलं साधकेनाशु लभ्यत इति। किं त्विदं सर्वं मनसो बलायत्तम्। मनो बलशून्य वा दुर्बलं चेन्न किमपि सिध्येत्। अतो यथा मनः सुसमर्थं भवेत्तथा यतितव्यम्।

आदौ मनसि स्वभावतः कृतपदान् दुर्वासनापापसंकल्पाऽश्रद्धाना-स्तिक्यक्रोधलोभमत्सरादीन् दोषान् यत्नेन सुदूरं निरस्य तत्स्थाने सद्वासना-पुण्यसंकल्पश्रद्धाऽऽस्तिक्यदयाक्षमाशाल्यादय. सद्गुणा महता प्रयत्नेन समुत्पादनीयाः। एतत्सर्वं शनैः शनैः संपादनीयम्। मनसोऽभ्यासं विशेषतः कृत्वा तस्य सहजां सात्विकीं राजसीं तामसी वा प्रकृतिं ज्ञात्वा तदनुसारेण मंत्रतंत्रोपासनाद्युपायानां योजनमावश्यकम्। सर्वा देवताः सर्वे च मंत्राः सर्वैः साधयितुमशक्याः। का देवता कश्च मंत्रः कस्य सुसिद्धो भवेत्तत्सिद्धारिच-क्राज्ज्ञातव्यम्। ऋणी धनी वा को मंत्र इदं ऋणिधनीचक्राद्विज्ञायते। तथा कुलाकुलचक्रादपि मंत्रादिसिद्धेः परिचयो भवति। तिथिनक्षत्रदेशकालवारा-दीनामपि तत्र विचारोऽवश्यं कर्तव्योऽस्ति। इत्येव रीत्या यथाविध्यनुष्ठान उपा-सने च कृते देवतादीनां प्रसादेन स्वेष्टसिद्धिर्निष्प्रतिबंधं जायते।

आधुनिकानामस्मद्देशीयानामन्यदेशीयाना वा मानसशास्त्रज्ञाना पुंसा देवतादिषु श्रद्धाया असत्वात्ते केवलं मनसो गुणधर्मेभ्य एव प्राधान्यं ददति। देवादीना कल्पनाया कृतायामपि तस्याः कल्पनाया मनसि क. परिणामो भवतीत्यस्यैव विशेषतः स्वीयमत्यनुसारेण चर्चां कुर्वंति ते विज्ञाः। यस्य तु देवतामंत्रादिषु दृढं श्रद्धा वर्तते। तस्य तदुपासनायाः फलं नियमेन भवेदेव।

केवलं स्वीयमनःसामर्थ्ये भरं स्थापयतः पर्यवसाने कदाचिदनिष्टस्यापि संभवः। कोऽपि हि वा प्राकृतसामर्थ्ययुतः पुमान् भवतु। सृष्ट्यतर्गतनैकविधशक्तीनां पुरतस्तेनागत्या विनम्रेण भाव्यमेव। सामर्थ्यस्यापर्याप्तत्वेन साध्यसिद्धेरभावे सति तादृशस्य पुंसो धैर्यच्युतिर्जायते। गलितधैर्यः स पश्चात्तापदग्धो भवतीत्यहो कष्टम्। यस्य तु देवतादिषु सम्यक् श्रद्धा विद्यते। तस्य मनसीत्थ विश्वासः-यन्मदीयेयं देवता सर्वज्ञा सर्वशक्तियुता सृष्ट्यधिष्ठात्री, भक्तानुग्रह-कर्त्री, प्रेम्णा योगक्षेमसंपादिनी, अनन्यभक्ताय वरदात्री चेति। देवताया भृश विश्वासश्चेदेव सा साधकमहंकारदोषात्प्रमोचयेदात्मविश्वासं वर्धयेच्च। इत्थमुपासकः पुमानुपासनाबलेन दैव्याः शक्तेः स्वेष्टासिध्यर्थमानुकूल्यं संपादयाति। इदमदृश्येन सूक्ष्मेण पथा समवाप्यते। न प्रत्यक्षेण स्थूलेनेति। लौकिकालौकिकेष्टेच्छुना केनापि मनसः सामर्थ्योपचयकर्तृ यथाधिकारमुपासनायाः समाश्रयणं कार्यमिति। अथ विमर्शात्मकं मनो निश्चयात्मिका च बुद्धिरित्यनुभवानुगाम्याप्तवचनात् स्थानादप्यभ्यर्हित तत्त्व बुद्धिरिति प्रसिद्धमेव। यथा बुद्धिस्तथा कर्म, यथा कर्म तथा तत्फलं शरीरं च। यथा देहस्तथा कर्तृत्वं तथा सुखं दुःखं च।

पशुपक्ष्याद्यपेक्षया मनुष्येषु यथा विशिष्टबुद्धिमूलकं पार्थक्यं विद्यते। तथा परस्परं मनुष्येष्वपि बुद्धिविशेषप्रयुक्तमेव मुख्यं पृथक्त्वमस्ति। सद्-सद्विवेकेन यस्य बुद्धेर्वैशारद्यं संप्राप्तं तस्य बुद्धेरितरैरज्ञातमपि वस्तु सम्यग् ज्ञात भवति। सर्वोपरि प्रभुत्व संपादयितुं पार्यते च।

असाधारणबुद्धिवैभवेनैव महांतो राज्यकर्तारः सेनापतयो व्यापारिणः संशोधकास्तत्त्वज्ञा. कलावंतो दैहिकबलवंतः साधवश्चेत्यादयः पंचजनाः संतोऽपि चिरस्मरणीया अनुकरणार्हाः सर्वथा पूज्याश्चाभूवन्। मनुष्येषु दैहिक-बलस्य क्वचिदपवादं विहाय प्रायश पार्थक्यं नास्ति। सामान्यतः सर्वे समानबला एव। किं तु समधिकबुद्धिसामर्थ्यं यस्मिन्दृश्यते। तत्समकालमेव स श्रेष्ठः, अपरस्तदभावात्कनिष्ठश्च भवति। अत एव 'प्राणिना बुद्धिजीविनः' इत्युपदिष्टं भगवता मनुना। अत एव च—

ये याताः किमपि प्रधार्य हृदये पूर्वं गता एव ते
ये तिष्ठंति भवंतु तेऽपि गमने कामं प्रकामोद्यमाः ।
एका केवलमेकसाधनविधौ सेनाशतेभ्योऽधिका
नंदोन्मूलनदृष्टवीर्यमहिमा बुद्धिस्तु मागान्मम ॥

मु. रा. ना. अंक १

इत्युक्तवानार्यचाणक्यः ।

महाराजः समुन्नतमहार्हसिंहासने विराजते । भृत्यादयस्त्वनावृतभूमावेव तिष्ठंति । उभावपि मनुष्यौ । तर्हीदं वैषम्य कुतः ? ज्ञानस्य न्यूनाधिकभावेनेदं जातमिति तस्योत्तरम् ' बुद्धिजीविनः ' इति प्रदत्तमेव । अस्माकं धर्मशास्त्रे ज्ञानस्यातीवमहत्वमुपवर्णितम् । " न हि ज्ञानेन सदृशं पवित्रमिह विद्यते " इत्थं ज्ञानस्य श्रैष्ठ्य भगवता मुक्तकठ गीतम् । " दृष्टांतो नैव दृष्टस्त्रिभुवनजठरे सद्गुरोर्ज्ञानदातु " इत्येव भगवत्पादैरपि ज्ञानदानप्रयुक्तं सद्गुरोर्निरुपमत्वं संस्तुतम् ।

यद्यत्कर्म यूयं करिष्यथ । पर्यवसाने तेन तेन कर्मणा ज्ञान एव परिणतेन भाव्यम् । कर्म तथा कार्यम् । यथा तस्मात्कर्मणो ज्ञानानुकूला भूमिकोत्पद्येत । ज्ञानार्थं सकलभोगोपर्यपि पादप्रहारः कार्य इति शास्त्रकृद्भिः कथितम् । स्वर्गोऽपि ज्ञानस्यार्गलाभूत इति शास्त्रकृद्भिस्तुच्छीकृतः सः । ज्ञानं हि भगवतः स्वरूपमेव । भगवान्नित्यचिद्रूपः । भगवद्भक्तेर्वैभवमत्यर्थं महदिदं सत्यमेव । किं तु—तस्याः सकाशाज्ज्ञानोत्पत्तिश्चेदेव तत्तथेति ज्ञेयम । कर्मोपासनायोगयागतपतीर्थव्रतादीनि च सर्वाण्येतानि ज्ञानस्यांगानीत्येवाऽऽदृतानि संति । नित्यनैमित्तिककर्माणि ज्ञानार्थमेवानुष्ठेयानि । सदाचारोऽपि ज्ञानप्राप्त्यै परिपालनीयः । आहारविहारादेः शुद्धतापि ज्ञानार्थमेव संरक्षणीया । इंद्रियनिग्रहादिकं तत्प्रयुक्त च कष्ट ज्ञानमुद्दिश्यैव सह्यम् । ब्रह्मचर्यव्रतपालनमपि ज्ञानस्य सिध्यर्थमित्येव ज्ञानस्य निरवधिको महिमा समुज्जृंभते । इदमभ्यर्हितं ज्ञानं यया लभ्यते । ता मातरमिव ज्ञानप्रसू बुद्धिमादौ महता प्रयत्नेन संरक्षतेति शास्त्रकृतामुपदेशो विद्यते । प्रत्यहं यथाधिकारं या भगवदुपासनाऽवश्यं विधेया सा बुद्धेः समुचितस्फूर्त्यर्थमेव शास्त्रेणोपदिष्टा ।

यच्च गुर्वादीना सेवनमुक्तं तदपि बुद्धेः सामर्थ्यस्योपचयार्थमेव । प्रज्ञा इष्टार्थस्य प्रापिका । श्रेयः संपादयित्री च प्रज्ञैव । तदुक्तम्—

" प्रज्ञा सयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति " इति । म. भा. ।

बाह्यार्थसंपादने यावान्यत्नो विधीयते पुंभिः । तदपेक्षया समधिक-प्रयत्नो बुद्धिविवर्धने कर्तव्यः । बुद्धेः परिशुद्धत्व समर्थीकरणं चेदं समस्तपुरुषार्थप्राप्ते प्रकृतं साधनम् । अद्यास्माक याऽवनतिर्दृश्यते । सा बुद्धितत्व-मस्माभिः पराधीनं कृतं तस्य परिणामः । भारतीयसंस्कृत्युपरि येऽनर्थाः सहसा पतति तेऽस्माक बुद्धिर्दुष्टकीटैराक्रान्तेत्यागच्छंति ।

बुद्धेः सरक्षण हि राष्ट्रस्यैवोत्तमं परिपालनं बोध्यम् । येषा स्वीयकुले कर्तृत्वशालिनः पुंसः समुत्पत्तिर्भाव्येत्यभिमतम् । तैरात्मनः कुले गृहीतजन्मना कुमारकुमारीणा बुद्धिः प्रथमं सयत्न परिपालनीया । येन तेषा शील विपर्यस्येत, अधर्माभिरुचिरुत्पद्येत, विवर्धेत वा तादृशः कोऽपि विचारस्तेषा चित्ते यथा नाकुरितो भवेत्तथा यत्नो विधातव्यः पालकैः । पुराऽस्माक ब्रह्मवृंदः स्वीयाऽऽत्मजाना बुद्धेः परिपालने बद्धादर आसीत् । किंत्विदानीं तस्य दुर-दृष्ट रंहसा पुरतः प्रक्षिप्तपादं दृश्यते । तेन तेषा सुशिक्षणविषये ब्रह्मवृंदस्य प्रायशः प्रमाद एव दरीदृश्यते । स्वात्मजेभ्यः शिक्षण न ददाति दापयति वेति नार्थस्तस्य । अपि तु स्वोचितं सुशिक्षण न ददातीत्यर्थः । येन शिक्षणेन तेषा मनस्सु ज्ञानाभिरुचिरुत्पद्येत, सज्जनादय संभावनार्हा इति सुदृढा मतिः स्यात्, आत्मनः शारीरं बौद्धिकं च सामर्थ्यं सरक्षितुं संवर्धयितुं च मन-स्याऽऽस्था जायेत, पित्रादीना शासने स्थित्वा तेषामनुभवं सफल कर्तुमत्यु-त्कटेच्छया यत्नं कुर्यात्, तेजस्वितया किमपि विशिष्ट लोकोपकारि कार्यमग्रे मत्तो भाव्यमीशकृपयेति सुदृढा भावना तन्मनसि कृतपदा भवेत्, उत्साहाऽऽ-त्मविश्वासावुपचितौ स्यातामेवमादिप्रकार शिक्षण तेभ्य प्रदातु सुव्यवस्था साम्प्रतं नोपलभ्यत इत्यतो युवकाना बुद्धिरसन्मार्गानुगामिनी प्रायशः संवृत्ता समवलोक्यते ।

विनामूल्य (मोफत) शिक्षणग्राहग्रस्ततया तादृशशालायां शिक्षणार्थं स्वात्मजान्प्रेषयंतः पित्रादयः पालकास्तत्रत्याना शिक्षकवर्याणा योग्यतावर्तन-स्वभावादिकं च कीदृशमित्यस्य विमर्शं जात्वपि न कुर्वंति वित्तलोभवशातः। तथाऽऽत्मनः सुताः कीदृक्शीलैरन्यैः कुमारैः सह शिक्षणं गृह्णंति, तेषां मनसि बुद्धौ वाण्यां शरीरे चाहारविहारयोः शीले च कीदृशः संस्कारस्तेन शिक्षणे-नोत्पद्यत इत्यादेर्निरीक्षणं कदापि न विदधति। एतादृशेन पालकादीना प्रमादेन भाव्यमानो दुष्परिणाम इत्थं सुप्रसिद्धः— कुमारकुमारीणा बुद्धिर्नितरा भ्रष्टा भवति। तस्यां च भ्रष्टाया तेषा तासा च मानसो वाचिको दैहिकश्च व्यापारो भ्रष्ट एव भविता। तादृशाच्च व्यापाराद् भृशं भीषणाऽनर्थपरंपरैव भवित्रीत्यस्य निपुणमालोचन कृत्वा सर्वथा बुद्धेः सम्यक् संरक्षणमेव भविष्य-त्समुन्नतेर्मूलकरणमित्याकलय्य स्वात्मजाना कल्याणाऽऽकांक्षिभिः पित्रादिभि-स्तेषा बुद्धिः सम्यक् परिपालनीया। तेनैवेष्टसिद्धिर्भविष्यतीत्यावेद्योपसंहारे—

ज्ञानवानेव कर्माणि कुर्वन् सिद्धिमवाप्स्यति।

इति भारतीयं वचनमनूद्यालं कुर्म इति शम्॥ श्रीः॥

---

## ॥ श्रीः ॥

# ॥ पंचमहायज्ञविमर्शः ॥ (३३)

**'महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः।**

**मनुस्मृति २।२८**

अथास्मिन्नवखंडभूमंडलमंडनायमाने वेदादिशास्त्रविहितैहिकामुष्मिकेष्टा-निष्टफलप्रदकर्मकांडस्थलभरतखंडे पितृपितामहाद्यविच्छिन्नपरंपरया गृहीत-जनुषां द्विजानां पांचभौतिका तनुः सच्चिदानंदात्मकब्रह्माधिगमयोग्याऽर्थात्परमे-

नरानुग्रहार्हा प्रत्यहमनुष्ठितैः कैः कर्मभिर्भवतीति ऋषीणां प्रश्ने भगवान् मनुराह— महायज्ञैरिति ।

यद्यपि 'गर्भाधान पुंसवन सीमंतोन्नयन जातकर्म नामकरण अन्नप्राशन चौल उपनयन वेदव्रतचतुष्टय समावर्तन सहधर्मचारिणीसंयोग देवपितृमनुष्यभूतब्रह्मयज्ञपंचक अष्टका पार्वणश्राद्ध श्रावणी आग्रहायणी चैत्री आश्वयुजीति सप्त पाकसंस्थाः, अग्न्याधेयम् अग्निहोत्रं दर्शपूर्णमासौ आग्रहायणं चातुर्मास्यानि निरूढपशुबंध सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोम अत्यग्निष्टोम उक्थ्य षोडशी अतिरात्र आप्तोर्याम वाजपेयेति सप्त सोमसंस्था इत्येते चत्वारिंशत्संस्काराः । तथा दया क्षांतिः अनसूया शौचम् अनायासः मंगलम् अकार्पण्यम् अस्पृहेत्यष्टावात्मगुणाश्च । यस्यैते अष्टाचत्वारिंशत्संस्काराः स पूतः सन् ब्रह्मणः सालोक्यं सायुज्यं चाप्नोतीति गौतमस्मृतावुक्तम । अथापि तदंतर्गताना तेषा पंचमहायज्ञानां वैशिष्ट्यज्ञापनार्थं महायज्ञैरिति विशेषतो निर्देशः कृतः । अत एव महर्षिणा गौतमेनापि 'यस्य तु खलु संस्काराणामेकदेशोऽप्यष्टावात्मगुणाः' अथ स ब्रह्मणः सालोक्यं सायुज्यं च गच्छतीत्युक्तमुत्तरत्र । अत एव च गर्भाधानप्रभृतयः षोडश संस्कारा एव नित्या अकरणे प्रत्यवायज्ञापका इति निबंधकृद्भिस्तत्र तत्राभिहितम् ।

ते च महायज्ञाः 'अथातः पंच महायज्ञाः । देवयज्ञो भूतयज्ञः पितृयज्ञो ब्रह्मयज्ञो मनुष्ययज्ञ' इति । 'भूतपित्रमरब्रह्ममनुष्याणा महामखाः' तानेतानहरहः कुर्वीत । 'हावयेन्न तु हापयेत्' इत्याश्वलायनगृह्यसूत्रतो याज्ञवल्क्यस्मृतितश्चावगंतव्याः । तेषां स्वरूपं तु--' तद्यदग्नौ जुहोति स देवयज्ञः । यद्बलिं करोति स भूतयज्ञः । यत् पितृभ्यो ददाति स पितृयज्ञः । यत्स्वाध्यायमधीते स ब्रह्मयज्ञः । यन्मनुष्येभ्यो ददाति स मनुष्ययज्ञः' इति सूत्रकृद्वचनाज्ज्ञेयम् । इत्येते पंचमहायज्ञा मानवैर्यथाधिकारं यथासंभवं च प्रत्यहमनुष्ठिताश्चेदेव ते तत्तत्तन्वच्छिन्नात्मनि निरतिशयभगवत्कृपासंपादका भवंति । नान्यथेत्युक्तभगवन्मनुवचनात् " यज्ञशिष्टाशिनः संतो मुच्यंते सर्वकिल्बिषैः " इति भगवदुक्तेश्च निःसंदिग्धमत्रगम्यते ।

यथैते शास्त्रविहिता. पंचमहायज्ञाः श्रेयस्कराः संत्यनुष्ठातॄणा द्विजानां तद्वदन्येऽपि शास्त्रोपदिष्टाः सर्वसाधारणाः सर्वेषामेवोक्तकल्याणप्रदाः पंचमहामखा मनोवाक्कायैर्नियतमनुष्ठेयाः समुपलभ्यंते। तथा हि–

एकदा सर्वे व्यासशिष्या द्विजा लोकानां हितेच्छया गुरुं व्यासं प्रणम्य सादरमित्थं पप्रच्छुः—

पुण्यात्पुण्यतमं लोके सर्वधर्मेषु चोत्तमम्।
लभ्यं चाकष्टकं शुद्धं वर्णाना मर्त्यवासिनाम्॥
यं कृत्वा सर्वथा पूज्यः स्यान्नाके चेह वै पुमान्।
तद्वदस्व क्रतु ब्रह्मन् कृपया शाधि नः प्रभो॥

इति शिष्यप्रश्नानंतरं क्षणमात्रं ध्यात्वा तदनुकूलमाम्नायोपदिष्टं धर्म्यमुत्तरमाहगुरुर्व्यासमहर्षिः। तद्यथा—

पंचाख्यानं प्रवक्ष्यामि शृणुध्वं तत्र पूर्वतः।
पंचानामेककं कृत्वा विंद्यान्मोक्षं दिवं यशः॥
पित्रोरर्चाथ पत्युश्च साम्यं सर्वजनेषु च।
कृतज्ञतेशभक्तिश्च एते पंच महामखाः॥

इत्येवं सर्वसुलभान् पुण्यतमानत एव मंगलप्रदान् वेदोपदिष्टानेव पंचयज्ञानभिधाय तत्र पित्रोरर्चात्मकं प्रथमं यज्ञमधिकृत्याऽऽह—

सर्वतीर्थमयी माता सर्वदेवमयः पिता।
मातरं पितरं तस्मात्सर्वयत्नेन पूजयेत्॥ इति।

यो हि मातर पितरं च मनोवाक्कायैः सर्वदा सेवते। नमस्करोति। प्रदक्षिणा कुरुते। तयोश्चरणतीर्थं पिबति। तस्य जन्मजन्मार्जितं कल्मषं क्षयं यातिं। पूतः पुण्यवान् भगवदनुग्रहशाली च स जायते। यस्त्वेतद्विपरीतवर्तनकृत्पुरुषाधमः स इह परत्र च निंद्यो भूत्वा महद्दुःखभागेव भवति। वृद्धं वृत्तिकर्शितं नेत्रकर्णाभ्यां हीनं पितरं मातरं च यौवना-

दिमदमत्ततयाऽनादृत्य यो दुर्वचो ब्रूते । कृतघ्नः स दुष्टात्मा निहीनान्त्यजादियोनिषु जनिमाप्य यावज्जीवं कष्टतरा दशां गच्छति । यस्तु पितरावनादृत्य तीर्थयात्रामुद्दिश्य स्वैरं संचरति । देवान् वा सेवते । स तयोः फलं नैवाप्नोति । पितरावुपेक्षमाणः स्वैरसंचारी यः सुतस्तस्य तद्भ्रमणं कीटवद्वृथैव भवति । अत्रेयमाख्यायिका श्रूयते—

नरोत्तमशर्मा कश्चन द्विजो वृद्धौ स्वपितरावुपेक्ष्य तीर्थसेवनेच्छया तत्तत्तीर्थस्थलेष्वटति स्म । तदा तस्य तीर्थस्नानवासांसि प्रत्यहमंबरे स्थिरं स्थित्वा प्रशुष्यंति स्म । तदवलोक्य तेनाद्भुतेन निमित्तेन महदहंकाराविष्टः सः—

'नास्ति खलु मत्समः पुण्यकर्मा कश्चित्'

इति वाक्यमूर्ध्वदृष्टिः सन् यावदुच्चारयति तावद्वृक्षाग्रे स्थितस्य बकपक्षिणो देहधर्मः ( विष्ठा ) तस्य तुंडोपर्यपतत् । तद्दृष्ट्वा क्रोधानलसंतप्तः स बकं शशाप । तत्क्षणं बकोऽपि काकतालीयन्यायेन गतासुः सन्नधः पपात । ततस्तस्य स्नानशाटी खे न तिष्ठति । न शुष्यतीति दृष्ट्वा परं विषादमगमत्सः ।

तदानीमेव हे वाडव 'मूकनामानं परमधार्मिकं चांडालं प्रति गच्छ । तत्र तव धर्मज्ञानं स्यात् कुशलं च ते भविष्यतीति' खे वागुदचरत् । तामाकर्ण्य तूर्णं मूकमंदिरं गतः स द्विजः 'शीतकाले यथा सुखं स्यात्तथोष्णोपचारेण निदाघे च शीतलोपचारेण मिष्टाशनादिविविधभोग्यवस्तुप्रदानेन च प्रत्यहं स्वपितरौ मनोवाक्कायैः शुश्रूषंतं पुत्रानुष्ठितसेवया तुष्टयोस्तयोराशिषमाज्ञा चादायानंतरं भुजंतं मूकं तत्कृतपितृसेवात्मकतपःप्रभावात् तस्यालये सदा निवसंतं भगवंत चावलोक्य भृशं विस्मितस्तं प्रत्युवाच ।

भो मूक, यदहं त्वां 'सर्वेषा शाश्वतं श्रेयः कथं स्यात्' इति पृच्छामि । तन्मे प्रवक्तुमर्हसीत्यतोऽहमत्राऽऽगतः । तस्मात्त्वं क्षणमात्रमित एहीति ।

ततोऽहमिदानी पित्रोरर्चामनुतिष्ठामि। त्वत्सकाशमागंतुं मे नावसरः। प्रस्तुता पित्रोः सेवा समाप्य ततस्तवाऽऽतिथ्यं विधास्ये। तावत् कृपयाऽस्मद्द्वारप्रदेशे तिष्ठेति मूकवचनं श्रुत्वा क्रुद्धः स द्विजोत्तम आह—

'धर्मतत्त्वजिज्ञासया समागतं ब्राह्मणं मामुपेक्ष्य पित्रोरर्चा ते समधिका प्रतिभाति किम्। न जानीषे त्वं ब्रह्मबलम्।' इति तस्याहंकारवचो निशम्य मूकोऽवदत्–

'वाडव, किं वृथा कुप्यासि। नाहं बकः। तव स्नानशाटी खे न तिष्ठति। नैव शुष्यति चेति खिन्नस्त्व वैहायसी गिरं श्रुत्वाऽत्राऽऽगतोऽसि। तिष्ठ तावत्। वक्ष्यामि ते हितम्। नो चेत् हे द्विजोत्तम, पतिव्रतासकाशे गच्छ। तां दृष्ट्वा तवेप्सितं सिध्येत्। इति।

अथ विप्ररूपधारी भगवांस्तत्राऽऽगत्य त प्रत्याह। 'अहं तस्याः पतिव्रताया गेहं प्रयामीति। स द्विजोऽपि क्षणं विमृश्य तेन सार्धं प्रस्थितो विस्मितः सन् पथि तं विप्ररूपिणं भगवंतं पप्रच्छ। 'किमर्थमस्मिंश्चंडालवेश्मनि स्त्रीजनावृते त्वया स्थीयते' तच्छ्रुत्वा भगवानाह–तव मानसं नाद्यापि शुद्धम्। पतिव्रतादिकं दृष्ट्वैव मां तत्वतो ज्ञास्यसी'ति श्रुत्वा का नारी पतिव्रता। किं तस्या लक्षणं माहात्म्यं च किम्। इति तेन पृष्ट आह स भगवान्–

'नदीनां जान्हवी श्रेष्ठा प्रमदाना पतिव्रता।
पतिव्रता च सा नारी या पत्युर्हिततत्परा॥
भर्तुराज्ञां न लंघेद्या मनोवाक्कायकर्मभिः।
आराधयेत् पतिं विष्णुं या पश्येत्सा पतिव्रता॥
कार्ये दासी रतौ वेश्या भोजने जननीसमा।
विपत्सु मंत्रिणी भर्तुः सा च भार्या पतिव्रता॥
इत्थं पतिव्रता नारी नित्यं पत्युर्हिते रता।
कुलद्वयस्य पुरुषानुद्धरेत्सा शतं शतम्।
गच्छ साध्वीगृहं विप्र वद कामं यथा तव॥

इत्यभिधायांतर्हिते तस्मिन् विप्रे स द्विजः शनैः साध्वीगृहं गत्वाऽऽतिथिरागतोऽहमित्युच्चैरब्रवीत्। तदाकर्ण्य यशस्विनी दयावती गृहस्वामिनी शुभानाम्नी सा पतिव्रता संभ्रमेण बहिरागत्य तं द्विजं दृष्ट्वा द्वारप्रदेशे स्थिताऽभवत्। पातिव्रत्यतेजोदेदीप्यमाना तामवलोक्य प्रमुदितः स वाडवो 'शाश्वतं हितं मह्यं ब्रूही' ति तामुवाच। ततः सा साध्वी- 'अधुना पत्युः परिचर्या प्रचलति। नावसरः स्वातंत्र्यं चास्माकम्। पश्चात्तेऽभीष्टं वक्ष्यामि। साम्प्रतमातिथ्यं गृहाणेत्यब्रवीत्प्रश्रयेण। तच्छ्रुत्वा 'हे कल्याणि, मम क्षुत्पिपासे न स्तः। उक्तं मदभीष्टं वद। नो चेत्त्वां शप्स्यामी' त्युक्तवति तस्मिन् द्विजे।

'हे द्विजवर्य, नाहं बकः। धर्मतुलाधारं गच्छ। पृच्छ च तं ते हितम्' इत्युक्त्वा सा पतिव्रता शीघ्रं गृहाभ्यंतरं गतवती।

अथ तत्रापि पूर्ववद्विप्रवेषं देव दृष्ट्वा सविस्मयं तत्समीपमागत्य तमपृच्छत् स द्विजः—

'यद्देशांतरे वृत्तं तत्तेन चाण्डालेनानया च साध्व्या कथितम्। कथमाभ्यां ज्ञातं तदिति मन्मनसि महान् विस्मयः समुत्पन्नः। अहो किमस्मात्परमाश्चर्यं जगतीति मुहुर्मुहुर्ब्रुवंतं त स भगवानवोचत्।

अतिपुण्यात्सदाचारात्तथेशकृपया द्विज।
अतीतानागतं वृत्तं ज्ञायते तादृशैर्नरैः॥
किमुक्तश्च तया त्वं तु वद तत्सांप्रतं मुने।

इत्याज्ञप्तः स धर्मतुलाधारं गत्वा पृच्छेति सा मामवददित्युवाच। एवं चेत्तर्ह्यागच्छ मया सार्धं तत्र गंतुमित्यभिहितस्तथा कुर्वन् पथि 'तुलाधारः क्व तिष्ठतीति तेन पृष्टो भगवान्—

स महात्मा तुलाधारो नैकविधजनसंकीर्णे नानाविधवसनपात्ररूप्याहिरण्यरत्नाद्यलंकारद्रव्यादीनां क्रयविक्रयहट्टे विक्रीणाति क्रीणाति च। मनसा गिरा कर्मणा वा किंचिदपि विक्रियां न कुरुते। न मृषा वदति। न च दौर्जन्यं

विदधाति। नित्यं सर्वजनहिततत्परः सन् समलोष्ठाश्मकांचनः सर्वेषु समो वर्तते। जनसंघोऽपि रसं स्नेहमन्नमितरद्वा किमपि क्रय्यं वस्तु तन्मुखादेवगृह्णाति ददाति। दापयति च स तस्मै यथाक्रमम्। समुपस्थितेऽपि प्राणान्ते तेन सत्यं विहायानृतं कदापि नाचरितम्। नाभियितं च। अत एव सः 'धर्मतुलाधार' इति ख्यातिं गत इत्याह।

श्रुत्वैवं तन्माहात्म्यं हट्टगतः स द्विजो बहुविधैः पुंभिः स्त्रीभिश्च वेष्टितं विक्रेय्यवस्तुमूल्यविषयिणीं विविधां गिरं भाषंन मलपंकधरं दंतकुड्मलपंकिलं रसादीन् पदार्थान् विक्रीणंतं तमवलोक्य कथमिदमिति सभ्रमान्मधुरयैव गिरा तं प्राह 'भो तुलाधार, धर्मस्य समुद्देशं मह्य वद। तदर्थमेव त्वदंतिकमहमागतोऽस्मि' इति तेनोक्तमुपश्रुत्य 'हे द्विज, यावन्मत्सन्निधावेतेऽन्ये च क्रयार्थमागता जनाः प्रतिष्ठंति रात्रियामकं तावन्मे स्वस्थता नास्ति। अतस्तावत्कालं प्रतीक्षस्व। नो चेन्मदुपदेशाध्दर्माकरं प्रति गच्छ। तत्र बकस्य मृतौ खे वस्त्रस्यावशोषणे च दोषं ज्ञास्यसि। तस्य सज्जनाऽद्रोहकस्योपदेशेन तव कामः फलिष्यति चेत्युक्त्वा स धर्मतुलाधारो यथापूर्वं क्रयविक्रयक्रियासक्तो बभूव।

अथैतद्वचनात्सज्जनाद्रोहकस्य निकटे गमिष्यामि। परं तदालयं क तन्न जानामीत्युक्तवंतं तं स प्राङ्निर्दिष्टो विप्रः 'एहि तस्यालयं गच्छाव' इति तथा कुर्वन् स द्विजो विप्रं पृच्छति। 'तुलाधारस्य स्नानं नास्ति। देवपितृतर्पणादिक न वर्तते। गात्रं मलदिग्धम्। चैलादिक सर्वमप्यलक्षणमेव। सत्येवं देशांतरसंवृत्तं मदीयं वृत्तं याथातथ्येन स कथं जानातीति पृष्टवंतं तमाह भगवान्—

सत्येन समभावेन जित तेन जगत्त्रयम्।
अतृप्येता च पितरौ देवा मुनिगणैः सह॥
भूतभव्यप्रवृत्तं च तेन जानाति धार्मिकः।
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्॥
अरौ मित्रेऽप्युदासीने मनो यस्य समं व्रजेत्।
सर्वपापक्षयस्तस्य ईशसायुज्यतां व्रजेत्॥

सत्यं दमः शमः साम्य धैर्यं स्थैर्यमलोभता ।
अमात्सर्यमनालस्यं तस्मिन्नेतत्प्रतिष्ठितम् ॥

तेन वै सर्वलोकस्य वृत्त जानाति धार्मिकः ।
तस्य देहे स्थितो विष्णुः लोके नास्ति च तत्समः ॥

स च धर्ममयः साक्षात् तेनैव धारितं जगत् ।

इति श्रुत्वा भगवत्कृपया तुलाधारस्य ज्ञानकारणं तत्वतोऽधिगनम् । अधुनाऽद्रोहकस्य सुवृत्तं कृपया वदेति प्रार्थितो भगवानुवाच—

पुरा किल कस्याचिद्राजपुत्रस्य कुलस्त्री नवयौवनाढ्या कामदेवस्य रतिरिव प्राणसमा रूपेण नाम्ना च सुंदरी नाम भार्याऽऽसीत् । एकदा स राजपुत्रः पार्थिवेनाकस्मात्कस्मिंश्चिन्महति राजकार्ये नियुक्तः प्रदेशांतरं जिगमिषुर्यत्र सर्वथा सुनिश्चितमस्याः संरक्षण स्यात्तादृश एकस्मिंस्स्थाने प्राणेभ्योऽपि गरीयसीमिमा नवयौवना सुंदरी मम भार्यां स्थापयामीति चिरायाऽलोच्य संजातविस्रंभः सहसाऽद्रोहकस्य गृहमागत्य तस्मै सर्वं स्वीयं राजकार्यं तन्निकटे भार्यायाः संस्थापन च कथयामास । तच्छ्रुत्वाऽतीव विस्मितः सन्नद्रोहकोऽब्रवीत् । अहं न ते तातो न भ्राता न च बाधवो नापि तस्याः पितृमातृकुलस्य सुहृज्जनः । सत्येवं कथं मदालये तस्याः स्थापनेन त्वं निश्चिंतः स्वस्थो भविष्यसीत्याकर्ण्य राजपुत्रोऽवदत् । लोकेऽस्मिंस्त्वत्सदृशो धर्मज्ञो विजितेंद्रियः सर्वज्ञश्च नास्तीति मे दृढं विश्वास इति सुनिश्चितोऽयमर्थो मयेति । स आह— त्रैलोक्यमोहिनी तव भार्यां कः पुमान् संरक्षितुं क्षमः ।

राजपुत्र आह— अस्या धरण्या सर्वतः परिविज्ञायैव त्वत्सकाशमागतोऽहम् । तस्मादेषा तिष्ठतु तव वेश्मनि । व्रजाम्यहं निजमंदिरमित्युक्ते स पुनराह— नैकविधकामुकभरितेऽस्मिन् सुशोभने नगरे कथमस्याः संरक्षणं भवेत् । राजपुत्रो ब्रूते— त्वमेवास्याः संरक्षणं कुरु । व्रजाम्यहमित्युक्ते स अद्रोहकस्तं धर्मसंकटादाह——

करोम्यनुचितं कार्यं स्वदास्यमुचित हि तत् ।
कुर्वाणा चेदृशी भार्या स्थातव्या मम वेश्मनि ॥
अरक्षारक्षणादेव वदामीष्ट कुरु प्रियम् ।
मम तल्पे मया सार्धं शयाना मद्भार्यया सह ॥
मन्यते दैवतं स्वं तु नो वा तिष्ठतु गच्छतु ।

इत्येवमाकर्ण्य क्षण विमृश्य पुनराह राजपुत्रः—

बाढमेतद्वचस्तात यथाभीष्टं तथा कुरु ।
ततो भार्यां जगादाथ अस्य वाक्याच्छिवाशिवम् ॥
कर्तव्यं च न ते दोष आज्ञया मम सुंदरि ॥

इत्याऽऽभाष्य स राजपुत्रो भूपतेः पितुः शासनं संविधातुं द्राक् प्रस्थितः ।

अथ समागताया क्षपाया तस्या राजपुत्रपत्न्याः संरक्षणार्थं यत्तस्य निकटे तेन प्रतिज्ञातम् ' मम तल्पे मद्भार्यया सहानया शयन कार्यमिति । ' तत्तथैवानुष्ठितम् । धार्मिकः सोऽप्यद्रोहकः प्रत्यहं द्वयोर्योषितोर्मध्यगतः सन् शयनं करोति स्म । अथापि स्वभार्यातद्भार्ययोः कदापि शरीरस्पर्शं नैवाकरोत् । स्पर्शे सति विजितेंद्रियः स दुहितास्पर्शं मनुते स्म । पृष्ठप्रदेशे स्तनौ संलग्नौ चेत् पुत्रवत्तौ मातुस्तनाविति मन्यते स्म । निद्राया तयोरंगं स्वीयांगे लग्नं चेन्मात्रोरंगं तदिति दृढं मेने । इत्थ प्रत्यहं मातृभावनयैकतल्पे ताभ्यां सह शयनं कुर्वतस्तत्संसर्गं मातृससर्ग भावयनस्ताभित्थ परिरक्षयतश्च तस्यार्धं संवत्सरं व्यतीतम् ।

तस्याः पतिरपि तदानीं राजनिदेश सम्यगनुष्ठाय पुरमागतस्तमितरान् प्रति च यथोदितं तस्याः सुवृत्तं पृच्छति स्म । तत्र वृद्धाः केचन यथास्थितं सर्वं भद्रमब्रुवन् । युवानस्तु महदाश्चर्यं कथयामासुः । अन्ये केचन त्वया संरक्षणार्थं निहितया तव भार्यया सार्धमसावद्रोहकः प्रत्यहं स्वपिति । स्त्रीपुंसोरेकत्रशयने संसर्गे वा चित्तस्थैर्यं कथ स्यादित्याहुः । इत्येवं जनानां मध्ये प्रसृता विविधां कुश्रुतिं स्वीयपुण्यातिशयसामर्थ्याच्छ्रुत्वा लोकापवादनिरसनार्थं

स विशुद्धमतिरद्रोहकः स्वयं काष्ठान्याहृत्य तत्राग्निं प्रजज्वाल। एतस्मिन्नंतरे स राजपुत्रः सद्यस्तद्गृहमागत्य तत्र सुविकसिताऽऽननारविंदां शुद्धमनस्कां स्वीयपत्नीं प्रविषादयुतं चाद्रोहकं दृष्ट्वा तयोः परिपूतं मानसं विज्ञायेत्थमवदत्—

किमिदम्, चिरायाऽऽगत मित्रकं च मा कुतो न संभाषसे ' इति। सोऽप्यनष्टधीर्धर्मात्माऽद्रोहकस्त राजपुत्रमब्रवीत् —

**यत्कृतं कठिनं कर्म मया त्वद्धितकारणात्।**
**सर्वं व्यर्थमहं मन्ये जनानां तु प्रवादतः॥**
**अद्य वह्निमहं यास्ये प्रपश्यंतु नराः सुराः।**

इत्युच्चैरभिधाय स महाभागो हुताशनं प्रविवेश। अथ हुतभुक्प्रविष्टस्य तस्याग वसनं कुतलं च दहनो नाधाक्षीत्। खे च विश्वेदेवाः प्रीत्या साधु साध्वित्यब्रुवन्। समंततस्तस्य मूर्ध्नि निरंतरा पुष्पवृष्टिरभवत्। यैश्च दुःश्रुत वाक्यं तावुद्दिश्य गादितम्। तेषा मुखेषु कुष्ठान्यजायंत। देवादयश्च तत्रागत्य तं महात्मान वन्हेराकृष्य मुदा कुसुमैरपूजयन्। इत्थं सर्वैरर्चितः सोऽपि महातेजास्तान् समस्तानपूजयत्। देवादिभिः सर्वैः 'सज्जनाद्रोहक' इति तस्य नाम कृतम्। तत्पादरजोभिः परिपूता धरित्री सस्यसंपूर्णाऽभवत्। सुरादयश्च सर्वे तं राजपुत्रं ' तव साध्वीयं भार्या, संप्रगृह्यताम्' इत्याहुः। अस्य सदृशः कामलोभादिभिरजितः पुमान् लोके नास्ति नासीन्न भविष्यति चेत्यब्रुवन्। यतः सर्वेषामेव प्राणभृतामयं कामोऽत्यंतं दुर्जयः। कामादिभिरेवारिभिः प्राणिषु सर्वथा परिच्छेत्तुमशक्यः संसारबंधः पात्यते। तैश्चिराय रहितमेव स संबंधो न स्पृशति। अनेन तु समस्तं भुवनं जितम्। अस्य मनसि नित्यं वासुदेवः सानंदं स्थितः। अस्य दर्शनस्पर्शनादिभिः सर्वे मानुषाः किल्बिषाद्विमुक्ताः संतो ध्रुवं दिवं गच्छेयुरित्येवं तं सज्जनाद्रोहकं स्तुवंतो देवादयः स्वस्वालयं जग्मुः। तावपि दंपती साल्हादं निजमंदिरं गतवंतौ। इत्येवं तस्य सज्जनाद्रोहकस्य माहात्म्यं भगवतः सकाशादुपश्रुत्य सादरं तत्समीपं प्राप्य स नरोत्तमो द्विजः ' धर्मोद्देशं वद ' इति मुदा तमुवाच। सोऽपि—

भो वाडव, पुरुषोत्तमं विष्णुभक्त प्रति गच्छ। तत्र तवाभीष्टं सर्वं फलिष्यति। बकस्य निधनम्। वसनस्याशोषगम्। मूकसन्निधौ गमनम्। पतिव्रतादर्शनम्। धर्मतुलाधारेण समागमः। तदादेशादिहागमनम्। तथाऽपरमपि यद्यत्सकारणं ज्ञातुमिच्छसि तत्सर्वं तत्र निःसंदिग्धं ज्ञास्यसि परिपूर्णमनोरथश्च भविष्यसीत्युवाच।

तदुपश्रुत्य निर्दिष्टविप्रेण सह पुरुषश्रेष्ठस्य हरिभक्तस्यालयं मुदाऽऽगत्य तत्र ध्यानस्थं परमपवित्रं तपसा दीप्रं सर्वसुलक्षणोपेतं तेजस्विनं भगवत्प्रिय तं नरवरं समालोक्य प्रश्रयेण— 'यद्यद्दूरान्नो वृत्तं तद्वद धर्मं चोपदिश। तदर्थमेवात्र भवत्समीपमागतोऽहमित्युवाच।

अथ स्वागत त इत्युक्त्वा 'अद्य सुरश्रेष्ठो दानवारिर्भगवास्त्वदुपर्यतीव सुप्रसन्नः। हे द्विज, त्वा दृष्ट्वाऽस्माकं चित्तं भृशं हृष्यति। मम वेश्मनि स्थितं देवदेवं हरिं संदृश्य तवातुल कल्याणं भविष्यति। मनोरथः सम्यक् फलिष्यति। सुरवर्त्मनि स्नानार्द्रं ते चैलमपि पूर्ववच्छुष्क स्यादित्यादरात्तमवोचत् स वैष्णवाग्र्यः। तदा क्वासौ देवो हरिः स्थितस्तं मे कृपया प्रदर्शयेति तेनोक्ते रम्येऽस्मिन् देवमंदिरे प्रविश्य तत्र भगवतं परमेश्वर सम्यग्दृष्ट्वा तत्प्रसादेन घोरात्किल्बिषान्निर्मुच्य जनिमृतिप्रवाहादपि प्रमुक्तो भविष्यसीति तद्वच उपश्रुत्य शीघ्रं तन्मंदिरं प्रविश्य तत्र पद्मतल्पके स्थितं सुप्रसन्नवदनारविंदं पूर्वपरिचितं विप्रमेव विष्णुमपश्यत्। ततः शिरसा तं देवं प्रणम्य विनम्रतया तच्चरणौ धृत्वा हे देवदेवेश सुप्रसादीभव। प्रभो, इहामुत्र चाहं भवतः किंकरोऽस्मि। मय्यत्रभवतोऽनुग्रहश्च दृष्टः। साम्प्रतं ते रूपं द्रष्टुमिच्छामि। भगवन्, कृपया मन्मनीषां सफलां विधेहीति प्रार्थना श्रुत्वा हरिरुवाच—

भूदेव, त्वं सदैव मे प्रियोऽसि। तत एव पुण्यव्रता दर्शनं त्वया कारितम्। पुण्यव्रता सकृद्दर्शनात् स्पर्शनात् कीर्तनात् सभाषणाद् ध्यानाद्वा नरो निष्पापः सन्नक्षयं स्वर्गमश्नुते। क्रमशो मत्सायुज्यमेति च। एवं पुण्यतीर्थेषु स्नात्वा श्रीशंभुं दृष्ट्वा पुण्यव्रतो देशान् गत्वा लोकानामग्रतः पुण्या

कथां कथयित्वा मदीयवासर उपोष्य मच्चरित श्रुत्वा पित्रादिगुरुजने तपस्विनि च द्रोहादिकमकृत्वा निर्धूनकल्मषः सन्नरो नारी वा मदनुग्रहपात्रं जायते। हे द्विज, त्वं मद्भक्तस्तीर्थभूतश्चासि। अथापि दर्पात्प्रदत्तशापेन बकः प्राणैर्वियोजितस्त्वया। तद्दोषनिरासार्थं त्व पुण्यात्मनो मूकादीन् गच्छेत्युपदिष्टो मया। तेषां दर्शनान्मया सह संभाषणादिसंपर्काच्च क्षीणवृजिनो भूत्वा मन्मंदिरमागतस्त्वम्। हे अनघ, मदनुग्रहादेवाह दृष्टस्त्वया। मम संदर्शनं जात्वपि निष्फलं न जायते। अतो यत्ते मनस्यभीष्टम्। तत्प्रसन्नात्मत्सकाशाल्लभस्वेत्युक्तवति भगवति द्विजः प्रार्थयामास। 'हे नाथ, मदीयं मनः सर्वथा त्वय्येव तिष्ठतु। हे जगदीश, त्वद्दते नान्यत्किंचिदपि कदाप्यनुरोचते मह्यम्।

इति तस्यैकांतिकीं भक्तिमालक्ष्य सुप्रसन्नो भगवानुवाच—

यस्मादेतादृशी बुद्धिः स्फुरते ते सदाऽनघ।
तस्मान्मत्सदृशान् भोगान् मद्गेहे संप्रलप्स्यसे॥
किंतु तौ पितरौ पूज्यौ ममास्तीति तवानघ।
पूजयित्वा च पितरौ पश्चाद्यास्यसि मत्तनुम्॥
तयोर्निश्वासवातेन मन्युना च भृशं पुनः।
तपः क्षरति ते नित्यं तस्मात्पूजय तौ द्विज॥
मन्युर्निपतते यस्मिन् पुत्रे पित्रोश्च नित्यशः।
तन्निरय न बाधेऽहं न धाता न महेश्वरः॥
तस्मात्त्वं पितरौ गच्छ कुरु पूजां प्रयत्नतः।
ततस्त्वं हि तयोरेव प्रसादान्मत्पदं व्रज॥ इति।

ततो द्विज आह—

'भगवन्, त्वदादेशं मनोवाक्कायैर्नियतं कुर्वे। हे अच्युत, मयि प्रसन्नोऽसि यदि त्वं तर्हि हे नाथ, तव दिव्यं रूपं मे दर्शय।' इति तेन प्रार्थितः सुप्रसन्नस्वांतो ब्रह्मण्यो भगवान् पुण्यकर्मणे तस्मै— मणिमयदिव्यमुकुटमंडितं श्रीवत्सवक्षसं वनमालालंकृतं शंखचक्रगदापद्मविभूषितं चतुर्बाहुं

जलधरमंडले प्रस्फुरद्विद्युल्लतावद्भासुराऽऽपादलंबिपीतकौशेयवसनवसानं कणत्कनकर्किकिणीजालसुशोभितातरांतराखचितप्रस्फुरन्नवरत्नालंकृतसौवर्णकांची-मंडितकटितटं घनश्यामसुंदरं चराचरजगन्नियामकं भानुभास्वरं मंदस्मितालंकृत-वदनारविंदं सुप्रसन्नं दिव्यं नैजं स्वरूपं दर्शयामास। अथ दृष्ट्वा च तद्दिव्यं रूपं संभ्रमादंडवत्प्रणम्याजलिं बध्द्वा सानद सप्रश्रयं सगद्गदं चाह स द्विजः—

अद्य मे सफल जन्म अद्य मे चक्षुषी शिवे।
अद्य पाणी मम श्लाघ्यौ धन्योऽहं जगदीश्वर॥
अद्य मे पुरुषा याति ब्रह्मलोक सनातनम्।
नंदंति बांधवा मेऽद्य त्वत्प्रसादाज्जनार्दन॥
इदानीं च प्रसिद्धा मे सर्वे चैव मनोरथाः॥

इति संप्रार्थ्य पुनराह—

हे नाथ, देशांतरे संजातं मदीय वृत्तं मूकादयो जानंतीत्याश्चर्या-स्पदमिदम्। तथा तेषा मूकपतिव्रतातुलाधारसज्जनाद्रोहकहरिभक्ताना सद्मसु विप्ररूपेण स्थितस्त्वमस्मिन् देवमंदिरे दिव्यरूपेण दर्शनं दत्तवानसीत्ये-तदप्यद्भुतं मे प्रतिभाति। तदपाकर्तुं त्वमेव समर्थोऽसीत्युक्त्वा तूष्णीं स्थिते तस्मिन् भगवानुवाच—

पित्रोर्भक्तः सदा मूकः पातिव्रत्ययुता शुभा।
सत्यवादी तुलाधारः समः सर्वजनेषु च॥
लोभकामाजिदद्रोहो मद्भक्तो वैष्णवः स्मृतः।
संप्रीतोऽहं गुणैरेषा तिष्ठाम्यावसथे मुदा॥
भारतीकमलाभ्या च सहितो द्विजसत्तम।

ततो द्विज आशंकते—

महापातकिसंसर्गान्नराश्चैवापि पापिनः।
इति जल्पंति धर्मज्ञाः स्मृतिशास्त्रेषु सर्वदा॥
पुराणागमवेदेषु कथं त्वं तिष्ठसे गृहे।

तस्योत्तरमाह भगवान्—

कल्याणानां च सर्वेषा वृत्तमेव जगत्त्रये ।
वृत्तस्थमपि चाडाल वृत्तेन ब्राह्मणं विदुः ॥
मूकस्य सदृशो नास्ति लोके वै पुण्यकर्मकृत् ।
पित्रोर्भक्तिपरो नित्य जितं तेन जगत्त्रयम् ॥
तयोर्भक्त्या त्वहं तुष्टः सर्वदेवगणैः सह ।
तिष्ठामि द्विजरूपेण तस्य गेहोदरे तु खे ॥
तथा पतिव्रतागेहे तुलाधारस्य मंदिरे ।
अद्रोहकस्य भवने ईशभक्तस्य वेश्मनि ॥
सदा तिष्ठामि धर्मज्ञ मुहूर्तं न त्यजाम्यहम् ।
पुण्यत्त्वाच्च त्वया दृष्टो मदनुग्रहकारणात् ।
पित्रोर्भक्तिपरः शुद्धश्चंडालो देवतां गतः ॥
तस्य वै मानसे शुद्धे वर्तते भूतभावनः ।
तेन जानाति त्वद्वृत्तं तथा साध्व्यादयोऽपि च ॥
पितुर्मातुः परं तीर्थं त्रैलोक्ये दुर्लभं खलु ।
तयोरर्चा कृता येन स एव पुरुषोत्तमः ॥
स चास्माकं हृदिस्थो हि तस्याहं हृदये स्थितः ।
आवयोरंतरं नास्ति परत्रेह च मत्समः ॥
अत एव हि मूकोऽसावितरे वैष्णवादयः ।
जानंति तव वार्तां वै तस्मात्ते विस्मयः कुतः ॥

इत्येवं भगवन्मुखात्पितृभक्तेस्तत्सेवायाश्च महत्त्वं श्रुत्वा पतिव्रता-प्रभावं जिज्ञासुर्द्विजः पुनः पृच्छति—

'सा शुभानाम्नी पतिव्रताऽतीतानागतं वृत्तं कथं जानाति । पतिव्रतायाश्च प्रभावः कीदृशः । तज्जिज्ञासवे मह्य कृपया वद ।'

ततो भगवानाह—

पतिव्रता पतिप्राणा सदा पतिहिते रता ।
देवानामपि साऽऽराध्या मुनीनां ब्रह्मवादिनाम् ॥

अमुमेवार्थं विशदयितुं पुरावृत्तं कथयति भगवान्—

प्राङ्मध्यदेशेऽतिसमृद्धा काचनैका नगर्यासीत् । तस्या नगर्यां ब्रह्मजातीया शैब्या नाम्नी पतिव्रताऽवात्सीत् । तस्याः पतिः पूर्वकर्मवशात् कुष्ठी बभूव । रोगिणस्तस्य नित्यं परिचर्यातत्परा सा देववत्तमर्चयति स्म । एकदा पथि गच्छंतीं परमसुंदरीं नवयौवनां कोमलांगीं वेश्यां दृष्ट्वा मोहेन भृशं मन्मथाविष्टमानसः स कुष्ठी तद्गतचित्तस्तामेव चिंतयन् सुदीर्घं निश्वस्य विमना अभवत् । पत्युर्वैमनस्यमालक्ष्य 'नाथ, कुतस्त्वमकस्मादुन्मनाः संवृत्तः। कस्मादयं दीर्घतरो निश्वासः । कुतश्च किमपि नेच्छसि । वदस्य कारणम् । यद्धि तव प्रियं स्यात् तत्कार्यमकार्यं वा भवतु । यावच्छक्यं करोम्येवाहम् । यतस्त्वमेको मम गुरुः प्रियश्च' इति तयोक्ते स आह—

'प्रिये, दुर्मोहाद्यदकार्यं ममाभीष्टं तदद्य त्रपया वक्तुं न पारये । साध्व्या त्वयापि तत्कर्तुमयोग्यम् । अतो यद्भाव्यं तल्लंघयितुं न कोऽपि मर्त्यः शक्तः ।' इति पत्युर्निर्वेदवचः श्रुत्वा खिन्ना सा साध्वी पुनराह—

'भवन्मनोभिलाषं ज्ञात्वा तत्सिध्यै सर्वथाऽहं शक्तेति निःसंदिग्धमवेहि । दुर्लभमपि तवादेशं प्रयत्नतः साधयामि । तेनैव हीह परत्र च मम कल्याणं भविष्यति । मुंच नैराश्य' मिति तदुक्त्या भृशं तुष्टः स पत्नीमवदत्—

'अनेन पथा गच्छंतीं मदनस्य रतिमिव सर्वतश्चानवद्यांगीं यौवनाढ्या वेश्यां दृष्ट्वा मे मनः कामेनात्यंतं दह्यते । यदि त्वत्प्रसादात्तां प्राप्नोम्यहं तदा मम जीवितं प्रसिध्येत् । अथ सा वरारोहा दीनं कुष्ठिनं मां नेच्छेत्तर्हि मे निधनमेव शरणं जानीहि ।'

इति पत्युर्वाक्यमाकर्ण्य सा साध्वी--

'हे प्रभो, स्थिरीभव । प्राणपणेन त्वदभीष्टं साधयिष्यामीत्युवाच।

अथ प्रक्रांतं कर्तव्यं मनसा सम्यगालोच्य क्षपायाः पश्चिमे यामे संमार्जनीं गोमयं जलं च गृहीत्वा गणिकागेहं द्रुतमागत्य प्रतोलीं चत्वर देहलीमलिंदं च संशोध्य गोमयेन संमार्जनं विधायालक्षिता तूर्णं स्वालयमाययौ ।

एवं दिनत्रयमकरोत् सा पतिव्रता। अथ सा वारमुख्या तद्दृष्ट्वा मयाऽनुक्तेऽपि मत्प्रियकारणात् कस्येदमुषःकाले शोभनतरं कर्मेति चेटिकादीन् परिचारकानपृच्छत्। ते तु नास्माभिः कृतमेतत्प्रमार्जनमित्यब्रुवन्। ततोऽत्यर्थं विस्मयाविष्टा सा रजन्यवसानवेलाया पूर्ववत्संमार्जनं विधातुमागता साध्वीं ब्राह्मणीं संदृष्ट्वा सत्वर तस्याः सकाशमागत्य क्षमस्वेति भाषिणी पाणिभ्या तच्चरणौ दधार। इत्थमुवाच च—

आयुर्देहं च संपत्तिर्यशोऽथ कीर्तिरेव च।
एतेषा मे विनाशाय करोषीदं पतिव्रते॥

यद्यत्प्रार्थयसे साध्वि तत्तद्दास्यामि ते ध्रुवम्।
सुवर्णं मणिरत्नं वा चैलं वा यन्मनोगतम्॥

इत्येवं गणिकयाऽभिहिता सा साध्वी नास्ति मे स्वर्णादिना प्रयोजनम्। अथाप्यस्ति किंचित्कार्यं तद्वदामि यदि त्वं करोषीति तामब्रवीत्। साऽपि सत्यं सत्य करिष्यामि। हे पतिव्रते द्रुत वद। मातर्मे रक्षणं कुरु। शीघ्र कथय मयाऽनुष्ठेयं तव कार्यमित्यत्रोचत्। ततः कुष्ठिनः स्वभर्तुरभीष्टे प्राङ्निर्दिष्टे कार्ये तया कथिते कुष्ठिनः संपर्काद् भृशं कातरापि सा गणिका प्रतिज्ञातार्थपरिपालनाय 'तव पतिर्मदालयमागतश्चेद्दिनमेकं तथा करिष्यामी' त्यब्रवीत्। ततः सतुष्टा सा साध्वी—अद्य रात्रौ पतिमादाय तव वेश्मन्यागमिष्यामि। भुक्तभोग्य द्दष्टं तं पुनः स्वालयं नेष्यामीत्युवाच।

अथ—

गच्छ शीघ्रं महाभागे स्वालयं च पतिव्रते।
पतिस्तेऽर्धरात्रौ च आगच्छतु ममालये॥

बहवो मे प्रियाः संति राजानस्तत्समाश्च ये।
एकैकोऽस्मिंस्तु मद्गेहे नित्यं तिष्ठति भामिनि॥

अद्याऽहं तद्रहितं करिष्ये तव कारणात्।
स चागच्छतु त्वद्भर्ता स चास्मान् प्राप्य गच्छतु॥

इत्येवं तस्याः प्रतिज्ञां श्रुत्वा शीघ्रं स्वालयमागत्य मुदा सर्वं फलितं कार्यं भर्त्रे निवेदयामास । तच्छ्रुत्वा प्रिये, यत्नतः कृतमपि त्वया तत्कार्यं कथं सिध्येत्। यतश्चलितुमत्यंतमसमर्थोऽहं तस्या गृहं कथं यास्यामीत्यालोच्य मम मानसं भृशमस्वस्थं जायते। अतो मन्मनीषितं दुर्लभमित्येव भाति। इत्युद्विग्नं पतिमालोक्य सा पतिव्रता त्वा पृष्ठस्थं कृत्वा तदालयं नेष्यामि। सिद्धेऽर्थे पुनस्तथैव स्वगृहमानेष्यामीति पत्न्यैकनिष्ठायास्तस्या भाषितं श्रुत्वा सानंदं रुग्णो ब्रूते ' हे कल्याणि, स्त्रीजनैर्दुष्करमपि कृत्यं त्वया संसाधितम्। अतस्त्वत्कृतेनैव प्रयत्नेन मदीप्सितं सिध्येदिति बलवन्मे विश्वासः।'

अत्रांतरे तस्मिन् पत्तने महांस्तस्करोपद्रवः प्रचलित आसीत्। प्रत्यहं रात्रावकस्माद्धनिना गृहेषु प्रविश्य चोरैः प्रभूतं वित्त ह्रियत इति वार्ता श्रुत्वा भृशं क्रुद्धः पार्थिवः क्षपासंचारिणः सर्वांश्चारानाहूय ' यदि जीवितुमिच्छथ तर्ह्यद्यास्मन्निकटे प्रजावित्तापहारिणं पाटच्चरमन्विष्यानेष्यतेति रुषा तानाज्ञापयामास।'

इति तीक्ष्णतरा नृपस्याज्ञा श्रुत्वा भीतास्ते भृत्या दक्षतया तत्र तत्र स्थलेषु पाटच्चरमन्विष्यंतस्तन्नगरोपातप्रदेशे विद्यमानगहनकाननांतर्गतैकस्मिन् वृक्षमूले समुपसंहृतेंद्रियप्राणमनोवृत्तिं समाधिस्थं परमात्मैकदृष्टिं कंचन योगिप्रवरं दृष्ट्वाऽयमेवाद्भुताकारो धूर्तस्तस्करोऽत्र कानने गुप्ततया तिष्ठतीत्युक्त्वा सहर्षं ते रात्रिचारास्तं ब्रह्मलग्नसमाधिं योगिश्रेष्ठ रज्वा दृढ बबधुः। राजसभाया च नीत्वाऽयं स तस्कर इति राज्ञः पुरतो निवेदन चक्रुः। राजापि विमर्शमकृत्वा समानीतमिमं मत्प्रजोपद्रवकारिण तद्वित्तापहारिणं च पाटच्चरं चौरदंडेन चतुष्पथे दंडयतेत्याज्ञा ददौ। ततो राजाज्ञया तं योगिनं निर्भर्त्सयंतस्ते रक्षिणश्चतुष्पथे नीत्वा शूलोपर्याऽऽरोपयामासुः। शूलविद्धशरीरोऽपि स योगी ब्रह्मलग्नसमाधित्वात्कामपि व्यथा न वेद। अत्रांतरे निशीथसमये पृष्ठतः पतिं गृहीत्वा तेन पथा तस्या पतिव्रताया गच्छंत्यां शूलारोपितयोगिनः पादप्रदेशे तत्पृष्ठस्थितकुष्ठिनोऽग सहसा संलग्नम्। ततस्तेन कुष्ठिनोऽगसंपर्केणाकस्माद्भग्नसमाधिः कुपितो व्यथितश्च स योगी

' येन मे समाधिर्विच्छेदितः स भानोरुदये भस्मावशेषो भवत्वि ' ति तं कुष्ठिनं शशाप। तं दारुणं शापं श्रुत्वा सा तेजस्विनी पतिव्रताऽपि—' दिनत्रयं सहस्ररश्मिरेव नोदेत्विति वाण्या योगिप्रोक्तं पत्युर्मृतिहेतुं भानोरुदयमेव प्रतिषिध्य पतिं स्वालयं नीत्वा रम्ये शयनीये संस्थाप्य तत्सेवातत्परा बभूव। स मुनिरप्यभीष्टं स्थानमगात्।

अथ भास्करस्यानुदयात् सचराचरं त्रैलोक्यं व्यथितं दृष्ट्वा शतक्रतुप्रमुखाः सुराः पद्मयोनेः सकाशं गत्वा वयमहस्करानुदयस्य कारणं न विद्मः। तस्यानुदयेन समस्तं जगद्व्याकुलं संवृत्तम्। तस्माद्धे पितामह, अत्र योग्यमुपायं विधेहीति तं प्रार्थयामासुः। सर्वज्ञो ब्रह्मापि पतिव्रताया वचनादिदं कृच्छ्रमुद्भूतमतस्तस्याः सकाशं गत्वा तामेव प्रार्थयाम इत्याऽऽभाष्य दैवैः साकं ब्रह्मापि भूलोकमागत्य तूर्णं पतिव्रतामंदिरं प्राप्तः।

अथ स्वालये समागतान् परमेष्ठिप्रमुखान् देवानत्यादरान्नमस्कृत्य विनयेन स्थितां तां पतिव्रतां संबोध्य लोकेशो विधिर्ब्रूते—

' देवादीना द्विजादीनां गवादिप्राणिनां तथा।
कथं तु निधनप्रायं कृच्छ्रं ते परिरोचते॥
मातः क्रोधं त्यजस्वाद्य सूर्यस्योदयनं प्रति।

**पतिव्रता आह—**

' सर्वलोकानतिक्रम्य पतिरेको गुरुर्मम।
अस्य मृत्युर्मुनेः शापादुदिते च रवौ किल॥
तत्कारणादेव खलु मया शप्तो दिवाकरः।
न कोपान्न च मोहाच्च लोभात्कामान्न मत्सरात्॥ इति।

**विधिर्वदति—**

एकस्य निधनेनैव त्रैलोक्यस्य हितं भवेत्।
ततस्ते चाधिकं पुण्यं मातरेवं भविष्यति॥

**पतिव्रता आह—**

'पतिं त्यक्त्वा च मे सत्यं पुण्यं ते नानुरोचते।

विश्वसृडाह—

उदिते च खगे सौम्ये पत्यौ ते भस्मतां गते ।
स्वस्थीभूते च त्रैलोक्ये करिष्यामि हितं तव ॥
भस्मनः पुरुषो भाव्यः कामदेवसमप्रभः ।
गुणैः सर्वैर्युतो भर्ता त्वं चेह रतिवत्तदा ॥
यथा पूज्यः शिवो देवैर्यथा दुर्गा च पूजिता ।
तथैव दंपती स्वर्गे मातर्मद्वचनं कुरु ।

साध्वी आह—

पत्युर्मे निधने ब्रह्मन् विधवा लोकनिंदिता ।
कास्तु लोकान् गमिष्यामि भग्नाचारा मलीमसा ॥

पितामहो ब्रूते—

मातस्ते नास्ति दोषो वै न मृतस्ते धवोऽधुना ।
अस्माकं वचनेनैव कुष्ठी मन्मथतां व्रजेत् ॥

इत्येवं विधिनाऽभिहिते क्षण विमृश्य सा बाढमित्याह । ततो भानु रुद्गतः । तत्क्षणं मुनिशापेन पीडितः स कुष्ठी भस्मता गतः । तस्माच्च भस्मपुंजात् स द्विजो मन्मथसुंदरो बभूव । तदद्भुतं दृष्ट्वा पुरवासिनः सर्वे विस्मयान्विता देवाश्च प्रमुदिता अभवन् । जनता च स्वस्थतराऽभवत् । तस्मिन्नेव क्षणे स्वर्लोकादागतमर्कचन्द्रास्त्रं विमानवरमारुह्य पतिना सह सा साध्वी सुरैः सार्धमजरामरं द्युलोक प्राप्तवती । इत्थं पतिव्रता सा शुभाऽपि मदनुग्रहाद्भूतं भव्यं चाशेष वृत्तं जानाति । इत्येवमिदं पतिव्रताख्यानं पुण्यं पापापहं च या नारी शृणोति सा दुष्कृतौघाद्विमुक्ता सती शैब्या इव पतिना साकं सुराणां स्थानं प्राप्नुयादिति तं द्विजं प्रति भगवानुवाच ।

इत्येवं पतिव्रताख्यानं श्रुत्वा तुलाधारचरितं शुश्रूषुर्द्विजः प्रश्रयेण भगवंतमाह—

'प्रभो, यदि ममोपरि त्वदनुग्रहोऽस्ति तर्ह्यशेषतस्तुलाधारस्य वृत्तं कथयेति पृष्टो भगवान् ब्रूते—

सत्यभावादलोभाच्च यो वै दद्यात्स्वमत्सरात् ।
नित्यं यज्ञशतं तस्य सुनिष्पन्नं सदक्षिणम् ॥

सत्येनोदयते सूरो वाति वातस्तथैव च ।
सत्येन लोकास्तिष्ठंति सत्यभ्रष्टो निरयं व्रजेत् ॥

तस्मात्सत्यरतो लोके संसारोद्धरणक्षमः ।
तुलाधारो महात्मा वै सत्यवाक्ये प्रतिष्ठितः ॥

लोके तत्सदृशो नास्ति सत्यवाक्यस्य कारणात् ।
सर्वसाक्षी तुलाधारो जनानां शूर एव सः ॥
सर्वथा लोभसत्यागान्नाके निर्जरता व्रजेत् ।

अत्रेत्थमाख्यायिका श्रूयते— महाभागः कश्चन शूद्रः कदापि किंचिदपि लोभमकृत्वाऽवर्तत । श्रमलब्धशाकेन शिलोंच्छया वा कथंचित्तस्य जीवनवृत्तिरासीत् । तस्य कटिप्रदेशे शिरसि च सर्वदा जीर्णतमं वस्त्रयुग्ममदृश्यत ।

'अयं पटः सूत्रदरिद्रता गतः अयं पटश्छिद्रशतैरलंकृतः ।
अयं पटः प्रावरितुं न शक्यते अयं पटः प्रावृत एव शोभते ॥'

इतिवदेवतस्य स्थितिरभूत् । अथापि चिराय लोभरहितः स जात्वपि परस्वं न गृह्णाति । नेच्छति च । इत्थं निर्लोभतया स्थिते तस्मिन्नेकदा तस्य भावजिज्ञासया भगवता नदीतीरे निर्जनप्रदेशे वस्त्रयुग्मं निक्षिप्तम् । तत्तथा दृष्ट्वापि तस्य चित्तमण्वपि लोभेनाऽऽक्रांतं नासीत् । इतरस्य कस्यचित्स्यादिदमिति तदुपेक्ष्य स स्वगृहं ययौ । ततः स्वल्पमिदं न तस्य मनसो भावमधिगंतुमलमिति विचिंत्य पुनरपि भगवता तत्रैव जनसंपर्कशून्ये नद्यास्तीरप्रदेशे हेमगर्भं महदुदुंबरं पातितम् । अन्येद्युः पूर्ववत्स्नानादिकं कृत्वा गृहं प्रति गमनसमये पथि पतितं तदद्भुतमुदुंबरं दृष्ट्वा अहो कृत्रिममेतदुपलक्ष्यते । एतस्मिन् गृहीते मम निर्लोभता दत्तजलांजलिः स्यात् । अस्य रक्षणे कष्टम् । अहंकारस्थानमिदम् । यतो लाभस्ततो लोभः । लोभा-

दपि लोभः प्रवर्तते । लोभग्रस्तस्य पुंसः शाश्वतो निरय इति श्रूयते । इत्येव-मादिकं विमृश्य तत् परित्यज्यैव स शूद्रः स्वालयं ययौ । तदा दिवि देवा-दयः साधु साध्वित्यब्रुवन् ।

अथ भगवान् क्षपणकरूपं धृत्वा तस्य गृहांतिकमागत्य भूतभविष्य-वादी दैवज्ञोऽहमित्युच्चैर्घोषयामास । तच्छ्रुत्वा दैवजिज्ञासयाऽनेके जनास्त-न्निकटे संभ्रमादागताः । तस्य शूद्रस्य भार्यापि बहिरागत्य तं क्षपणकं प्रति स्वीयं दैवं पप्रच्छ । सोऽपि तस्याः सुविज्ञातमनोरथस्ता निभृतमवदत् । अद्य ते पतिना दैवदत्तं प्रभूतं वित्तं मूढतया परित्यक्तम् । पुनस्तस्य द्रव्य-लाभो दुष्करः । दैवलब्धस्य परित्यागदोषाद्यावज्जीवं भीषणदारिद्र्यभोक्ता ते पतिरिति भाति । महाभागे गच्छ गृहम् । इदं सत्यं न वेति पतिं पृच्छ च । इति । सापि तच्छ्रुत्वा पत्युरंतिकमेत्य रोषताम्राक्षी तमपृच्छत्तद्वृत्तम् । सोऽपि तच्छ्रवणेन विस्मितः संस्तया सार्धं क्षपणकसकाशं गत्वा किं त्वयाऽभिहित-मिति शनैः पप्रच्छ ।

क्षपणक आह—

अरे, दैवलब्धं परिशुद्धसुवर्णं साक्षात्कृत्यापि हेलया तृणवत् परित्यक्तं त्वया । तेन नास्ति ते भालेऽतुलमैश्वर्यं भोग्यमिति मन्ये । केवलमाजन्ममरणं स्वीयबांधवेभ्यो दुःखप्रदाता त्वमसि । तस्माद्वे तात, तूर्णं गृहाण तद्धेम-गर्भमक्षय्यमुदुंबरम् । भुंक्ष्व च भार्यया सह निष्कंटकमैश्वर्यम् । इति ।

शूद्र उवाच—

न मे वित्ते स्पृहा काचिद्धनं संसारवागुरा ।
तस्यां हि पतितो मर्त्यो न ध्रुवं मोक्षकं व्रजेत् ॥

शृणु वित्तस्य यो दोष इहलोके परत्र च ।
भयं चौराच्च ज्ञातिभ्यो राजभ्यस्तत्पुरुषादपि ॥

प्राणस्यांतकरो ह्यर्थः साधको दुरितस्य च ।
कामादीनां प्रियं गेहं निदानं दुर्गतेः परम् ॥ इति ।

**क्षपणक उवाच—**

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बांधवाः ।
कुलं शीलं च पांडित्यं रूपं भोग्यं यशः सुखम् ॥
धनेन तु विहीनस्य पुत्रदारोज्झितस्य च ।
कथं मित्रं कथं धर्मो दीनानां जन्म वै वृथा ॥
इष्टापूर्तं च यत्कर्म प्राणिनामुपकारकम् ।
दानं लोकस्य सोपानं निःस्वस्य तु न सिध्यति ॥
तथा रोगप्रतीकारः पथ्यमौषधसंचयम् ।
रक्षणं विग्रहस्यैव शत्रूणां विजयो ध्रुवम् ॥
स्त्रीणां च ग्रहणं क्षेम वसुयोगेन लभ्यते ।
भूतभव्यप्रवृत्ताना सुकृतं दुष्कृतं च यत् ।
तस्माद्बहु धनं यस्य तस्य भोग्यं यदृच्छया ॥
स्वर्गं वितरणादेव लप्स्यसे न चिरादितः ।

**शूद्रो वक्ति—**

अकामाच्च व्रतं सर्वमक्रोधात्तीर्थसेवनम् ।
दया जप्यसमा शुद्धसंतोषो धनमेव च ॥
अहिंसा परमा सिद्धिः शिलोंच्छवृत्तिरुत्तमा ।
शाकाहारः सुधातुल्यः उपवासः परं तपः ॥
संतोषो मे महाभोग्यं महादानं वराटकम् ।
मातृवत् परदाराश्च परद्रव्यं च लोष्ठवत् ॥
परदारा भुजंगाभाः सर्वं यज्ञ इदं मम ।
तस्मादेनं न गृह्णामि सत्यं सत्यं गुणाकर ॥
लग्ने प्रक्षालनात् पंके दूरादस्पर्शनं वरम् । इति ।

इत्थं श्रेयस्करमाभाषमाणस्य तस्य शूद्रोत्तमस्य मूर्ध्नि सर्वगीर्वाणैरितं पुष्पवर्षं पपात । देवदुंदुभयो नेदुः । अप्सरसां गणाः सहर्षं ननृतुः । गंधर्वपतयो ललितं जगुः । अंबराच्च विमानवरं समागतम् । ' हे धार्मिक,

इदं विमानवरं समारुह्य सत्यलोकं समासाद्य चिराय महेंद्रवद्भोगान् भुंक्ष्वेति देवगणा अब्रुवन् । तदा स शूद्रस्तानपृच्छत्–

कुतोऽयं निर्ग्रंथिकः क्षपणकः । अस्य चेष्टा भाषणादिकं च कथम् । किं साक्षाद्धरिहरावयमथवा ब्रह्मा । उत बृहस्पतिः शक्रो वा । आहोस्विन्मच्छलनार्थं धर्मोऽयमागतः । इति ।

अथ मंदस्मितः क्षपणको वक्ति—

तव धर्मं विज्ञातुं विष्णुरहमिहागतः । हे धार्मिकोत्तम, विमानेनानेन सकुटुंबो दिवं गच्छ । मत्प्रसादाद्युष्माक सदा नवयौवनं भविष्यति । भाग्याऽऽनंत्यं च लप्स्यथ । इति ।

इत्थं लोभस्य संत्यागात् स ययौ त्रिदशालयम् ।
तुलाधारस्तथा धीमान् सत्यधर्मे प्रतिष्ठितः ॥
तेन जानाति त्वद्वृत्तं देशांतरसमुद्भवम् ।
तस्मात्त्वमपि भूदेव दमेन त्रिदिवं व्रज ॥

इत्यभिधाय पुनराह भगवांस्तं द्विजं प्रति–

अद्रोहकस्य चाख्यातो महिमा लोकविश्रुतः ।
एकतल्पगता वामा ज्ञात्वा सर्वजितोऽभवत् ॥
ज्ञानिनामपि दुस्साध्यं मुनीनां ब्रह्मवादिनाम् ।
सुरासुरमनुष्याणां पशूना पक्षिणा तथा ॥
स्वभावाद्विषमं कामं जेतुं कः पुरुषः क्षमः ।
अद्रोहकमृते विप्र स एव भवजित् पुमान् ॥

अथापरस्य कामाधिष्ठितस्य पुंसो वृत्तं वक्ष्यामि । तदप्याऽऽकर्णयेत्युक्त्वा हरिराह–

पुरा भागीरथीतीरे परःसहस्राणां द्विजानामुपदेष्टा शमाद्युपेतः कश्चन परमहंसो द्विजो वसति स्म । एकदा सायंसमये देवमंदिराद्बहिरागते तस्मिन्नेकाकिनि सति पत्युर्गेहादपरं गेहं प्रस्थिता नवयौवनाढ्या रूपशालिनी नारी

तेनाकस्मात्संदृष्टा । तामवलोक्य मन्मथभयार्दितः स तां देवमंदिराभ्यंतरे प्रवेशयित्वा क्षणं स्थितः । साऽप्यररं पिधाय दृढमर्गलं दत्वा सुशोभने देवागारे निर्भया समतिष्ठत् । द्वारमुद्घाट्याभ्यंतरं गंतुं तं द्विजमप्यवसरं नादात् ।

अथ क्षपायां बहिस्थितः स किं मया कृतमिदमिति विलप्य तामेव वरारोहां विचिंतयन् प्रियेऽभ्यंतरमागंतु नोऽवकाशं देहि । द्वारं किंचिदुद्घाटय। तेन ते पतिस्तव वशगो दयितश्च भविष्यतीत्युवाच । ततः सा नारी भो तात, अनन्विता गिरः प्रवक्तुं त्वं नार्हसीति मुंडितं वृद्धं कामलालसं विप्रमालोच्याब्रवीत् । असौ परमहंसकोऽपि पुनर्ब्रवीति । मदीयं प्रचुरं धनं वर्तते । तत्सर्वं तुभ्यं दास्यामि । हे वामलोचने, कपाटमुद्घाटयेति । साऽप्याह—

त्वं धर्मतः पिता मम । हे धार्मिक, पुत्रिकां परयोषां च मा मोमगपच्छेति । ततो मनसि किमप्याऽऽलोच्य सुषिरेण पथा बाहुबलात्पिनद्धं द्वारं किंचिदुद्घाटय तेनैव मार्गेणाभ्यंतरं गतुमुद्यतः सः । ततस्तस्यार्धमुत्तमागं तीक्ष्णकंटकयुतेऽररे प्रविष्टम् । कृतेऽपि यत्ने नाभ्यंतरं प्रविशति न पुनर्बहिरागच्छति च । तेनात्यंतं कृच्छ्रे पतितः स सहसा पंचत्वमगात् । उषःकाले समायाता रक्षिणः किंकरास्तमद्भुतं शवीभूतं दृष्ट्वा विस्मिताः संतः कथमस्यैतादृशं निधनमभूत् । हे सुंदरि, ब्रूहीति तामूचुः । साऽपि यथाभूतं तस्य वृत्तं कथयित्वा स्वाभीष्टं स्थानं जगाम । इत्थं कामस्य महिमा दुर्निवारः खलु । अयमद्रोहकस्तु क्षमया देवासुराणां प्रभुतां गतः । अनेन हि निशीथिन्यामेकतल्पगतामंकस्थिता रम्यां नारीं धैर्येण त्यजता सुराणामपि भृशं दुर्लभा लोकाः समासादिताः। तद्वदेवायं सुरासुरगणार्चितो वैष्णवाग्र्यगण्योऽप्यैकांतभक्त्या ममात्यंतं प्रियः । तत एवास्य वेश्मनि नित्यं तिष्ठामि । येचाऽन्ये मद्भक्तास्तेषामहं सुलभः सन् मत्सायुज्यं तेभ्यो ददामि । हे भूदेव, माऽत्रांतरं पश्येत्युक्तवति भगवति पुण्यात्मानस्ते मूकादयः सर्वेऽपि सदाराः सपरिच्छदा हरिमीश्वरं संद्रष्टुं तत्र समागताः । अत्रांतरे देवाः सिद्धा ऋषयश्च मुदा साधु साध्विति वदंतः खात्पुष्पवृष्टिं तत्र चक्रुः । नाके दुंदुभयश्च नेदुः । सर्वे

देवगणाः सपरिवारैस्तैर्मूकादिभिः पंचभिः सार्धं माधवं संस्तुत्य प्रमुदिताः संतः शाश्वतं श्रीहरेरालयं सम्प्राप्ताः । तमद्भुतं तेषां मूकादीनामभ्युदयं समालोक्य स द्विजो मे श्रेयस्करमुपदेशं कुर्विति भगवंतं मधुसूदनं प्रार्थयामास ।

अथ भगवान्—

गच्छ स्वपितरौ तात शोकविक्लवमानसौ ।
समाराध्य प्रयत्नेन मद्गृहं प्राप्स्यसेऽचिरात ॥
मातृपितृसमा देवा न तिष्ठंति सुरालये ।
याभ्यां देहः शिशुत्वे वै पालितस्त्वक्षमःसदा ॥
अज्ञानदोषसहित पोषितश्चापि वर्धितः ।
ध्रुवं तयोः सम नास्ति त्रैलोक्ये सचराचरे ॥

इत्युपदिदेश । द्विजोऽपि पित्रोः सकाशं गत्वा यत्नतस्तौ समाराध्याचिरेणैव कालेन तयोराशिषा सकुटुंबः श्रीहरेः कृपापात्रं बभूव ॥

इत्थमिदं पंचमहायज्ञाख्यानं यः पठेच्छ्रुणुयाद्वा स निष्पापः सन् दुर्गतिं नाप्नुयादिति वरं दत्वा महर्षिः सत्यवतीसूनुः श्रीहरेर्ध्यानतत्परो बभूवेति सर्वं शिवम् ॥ श्रीः ॥

---

## ॥ श्रीः ॥

## ॥ ब्रह्मभक्तिविमर्शः ॥ (३४)

किं कर्म कुर्वन् हि नरो ब्रह्मभक्तास्त्विहोच्यते ।
कीदृशा ब्रह्मभक्ताश्च स्मृताः प्रश्नैर्वदामि तत् ॥ १ ॥

अथेदानीमस्मिन् भारते मिथो विप्रतिपन्ना नैकविधभक्तब्रुवाः परिदृश्यंते । तथा हि—केचन गाणपत्याः, अपरे शैवाः, अन्ये वैष्णवाः, शाक्ताः केचन,

सौरा अप्यपरे, तथा रामभक्ताः कृष्णभक्ता विठ्ठलभक्ता हनूमद्भक्ता भैरवभक्ताः कालिकाभक्ता रामदासपंथीया वारकरीपंथीया नाथपंथीयाः कापालिका रेणुकोपासका मल्लारीभक्ता गीताभक्ता गोभक्ता देशभक्ता राष्ट्रभक्तो इत्यादयो नानाविधा भक्ता दरीदृश्यंते । एवं तत्तत्क्षुद्रदैवतोपासका अपि परःसहस्राः संति । तेऽपि स्वस्वोपास्यतत्तदेवभक्तत्वेन तत्तदसाधारणाचिन्हधारणेन चाऽऽत्मानं विभूषयति । स्वीयदेवेतरदेवभक्तं स्वीयोपास्येतरदुपास्योपासक च भृशं द्विषंति । तथा तेषा पृथक पृथक् कोऽपि विशिष्टाचारोऽप्युपलभ्यते । किंतु—

‘ये यथा मा प्रपद्यंते तास्तथैव भजाम्यहम्’ ।

‘उपासकाना कार्यार्थं ब्रह्मणो रूपकल्पना ।’

‘इद्रो मायाभिः पुरुरूप ईयते’

इत्येकस्यैव सच्चिदानदात्मनो देवस्येमानि स्वरूपाणीति वेदादिशास्त्रोपदिष्ट महनीयं श्रेयस्करं तत्वमहकारवशतः पृष्ठतः कृत्वा मदमोहाद्यधीनतया श्रेयोमार्गाच्च्यवंति । अतस्तेभ्यः कल्याणोदर्कपथप्रदर्शनार्थं ब्रह्मभक्तकथनार्थं च ब्रह्मभक्तिप्रकारा वेदादिशास्त्रोपदिष्टाः सप्रमाणं समासतो निरूप्यते। तत्रादौ—

‘अथातो भक्तिजिज्ञासा’ इत्येन सूत्रेण भक्तिजिज्ञासां प्रतिज्ञाय—

‘सा परानुरक्तिरीश्वरे’

‘सा त्वास्मिन् परप्रेमरूपा अमृतस्वरूपा च’

इति महर्षिदेवर्षिसूत्राभ्या सच्चिदानंदात्मके ब्रह्मणि परमेश्वर ऐकांतिकनिरतिशयप्रेमस्वरूपा । तथा—‘आत्मरत्यविरोधेन’ इति सूत्रानुसारतस्तादृशप्रेमपुरःसरमनोवाक्कायाना सांतत्येन तदेकपरता च भक्तिः । इति ।

‘मां च योऽव्यभिचारेण भक्तियोगेन सेवते’

‘मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु’

इति भगवद्वचनाच्चैकरूपोऽप्यधिकारितारतम्येन द्विविधो भक्तिपदार्थः सिध्यति। इत्थम्—

श्रवणं कीर्तनं शंभोः स्मरणं पादसेवनम्।
अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम्॥

इति नवविधभक्तेरपि तत्रांतर्भावात् तद्वाक्यस्य न विरोधः। स्थिते चैवं मानसी वाचिकी कायिकीति भक्तेस्त्रैविध्यं बोध्यम्। त्रिविधाया अपि तस्याः पुनर्लौकिकी वैदिकी आध्यात्मिकीत्येवं त्रयः प्रकाराऽवगंतव्याः। तदुक्तम्—

त्रिविधा भक्तिरुद्दिष्टा मनोवाक्कायसंभवा।
लौकिकी वैदिकी चापि भवेदाध्यात्मिकी तथा॥ इति।

ताः क्रमश एवाह महर्षिः पुलस्त्यः —

ध्यानधारणया बुध्द्या वेदार्थस्मरणं हि यत्।
ब्रह्मप्रीतिकरी चैषा मानसी भक्तिरुच्यते॥
वेदमंत्रनमस्कारैरग्निश्राद्धादिचिंतनैः।
जाप्यैश्चारण्यकैश्चैव वाचिकी भक्तिरुच्यते॥
व्रतोपवासनियमैश्चित्तेंद्रियनिरोधिभिः।
कृच्छ्रैः सातपनैश्चान्यैस्तथा चांद्रायणादिभिः॥
ब्रह्मकृच्छ्रोपवासैश्च तथा चान्यैः शुभव्रतैः।
कायिकी भक्तिराख्याता त्रिविधा तु द्विजन्मनाम्॥

पद्मपुराण सृष्टिखंड अ. १५

इत्थं ब्रह्मक्षत्रविशां मानसीं वाचिकीं कायिकीं च भक्तिं क्रमेणोक्त्वाऽथ सार्ववर्णिकीं भक्तिमाह स एव महर्षिः —

गोघृतक्षीरदधिभी रत्नदीपकुशोदकैः।
गंधैर्माल्यैश्च विविधैर्धातुभिश्चोपपादितैः॥
घृतगुग्गुलधूपैश्च कृष्णागरुसुगंधिभिः।
भूषणैर्हेमरत्नाद्यैश्चित्राभिः स्रग्भिरेव च॥

नृत्यवादित्रगीतैश्च सर्वैर्वन्योपहारकैः ।
भक्ष्यभोज्योपहारैश्च या पूजा क्रियते नरैः ॥
भगवंत समुद्दिश्य भक्तिः सा लौकिकी मता ॥ इति ।

अथ वाचिकी वैदिकीं भक्तिमाह—

ऋग्यजुःसामजाप्यानि संहिताध्यापनानि च ।
क्रियते ब्रह्म उद्दिश्य सा भक्तिर्वैदिकी स्मृता ॥
वाचिकीति शेषः ।
वेदमन्त्रहविर्यागैर्या क्रिया वैदिकी स्मृता ।
दर्शे वा पौर्णमास्या वा कर्तव्यमग्निहोत्रकम् ॥
प्रशस्तं दक्षिणादान पुरोडाशचरुक्रिया ।
इष्टिर्धृति. सोमपानं यज्ञीय कर्म सर्वशः ॥
अग्निभूम्यानिलाकाशजलाबुकरभास्करम् ।
समुद्दिश्य कृतं कर्म तत्सर्वं ब्रह्मदैवतम् ॥
कायिकी ब्रह्मभक्तिः सा प्रोक्ता प्रत्नैर्महर्षिभिः ॥ इति ।

अथाऽऽध्यात्मिकीं ब्रह्मभक्तिं निरूपयति—

अध्यात्मिकी तु द्विविधा ब्रह्मभक्तिः स्थिता नृप ।
साख्याख्या योगजा चान्या विभागं तत्र मे शृणु ॥
चतुर्विंशतितत्वानि प्रधानादीनि संख्यया ।
अचेतनानि भोग्यानि पुरुषः पंचविंशकः ॥
चेतनः पुरुषो भोक्ता न कर्ता तस्य कर्मणः ।
आत्मा नित्योऽव्ययश्चैव अधिष्ठाता प्रयोजकः ॥
अव्यक्तः पुरुषो नित्यः कारण च पितामहः ।
तत्त्वसर्गो भावसर्गो भूतसर्गश्च तत्वतः ॥
संख्यया परिसंख्याय प्रधानं च गुणात्मकम् ।
ब्रह्मतत्त्वादिक चापि ज्ञात्वा तत्वं विदुर्बुधाः ॥
संख्याकृता भक्तिरेषा सद्भिराध्यात्मिकी मता ॥

अथ योगजां ब्रह्मभक्तिमाह—

योगजामपि मे भक्त्या श्रृणु भक्तिं पितामहे ।
प्राणायामपरो नित्यं ध्यानवान्नियतेंद्रियः ॥
भैक्ष्यभक्षी व्रती चापि सर्वप्रत्याहृतेंद्रियः ।
धारणं हृदये कृत्वा ध्यायमानः पितामहम् ॥
हृत्पद्मकर्णिकासीन रक्तवस्त्र सुलोचनम् ।
परितो द्योतितमुखं ब्रह्मसूत्रकटीतटम् ॥
रक्तवर्णं चतुर्बाहु वरदाभयहस्तकम् ।
योगजा मानसी सिद्धिर्ब्रह्मभक्तिः परा स्मृता ॥
य एवं भक्तिमान् देवे ब्रह्मभक्तः स उच्यते ।
निर्ममो निरहंकारो निःसंगो निष्प्रतिग्रहः ॥
प्राणायामपरो नित्य ब्रह्मध्यानपरायणः ।
जाप्येन च शुचिर्नित्य यतिधर्मक्रियापरः ॥
सांख्ययोगविधिज्ञश्च ब्रह्मज्ञाच्छिन्नसंशयः ।
यजते विधिनाऽनेन यो विप्रः परमेश्वरम् ॥
अद्वय सच्चिदानंदमात्मान प्रकृतेः परम् ।
प्राप्नोति स सुदुष्प्राप्यं ब्रह्मसायुज्यमक्षयम् ॥
ब्राह्मीं विद्यां परां प्राप्य जन्ममृत्युभयापहाम् ।
इत्येवं ब्रह्मभक्ताना ब्रह्मभक्तेश्च लक्षणम् ॥
लौकिकं वैदिकं चापि भीष्मराजाय पृच्छते ।
सप्रमाणं च कथितं पुलस्तेन महर्षिणा ॥

तात्पर्यम्—सच्चिदानंदब्रह्मात्मनि निरतिशयानुरागात्मिका विच्छिन्नचित्तवृत्तिविशेषो ब्रह्मभक्तिपदस्यार्थः । तामनुसृत्य ब्रह्मार्चनप्रकारभेदादधिकारितारतम्यभेदाच्च मानसी वाचिकी कायिकी लौकिकी वैदिकी आध्यात्मिकीत्याद्यो ब्रह्मभक्तेः प्रकाराः सुनिरूपिता अत्रेति विज्ञेयम् । यथासंभवं तदन्यतमप्रकारमवलंब्य यः पुमानीशाराधन कुर्यात् करोति वा स ब्रह्मभक्त इत्यभिधीयते विज्ञैरिति सर्वं शिवम् ॥ श्रीः ॥

## ॥ श्रीः ॥

## ॥ श्रीशंकरोणास्तिविमर्शः ॥ (३५)

अद्वैतानंदसाम्राज्यसिंहासनविहारिणः ।
जगदाचार्यवर्यश्रीशंकरार्यानुपास्महे ॥१॥

निरुपमनित्यचिदंशकेऽप्यखंडे
मयि चिति सर्वविकल्पनादिशून्ये ।
घटयत्यघटितघटनापटीयसी
तव माया जगदीश जीवभेदम् ॥२॥

अथ समस्तसुरासुरनरकिन्नरादिवृंदवंदितपादारविंदश्रीउमापते शंकर-देशिकेंद्र, अस्माकं मत्स्यमार्कंडेयब्रह्मवैवर्तस्कंदभागवतादीनि पुराणानि भारत-रामायणमुख्या इतिहासाश्च व्यक्तमित्थं कथयंति यत्सर्वथा दुःसहं भूभारं निरसितुमंतरातराऽस्यां भारतभूमौ परमकृपालुस्तत्रभवान् स्वमायया‌ऽवतरतीति ।

किं तु जगन्नियंतारं तत्रभवंतं भगवंतं भृशं विस्मृत्य सांप्रतिकैरसुरस्व-भावैर्नरपशुभिः पारमेश्वरं तृतीयं कर्म हठात्स्वायत्तीकृत्य तन्निर्मर्यादं प्रारब्धं श्रूयते । अतस्तदर्थं भगवदवतारस्य यद्यपि नावश्यकता । अथापि यदा धर्मस्य ग्लानिरधर्मस्य चाभ्युत्थानं सर्वत्र प्रसरति तदानीमपींशावतारो भवतीति प्रसिद्धम् ।

अतः सोऽधर्मोन्मूलको धर्मोद्धारकश्चावतारः सांप्रतमपेक्ष्यतेऽस्माभिः ।

भगवन्, पुराऽस्मिन् भारते वर्षे तत्रभवान् श्रीशंकराचार्यरूपेणावतीर्ण आसीत् । अतस्त्वदीयतदवतारसंबंधिनो विमर्शाः प्रामुख्येन मन्मनसि प्रादु-र्भवंति । हे शिवप्रतिबिंबवर्य सद्गुरोत्तम, क्षणमात्रं समष्टिदृष्टिं विहाय व्यष्टिदृष्ट्याऽऽलोचनं कृत्वा यदा—

“ स्वकर्मणा तमभ्यर्च्य सिद्धिं विंदति मानवः । ”

इति भगवद्वचनात् कायादिपरिशुद्धिद्वारा कृतकृत्यतासंप्राप्त्यर्थं चिरायाहं यावच्छक्यं स्वधर्मानुष्ठानाख्यं तप अकरवम् । तदा—

" गुरोस्तु मौनं व्याख्यानम् ।"

इति रीत्या परमेश्वरेण मह्यमित्थं संसूचितम्—

" जज्ञे विष्णुः सनातनः "

इति महर्षिवाल्मीकिवचनप्रामाण्याद् विष्णववतारो भगवान् श्रीरामचंद्रोऽपि यतः कुलगुरुं वासिष्ठर्षिं शरणांचकार । अतः स्वात्मयाथात्म्यबोधेच्छुना पुंसा नियतं सद्‌गुरुरेव समाश्रयणीयः ।

" उपदेक्ष्यंति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ।"

इति भगवदुक्तेश्चाऽऽत्मतत्वज्ञान नेतरस्य कस्याप्यधीनम् ।

विसोबा खेचरे यद् गौरवं सामर्थ्यमासीत् । तच्छ्रीविठ्ठलेऽपि नासीदिति सौचिककुलोत्पन्नस्य साधोर्नामदेवस्येतिहासस्त्वच्छ्रोत्रेंद्रियगोचरो नासीत् किम् । प्राणेंद्रियादयो विपन्नाश्चेत्तस्मात्संकटात्त्वद्रक्षणमहं कुर्याम् । यतस्तेषामधिष्ठाताऽहमस्मि । अथापि देहेंद्रियाद्यधिष्ठातरि मयि मदधिष्ठातुः सद्‌गुरोर्दिव्या शक्तिर्दुर्लभैव । अतः स्वाप्नशार्दूलविकटदंष्ट्राकरालतुंडांतर्गतं निद्रायत्तं नरं तस्मात्स्वाप्नसंकटादुद्धर्तुं देवेंद्रोऽपि यद्वदसमर्थः । जागृतिरेव तत्र मुख्योपायः । तद्वदनादिमहामोहाख्यदीर्घनिद्राग्रस्त मर्त्यं समुद्धर्तुं स्वात्मयाथात्म्यबोधदानदक्षः सद्‌गुरुरेव सर्वथा समर्थः । नान्येषा तत्रावकाशोऽस्तीति ।

हे तपश्चक्रवर्तिन् सद्‌गुरो, समस्तजगद्विघातकरं भीषणतमं युद्धं साक्षादनुभूयमानमपि तस्य भृशं वैतथ्य ख्यापयंती ऐंद्रजालसदृश्यद्‌भुता शक्तिरेकस्मिन् सद्‌गुरावेव वर्तत इति प्राग्भारतीयसंग्रामे समनुभूतम् । स व्यासवसिष्ठप्रभृतिमहर्षीणा त्रेताद्वापराख्यश्च कालोऽतीतः । साप्रतं कलिकालो वर्तते । ततस्तेषामेवानाद्यविच्छिन्नया गुरुपरंपरया संप्राप्तकलिकालीनजगद्‌गुरो, शंकरयतींद्र, पुनरप्यवतारमादाय दीनानामस्माकं दुरंताऽज्ञानजन्या धर्मग्लानिः

कृपालुना त्वयोच्छेत्तव्येति तत्रभवज्जन्मकर्मणोस्तत्वतोऽधिगममुद्दिश्य निदिध्यासोऽस्माभिर्गृहीतः ।

हे व्याख्यानसिंहासनाधीश्वर वाचस्पते शंकर, यद्वद्धिंस्रप्राणिभ्य आत्मरक्षणं विधेयमिति मनीषया जलावतरणपथसमुत्थितकेसारिपदाचिन्हमनुसरति मुग्धश्छागपोतः । किंतु स मृगाधिपतिः पंचास्यस्तेन जात्वपि नावलोकितः । एवं तस्य खरतरनखरदंष्ट्राप्राणा भीषणः पराक्रमोऽपि नानुभूतः ।

तद्वत्सकलनास्तिकमतोच्छेदकस्य तत्रभवतश्चरणारविंदयोर्भ्रमरायमाणस्य मम साक्षात्तत्रभवतः संदर्शनं नासीदेव । युष्मदवतारमायापि मया साकल्येन नाधिगता । नेत्रे निमील्य सानंदं मातृस्तन्यं यथेष्टं पिबता स्तनंधयेन जनन्याः सच्चरितं कथं ज्ञेयम् ।

हे निगमागमसारविच्छकरमस्करींद्र, भवदनुग्रहमंतरा त्वन्माया बहिर्मुखेन मर्त्येन कुतोऽधिगंतु शक्या । अत एवाज्ञो जिज्ञासुरहं युष्मत्सविधावेव विश्रब्धं संवदामि । ममाऽऽलापं श्रोतुं ये नितांतं पराङ्मुखास्तैः साकमाभाषणमरण्यरोदनवन्निष्फलमेव ।

किं चाधुना प्राच्यात्प्रतीच्याच्च दिक्प्रदेशाद् भृशं कर्णयोर्बाधिर्यप्रदायकाश्चण्डतराः शतघ्नीस्वनाः संततं प्रसर्पंति । तन्मध्ये दुर्बलस्य मम भाषितं कः कथं वा शृणुयात् । तस्मात्— शब्दवाहकमानसयंत्रद्वारैवाहं तत्रभवतः पुरतो वदामि । सांप्रतं हठात् प्रवर्तितस्य प्रायः सकलजगद्विघातकघोरतरसंग्रामस्य शांत्यर्थं तत्र तत्र नैकविधान्यनुष्ठानान्युपक्रांतानि स्युः । तदंतर्गतमेवेदं सर्वथा सद्गुरुमातुश्चिंतनात्मकं स्वल्पमनुष्ठानं श्रद्धया यथामत्यहमारभे । तस्य संपूर्णतापादनं साफल्यं च युष्मदायत्तमेवेति विश्वासः ।

भो भोः सनातनधर्मोद्धारकधुरीण जगद्गुरो कदाचिदनवधानतो भाव्यमानादिंद्रचंद्ररुद्रादिदेवतासंबंधिनोऽस्मत्कृतापराधात् त्रातुं भवानेव समर्थोऽस्ति । अतोऽस्मिन् मत्कृतसंवादे यदज्ञानतः कोऽप्यपराधो भवेत् तर्हि तदा मां त्रातुं तत्र भवदंतरा त्रिभुवनेऽपि समर्थो नोपलभ्यते । वन्हिर्यथा-

प्रकाशकस्तथा दाहकोऽप्यस्ति । शिक्षकहस्तस्थिता विद्या छात्रैः सहसा नाधिगम्यते । वेत्रयष्टिः पर व्यक्तं दृश्यते ।

तद्वद्वैदिकमार्गप्रवर्तकाद्वैताचार्यस्य तव मायायाः सकाशादहं बिभेमि । यतः साऽघटितघटनापटीयसी दुरंता देवी कदा मां प्रत्यात्मसात्कुर्यात्तन्न जाने ।

अहो, अनिर्वचनीयतावादिन् शिवमूर्ते, युष्मन्माया यदि मृगजलवद्दृष्टनष्टस्वरूपा स्यात् । तर्हि तदंतर्गतस्य तव स्वरूपस्य याथार्थ्येन निर्णयः कथं विधेयः । तत्रभवंतो युष्मत्परमगुरवस्त्वित्थमुपदिशंति—

**" न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः ।**
**न मुमुक्षुर्नवै मुक्त इत्येषा परमार्थता ॥ " इति ।**

तद्वदिदानींतनाः केचन विरोचनमतावलंबिनो मर्त्याः परमेश्वरावतारं नैव मन्वते । सत्येव मानवरूपधारी रघुकुलतिलकः श्रीरामचंद्र ऐतिहासिकः पुरुषो न स्याच्चेत् तर्हि तद्गुरोर्वसिष्ठस्यास्तित्वे किं प्रमाणम् । एवं भारतीययुद्धं यदि रूपक भवेत् तर्हि तस्य काल्पनिकयुद्धस्योपक्रमे समुपदिष्टकाल्पनिकगीतांतर्गत—

' धर्मसंस्थापनार्थाय संभवामि युगे युगे । '

इत्येतत्प्रतिज्ञावचोऽपि स्वाप्नभाषितवदविश्वसनीयं भवेत् । इत्थं द्वयोः खपुष्पतुल्ययोरद्रिकटयोर्मध्यतो भाविकेन मादृशेनावश्य पंथा निष्कासनीयः ।

भो मदमत्तद्वैतीभगडविदारणपटो पंचास्यवर्य, युष्मच्चरित्रेतिहासो दृगध्वनीनः कृतश्चेन्नूनं मिथोऽसंबद्धानेकशंकरविजयकथितान्वितथांशैनाविभाज्यो दशाशापूर्णांको दृश्यते । यतस्तत्र सत्यांशापेक्षया विचिकित्स्यश्छेद एव महानवलोक्यते । तथा हि— जन्मभूमिर्जन्मकाल आयुर्मान गुरुपरंपरा ग्रंथसंपत्प्रभृतीनां चरित्रसंबंधिप्रमुखतत्वानां यत्रैकमप्यं नास्ति । तत्रैवमात्मिकायास्तथावतारमायायास्तत्वतो वर्णनं सहस्रमुखेन शेषेणापि कर्तुमशक्यम् ।

हे जगदाश्चर्यभूतशंकरमस्करींद्र, तत्रभवान् बुद्धसमकालीनः किंवा ख्रिस्तसमकालीनः । अथवा कुमारिलभट्टकालीनोऽस्ति । अथवैतेषां मध्ये कस्यापि

समानकालो न भवति । तथा त्वज्जन्मस्थानं कालहस्तिशिवमंदिरम् । किं वा चिदंबरक्षेत्रम् । अथवा तद्भिन्नः कालटीग्रामः । आहोस्वित् पूर्णासरित्तटसंनिहितवृषाद्रौ लिंगात्मनाऽऽविर्भूतानंगधङ्मंदिरास्थितकूष्मांडात्तव जनिर्जातेत्यस्य तत्वं विज्ञातुं त्वदन्यः कोऽप्यसमर्थ एव । अथापि शंकरप्रसादेन शंकरमंदिरे चाविर्भूतत्वाच्छंकर इति नाम्ना संस्कृतोऽसीत्यहं मन्ये ।

हे वरदपुत्रशकरभिक्षो, पित्रोरिष्टेनरकर्त्री तव जनी रुद्रदैवत्ये नक्षत्रे संवृत्तेति वक्तुं शक्यम् ।

हे कुलतिलक बालयते, सर्वज्ञ संवृत्त भवत महताऽऽनंदेनावलोकनात् प्रागेवात्मजनक स्वर्लोकं प्रापितवानसि । तथा स्वेष्टसिद्धयर्थं जननीमपि वंचितवानसि । मत्येवं मातृपितृभक्तस्त्वमिति कथं वक्तव्यम् ।

हे सिद्धपुरुषाग्रगण्य द्विजोत्तम बटो, तुभ्यमामलकभिक्षादात्र्याः कस्याश्चिदकिंचनविप्रपत्न्या दारिद्र्य तस्या वेश्मनि स्वर्णामलकवृष्टिं कारयित्वा निरस्तं कृतवानसि त्वम् । इत्थं दिव्यसामर्थ्यसंपन्ने त्वयि तुषाग्नावात्मदेहं भस्मसात्कर्तुमुद्युक्तं भट्टकुमारिलं तस्मात्प्राणसंकटादुद्धर्तुं शक्तिर्नासीत् किम् ।

भोः समस्तकविवृंदगर्वखर्वकारिन् रसिकशिरोमणे,

शून्यं वासगृहं विलोक्य शयनादुत्थाय किंचिच्छनैः
निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य प्रत्युर्मुखम् ।
विश्रब्धं परिचुंब्य जातपुलकामालोक्य गंडस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुंबिता ॥

अ. श. ८२ ॥

तथा—

कांते तल्पमुपागते विगलिता नीवी स्वयं बंधनात्
वासो विश्लथमेखलागुणधृतं किंचिन्नितंबे स्थितम् ।

एतावत्सखि वेद्मि सांप्रतमहं तस्यांगसंगे पुनः
कोऽयं काऽस्मि रतं नु वा कथमिति स्वल्पापि मे न स्मृतिः ॥
अ. श. १०१ ॥

इत्येवमादिसरसतमपद्यैरमरुशतकाख्य काव्यरत्न प्रथते तुभ्यं मूर्तः शृंगाररस इति वक्तव्यम् । किंवा–

नारीस्तनभरनाभिनिवेशं दृष्ट्वा मायामोहावेशम् ।
एतन्मासवसादिविकारं मनसि विचारय वारं वारम् ॥
यावद्वित्तोपार्जनसक्तस्तावन्निजपरिवारो रक्तः ।
पश्चाद्धावति जर्जरदेहे वार्तां पृच्छति कोऽपि न गेहे ॥
यावज्जीवो निवसति देहे कुशलं तावत् पृच्छति गेहे ।
गतवति वायौ देहापाये भार्या बिभ्यति तस्मिन्काये ।
भज गोविंदं भज गोविंदं भज गोपाल मूढमते ।
प्राप्ते सन्निहिते मरणे न हि न हि रक्षति डुकृञ्करणे ॥

इत्यादिगीतं गाता तत्रभवास्त्वं विरक्तसार्वभौम इति वक्तव्यं तदहं न जाने ।

भो योगीश्वरस्वामिन्, परशरीरे प्रविष्टं तव दिव्यं लिंगशरीरममरुक-राज्ञः साचिवैर्ज्ञातम । किंतु तेन राज्ञा सह चिराय दृढ परिचिताभिस्तस्य राज्ञीभिर्न ज्ञातमित्याश्चर्यम् । देव्या शारदया त्वं कामशास्त्रे परीक्षितव्यः स कथाप्रसंगस्तस्यां कामुकस्य तत्पितुश्च चतुराननस्य कथावदर्थवादो नास्ति किम् ।

हे सर्वतंत्रस्वतंत्राद्वैताचार्यवर्य, युष्मत्प्रणीतसौदर्यलहर्यां शाक्ताद्वैतस्य ध्वनिर्न व्यक्तीभवति किम् ।

हे गुरुमंडलाचार्यवर्य, ' नाभाव उपलब्धेः ' एतत्सूत्रभाष्ये पर्यालोचिते भवानद्वैतीति वाच्यम् । उत द्वैताद्वैतीति वक्तव्यम् । एवं वसिष्ठगौडपादादिभिः प्रत्नैराचार्यैः प्रकटीकृताजातवादं सुव्यक्तं पुरस्कर्तुरद्वैततत्वविदस्तव व्यापकः समन्वयात्मको लोकसंग्रहोऽपि भृशमाश्चर्यमुत्पादयति ।

भोः पदवाक्यप्रमाणपारावारपारीण सर्वज्ञ प्रभो, अनाद्यनंते युष्मच्चारित्रांबरे ग्रीष्मगमध्यान्हार्कवत्प्रकाशमानं तव दिव्यं स्वरूपं छादयतामिव नैकविधक्षुद्रविकल्पमेघाना स्वैर ताडवमपि दुर्ज्ञेया तव मायैवेति निश्चिनोमि ।

हे वैदिकमार्गप्रवर्तकमहात्मन्, अतलस्पर्शस्य त्वच्चरित्रमहोदधेः परतीरं द्रक्ष्यामीत्याकांक्षापिशाची मा नैव स्पृशति । सैंधवपुत्तलिका महासागरस्यातिगभीरं तलं द्रष्टुमाकांक्षा बिभृयाच्चेत् तस्याः पूर्तेः प्रागेव सा तेनाब्धिना साकं भेदासहिष्णुतादात्म्यं प्राप्नुयादित्यसदिग्धमेव । तथापि तदन्यत् किं प्रार्थ्यते । यया कयापि रीत्या युष्मच्चरणारविंदयोः संस्मृतिरेव श्रेयस्करीति बलवद्विश्वासो वरीवर्ति ।

भोः पुण्यश्लोक परमहंसोत्तम, तत्रभवतश्चरित्रारविंदं पूर्णानद्याः समुद्भूत सद्यदा प्रफुल्लं सवृत्त तदा तेनाऽऽकाशादिभूतपंचके प्रत्नानुभवेन सह तद्भिन्नानुभवस्य सामानाधिकरण्य कृतं स्यादेवेति विश्वासः । ध्रुव सुधुम्नैव पूर्णा सरित् । ह्रदेव त्वच्चरित्रकमलकासारो भवेत् । मनसो गुरुत्व शास्त्रसंमतं लोकप्रसिद्ध च । तस्माद्विभिन्नमनसोत्थितान् विभिन्नानुभवात्मकास्त्वच्चारित्रांशानेकत्र सगृह्य तेषा नवरत्नहारवद्वारा गुंफितश्चेद्विसंगत्यलंकारवदाभासमानोऽपि भाविकसहृदयहृदयाल्हादको भवतीति स्वानुभवतः पुनरुक्तमेतद्भाषितम् ।

भोः पचगंगातीरवासकमलानिकेतनकरवीरसिंहासनाधीश्वरजगद्गुरो शंकर, यस्यामनेकपामरायाणा सभवः । तस्या एव तीर्थयात्रायाः फल माहात्म्यं चाधिकमिति प्रसिद्धं शास्त्रे लोके च । तस्मादहमप्युपरिप्रदर्शितान् ज्ञाताज्ञातविकल्पानुपेक्ष्य तत्रभवतः पूज्यचरित्रात्मककैलासयात्रा कर्तुमिच्छामि अतिगहनायां तस्या प्रेरको मार्गदर्शकः संरक्षकश्च त्वमेवेति सप्रश्रयं संप्रार्थ्य वाङ्मयीं तामारभे ।

हे यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाध्यष्टांगयोगानुष्ठाननिष्ठतपश्चक्रवर्तिन् श्रीशंकरस्वामिन्,-

" सूर्याचंद्रमसौ धाता यथापूर्वमकल्पयत् दिवं च पृथिवीं चांतरिक्षमथो स्वः " ऋ०

" समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च " ब्र. सू.

तेषां ये यानि कर्माणि प्राक् सृष्ट्यां प्रतिपेदिरे ।
तान्येव ते प्रपद्यंते सृज्यमानाः पुनः पुनः ॥
ऋषीणा नामधेयानि याश्च वेदेषु दृष्टयः ।
शर्वर्यंते प्रसूताना तान्येवैभ्यो ददात्यजः ॥
यथाभिमानिनोऽतीताः स्तुल्यास्ते साप्रतैरिह ।
देवा देवैरतीतैर्हि रूपैर्नामभिरेव च ॥
एत एव तथान्ये च एवं रूपाक्रियास्पदम् ।
चिराऽचिराद्भविष्यंति मायेयं त्रितना यतः ॥
सदृशाचारजन्मानस्त एवान्ये च भूरिशः ।
यो. वा. ६।६।

इत्येव ब्रह्मनिष्ठ. कुलगुरुर्वसिष्ठमहर्षिः श्रीरामचंद्रं प्रति समुपदिशति । " एवमेव ते ते प्रसगास्ताश्च ताश्च व्यक्तयः स्वल्पेन पार्थक्येनाऽथवा पार्थक्यं विनापि प्रतिकल्प प्रतियुग च जलतरगवज्जायते लीयते च । श्रुतिस्मृती अप्ये एवमेव कथयतः । इतिहासस्य पुनरावृत्तिर्भवतीत्यर्थकः केषांचिदवितथः प्रवादोऽप्यास्ति । सामुद्रे ह्रासवृद्धी । जनताया अपकर्षोत्कर्षौ । धर्मग्लानि-स्तत्संस्थापने । जननमरणे । सुख दुःखं चेत्यादिद्वंद्वानां चक्रनेमिक्रमवदनवरतं यः प्रकारोऽनुभूयते । सोऽपि हे जगद्गुरो, त्वन्मायैवेति वेद्मि । त्वमेव पूर्वपक्षमुत्थापयसि । सिद्धांत च त्वमेव कथयसि ।

हे समस्तजगत्कल्याणकारिन् सद्गुरो, सुमुक्षया दृष्ट्या विशुद्धेन च चित्तेन ये भवन्मायायाः परीक्षणं कुर्वंति । त एव ता साक्षात् पश्यंति । यः परीक्षते स एव परीक्षिदित्यभिधीयते । प्रागेतादृशेन परिक्षिता राज्ञा धेनु-वृषभरूपधारिणोः पृथिवीधर्मयोः सवादः श्रुतः—

" दया सत्यं पावित्र्यं स्वस्वधर्मानुष्ठानाख्यं च तपः" । इत्यतैश्चतुर्भिश्च-रणैर्निष्प्रतिबंधं सर्वत्र गता धर्मः कालमहिम्ना तदानीं खंजोऽभूत् । एकेनैव

पादेन खंज आसीदिति न । अपि तु तप पावित्र्यं दया इत्येतत्तस्य पादत्रयं भग्नमभवदिति स वृषरूपधारी धर्मस्तीव्रां ग्लानिं भजति स्म । तां तस्य दुरवस्थां वीक्ष्य गोरूपधरा पृथिवी भृशं दूयमानचित्ता बभूव । तथाविधां तामवलोक्य धीरगंभीरस्वभावो धर्मः ' वंदे मातर ' इति मंत्रेण तां प्रणिपत्य सादरं पृच्छति स्म ।

हे मातः, त्वमेवं कुतो दुःखिता संवृत्ताऽसि । मम पादत्रयं भग्नमिति दुःखं करोषि किम् । अथवा इतःपरं त्वदुपरि शूद्रादीनां निराबाधमाधिपत्यं भविष्यतीति दुरंतया चिंतया व्याप्तासि किम् । किं वा ब्राह्मणाः स्वयमेव स्वीयं ब्राह्मण्यं पददलितं विदध्युरिति त्वं महता शोकेन विव्हलासि किम् ।

हे मातः, उत्तरस्मिन्काले सम्यक्तया स्त्रीणां रक्षणं न स्यादिति दुनोषि किम् । तथा नैकविधैरसुरस्वभावैर्नरपशुभिरज्ञानिनः कुमारादयो दुरुपदेशादिभिर्भ्रष्टाः कृताः स्युः । क्षत्रियादयोऽधमा भवेयुः । सुराज्यं स्वराज्यं विनष्टं भवेत् । जनता क्षुद्रविषयेष्वासक्ता भवेत् । एवमाद्यागामिदुराघातचिंतया त्वं जर्जरितासि किम् । स्वैरवृत्तिनोच्छृंखलेन कलिना तव सर्वस्वमपहृतमित्यत्यंतं कृशासि किम् ।

**इदं समाचक्ष्व तवाधिमूलं वसुंधरे येन विकर्शितासि ।**
**कालेन वा ते बलिनां बलीयसा सुरार्चितं किं हृतमंब सौभगम् ॥**

इत्येवं तेन भूमातुर्दुःखदुःखितेन खंजेन धर्मेण कृतं हार्दं प्रश्नसमूहमाकर्ण्य सा गोरूपधरा पृथिवी चंडतरशोकावेगवशतः श्रोतृचित्तविदारक हंभारवमुच्चैः कृत्वा तं वृषरूपधरं खंजं स्वपुत्रं धर्ममित्थमवादीत्—

हे साधुशील तात धर्म, अंतर्गूढघनव्यथा मदीयशोककथा तुभ्यं किं वच्मि । निरतिशयप्रेम्णा मम सर्वथा संरक्षणकर्ता श्रीगोपालकृष्णो यदा नैजं स्थानं प्रस्थितस्तदारभ्यैव तवेयं दुरवस्था संवृत्ता । एतदेव मम दुःखस्याद्यं कारणम् । सांप्रतं तु विकर्मवशतः प्रायः समस्तं जगदेव भीषणतरं सूनास्थानं

संवृत्तमिव दरीदृश्यते । तस्मात्सूनास्थानात् कथंचित्सौनिकदृष्टिं वंचयित्वा निर्मुक्ताहं जीर्णतरधर्मपुर्यंतर्गते कस्मिंश्चिद्‍घोषस्थान आश्रयार्थं गतवत्यभूवम् । किंतु तत्रापि विशुध्दस्वांतस्याप्यधुनातनस्य परीक्षितः कालिप्रभावतः प्रागुक्त-परिस्थित्यपेक्षयाऽपि भीषणं दृश्यं दृग्गोचरं जातम् । करुणतरसंवादश्च श्रोत्र-योरतिथिः सवृत्तः । पूर्वं नूत्न एव कलिकालस्याऽऽरंभ आसीत् । कलेर्बलेन वर्धिष्णुः शूद्रसत्ता गोरूपधरा मा वृषरूपिणं च त्वां कशया ताडयितुं प्रवृत्ता । किंतु तदानीं—

यस्य राष्ट्रे प्रजाः सर्वास्त्रस्यंते साध्वसाधुभिः ।
तस्य मत्तस्य नंक्ष्यंति कीर्तिरायुर्भगो गतिः ॥

इति वचनस्यार्थं सम्यग्जानानः सामर्थ्यसंपन्नो धार्मिकः परीक्षिद्राजा विद्यमान आसीत् । तेन राज्ञा पृथिविधर्मयोः कलिना कृतं तद्विडंबनं विज्ञाय कलेः शासनं कृत्वा " द्विविधं द्यूतम्, मद्यपान, स्त्रीविषयकः क्षुद्रव्यवहारः, अवैधहिंसा, सुवर्णम्, उन्मादः, मिथ्याव्यवहारः, मिथः शत्रुत्वम् " इत्यादीनि कलेः स्वैरसचारस्य स्थानानि नियमितानि । धर्मस्य च भग्नं पादत्रयं संयुज्य पूर्ववदृढ कृतम् । पृथिवीमातु समाश्वासनपूर्वकमुत्कर्षं विधाय स्वीयं क्षत्रियत्वमन्वर्थं कृतम् । प्राक् संजातमिदं सर्वम । किंतु—

हे विश्वोद्धारक जगद्‍गुरो शंकर, अधुनातनी परिस्थितिर्न केवलं पुनरावृत्तिः । अपि तु ततोऽप्यधिकतरा शोच्या संवृत्ताऽस्ति । अद्य कले-रगम्यं स्थानं कुत्रापि न वर्तते । तेनाद्य धर्मस्य चत्वारोऽपि पादाः प्रभग्ना इति तस्यात्यंतंग्लानिरागता । भगवन्निष्ठचित्तवृत्त्याऽर्थादंतर्मुखतयाऽनुष्ठीय-मानस्य तपसोऽद्य गंधोऽपि नावलोक्यते । तुच्छतरस्यास्पृश्योद्धारयत्नस्य क्षुद्र-तरसहाशनेन क्रियमाणा सागता, अनादिसिद्धजातीना नितरामशक्यमुन्मूलनं कर्तुं प्रवृत्तानि विध्वसमंडलानि, अवलोन्नतिमंडलानीत्येवमादीना दुष्प्रयत्नानां पर्यवसानं तु—

' विधवोद्वाहः, मिश्रविवाहः, प्रतिलोमविवाहः, भुक्तकुमारीविवाहः, विवाहनिरपेक्षः संभोगः ' इत्यादिषु नरकप्रदेषु संकरेषु जायमानं दरीदृश्यते ।

पश्वादीनामपि व्रीडोत्पादकेनाऽऽहारविहारविषयकेन दुराचरणेन वैशुध्याख्यं धर्मस्यांगं छिन्नप्रायं संवृत्तम् । यत्किंचिदपि प्रमादे सति सर्वनाशकृदचेतनं यत्रादिकमपि कदाचिद्दययाऽऽर्द्रं स्यात् । किंत्वभूतपूर्वया सर्वानर्थकारिण्यात एव कांदिशीकताप्रदात्र्या हिंसया स्वीयक्रौर्येण नरमांसाशिनो राक्षसा अपि व्रीडया विनम्रतुंडाः कृताः संति । अंततो येनैकचरणेन कथंचिदतिष्ठत्तपस्वी धर्मस्तस्य सत्यात्मकमवशिष्टं पादमपि विच्छिन्नं कर्तुं सांप्रतिकं जगदहमहमिकया प्रवृत्तं दृश्यते । तत्रापीदं दुःखास्पदम् । यत्कालिं प्रशास्य भूमातुर्दुःखपरिमार्जनं विदध्यादेतादृशः क्षत्रियकुलावतंसः परीक्षित् सांप्रतं नावलोक्यते । तथा तस्याः शोकस्याऽऽद्यं निदानं धर्मग्लानिरेवेति जानानो मेधावी परीक्षकः कुत्रापि नोपलभ्यते । तस्मात्—

हे निःशेषनास्तिक्योच्छेदपुरःसरसद्धर्मोद्धारकाऽऽचार्यमणे, न्यूनाऽधिका वाऽऽस्ताम् । इतिहासस्य पुनरावृत्तिर्भाव्यैवेति यदि भवदीयमायायाः स्वभावस्तर्हि प्राक्काले श्रीशुकशिष्यैर्यद्धुद्धारकार्यं कृतं तस्य कार्यस्य पुनरावृत्त्यर्थं तत्प्रशिष्यैः पुनरप्यवतारं गृहीत्वा धर्मस्य समृद्धिः कर्तव्यैव । तथा भूमातुश्च दैन्यं निरासितव्यम् । इतीयमस्माकं सर्वेषां सद्गुरुमातुश्चरणारविंदयोर्मुहुर्मुहुः सप्रश्रयं साग्रहं च विज्ञप्तिर्वर्तते ।

हे महामायिन्मस्करींद्र, लोकसंग्रहकर्त्री युष्मन्माया भृशं दुर्ज्ञेया किल । अद्यावद्वयस्मिञ्जगति युष्मन्मायया नानाविधानि नामानि धृत्वा कति वा धर्माः पंथानश्चोद्भाविताः स्युस्तद्भवानेव जानाति । किंतु तेषां मध्ये को वा सद्धर्मः । असद्धर्मश्च को वा । वैदिकेतरधर्मादीनां कथाऽऽस्तां नाम । अथापि—

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।
षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥

इत्येवं पंचविंशतितत्वप्रतिपादकसांख्यदर्शनप्रणेता कपिलर्षिस्त्वमेव खलु । तथा—

" धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायाभावानां साधर्म्य-वैधर्म्याभ्यां तत्वज्ञानान्निश्रेयसाधिगमः "

इति सप्तपदार्थवादी कणादोऽपि भवान्न किम् । किमधिकेन, सुर-गुरुणा बृहस्पतिनैव चार्वाकदर्शनं जगति प्रसारितम् । येन गीताया उप-देशः कृतस्तेनैव गौतमबुद्धो भूत्वा वेदबाह्यो बुद्धधर्मः प्रवर्तितः ।

यः सनातनाद्वैततत्त्वस्योद्धारकः श्रीमानाद्यशंकराचार्योऽभवत् । स एव स्वतनयं कार्तिकेयं प्रति कुमारिलभट्टो भूत्वा द्वैतोपजीव्य कर्ममार्गं भुवि प्रसारयेत्युपदिदेश । राज्ञो दिवोदासस्य महत्त्व निरसितुं श्रीगणेशदेवो नास्तिकदर्शनस्य पुरस्कारं कृतवानित्यपि पुराणेषु श्रूयते ।

हे स्वयशःसुधांशुतोषितभुवनत्रयकर्मंदिन्, त्व शंकरो यथाऽऽचार्यवर्य-स्तथा निंबार्करामानुजादयोऽपि लोकसंग्रहकर्तार आचार्यकल्पा न किम् । एवमिदानीमपि नूत्नत्नन्येपीतिरीत्या लोकशास्त्रपरीक्षणाभिनिवेशं प्रदर्शयत आचार्या गुरवो माहात्मानो महर्षयो देवर्षयो राजर्षयस्तीर्था वाचस्पतयः सर्वतंत्र-स्वतंत्रादयः कलिपुत्राः स्वल्पा सन्ति किम् ।

भूतकाले राज्ञो वेनस्योरु मथित्वा कतिपयैर्ब्राह्मणैर्निषाद उत्पादितः । तद्वदधुनाप्यापद्धर्मस्योरौ नव्यधर्माभासस्य दत्तविधान प्रस्तूयमानं श्रूयते । न एत उच्छास्त्राः स्वैरमत्यनुसारेणोपक्रान्ताः प्रयत्नाः किं लोकसंग्रहाय तन्नाशाय वा प्रभवंतीति न ज्ञायते ।

इत्येव दुरता दुरधिगमा च त्वन्मायामोहदात्रपि भगवत्कृपया मोह-निवारयित्रीत्यसंदिग्धम् । अध्यारोपापवादात्रपि भवतो लीलैव ।

भोस्त्रिभुवनसार्वभौम भूमन्, सर्वेष्वप्येष्वाऽऽचार्यादिषु भगवत्पूज्य-पादश्रीमता तत्रभवता बोधमायायाः प्रभावः केवलबुद्धिप्रामाण्यवादि-स्वप्याऽऽधिक्येन दृग्गोचरो भाव्य इत्यत्र किं बीजम् । तथा हि–विवेकानंद स्वामीरामतीर्थ बाबु अरविंदघोष तिलक रानडे प्रभृतिभिः स्वतंत्रविचारशीलै-राधुनिकैरपि शांकरतत्त्वज्ञानस्य पुरतः स्वाशिरस्यादरातिशयेन विनम्रीक्रियंत

इति सुप्रसिद्धम् । अतस्तस्मिन् शाकरे तत्त्वज्ञाने सुनिर्मला चित्ताल्हादिनी स्वसंवेद्या श्रेयस्करी काप्यनिर्वचनीया चमत्कृतिर्धर्तन इति निःसंदिग्धमवगम्यते ।

तथा स्वात्मान तत्वविदमन्या अन्यदेशीया अपि पुमांस आचार्योत्तमस्य तव सर्वश्रेष्ठबुद्धिवैभवायेतरापेक्षयाऽधिकतरं महत्वं ददतीति श्रूयते। तवावतारस्य समयः कोऽप्यास्ताम् । परं तत्पूर्वं लब्धसत्ताकस्य तत्त्वज्ञानस्योपरि पूज्यपादैस्तत्रभवद्भिः प्रसन्नगभीरेण स्वीयप्रस्थानत्रयीभाष्येण विशेषतः शारीरकमीमांसाभाष्येण निरुत्तरबुद्धिवादेन विभिन्नसत्ताया एकत्र समन्वयेन ज्ञानोपासनयोः श्रेयस्करसंयोजनेन कर्मणोऽपि सुरुचिरतात्पर्यकथनेनासंदिग्धतत्त्वज्ञानेन जीवन्मुक्त्यवस्थायाः समुदीयमानाद्वैतवस्तुनः साक्षात्कारेण लोकसंग्राहकेण च परिशुद्धचरित्रेणाननुभूतपूर्वाऽत्यंतभास्वरा स्वीयाऽलौकिकप्रज्ञायाः प्रभा तथा पातिता यथाऽनंतरोत्पन्नानां भिन्नभिन्नमतमाविष्कुर्वतां सर्वेषामपि दीर्घतरेण कालेनापि निरसितुं सा सर्वथाऽशक्यैव संवृत्ता । तस्मात्—

हे पिनाकपाणे समस्तविद्येशान, श्रीमच्छंकराचार्यनामकं यदद्वितीयं भवतः स्वरूपं तस्यैव यशोगानमुच्चैर्विधेयमिति मन्मनस्युत्कटोऽभिलाषोऽस्ति । अहो श्रीशंकरपाराशरिन्, तत्र भवदुद्भावितस्यालौकिकशिवंकरस्य साम्यदर्शनस्य निरुपाधिकस्य भेदत्रयरहितस्याद्वैततत्वस्य शुभंकर्याः शास्त्रीयसमन्वयपद्धत्याः श्रुतिसंमतस्य बुद्धिवादस्य गुरुषु वेदादिशास्त्रग्रंथेषु च नितांतश्रद्धाया अमेयानुभवस्य श्रेष्ठतमायाः सगुणनिर्गुणोपासनायाः पवित्रतमाऽऽचरणस्य च तथैतद्विपरीतस्य साम्प्रतिकसवृगोलंकारस्य नितांतमस्वाभाविकाऽऽधुनिकसाम्यवादस्याऽततो द्वैतनिष्ठस्य सोपाधिकत्वेन भ्रमान्नातिरिच्यत ऐक्यस्य । भृशं दुर्बलायाः स्वीयसत्वविघातिन्याः प्रक्षिप्तवादात्मिकायाः क्षुद्रभिक्षावृत्तेर्निरर्गलस्य त्रिवितरोदर्कस्य प्रतिबुद्धिविभिन्नस्य फलतोऽनुपयुक्तस्योपयुक्ततावादस्य पूर्वोक्तश्रद्धाया दुरंतस्यानुभवशून्यस्य पाखंडमतपक्षपातस्य जनतायाः क्षुद्रध्येयस्यैव निःपक्षपातिना चेतसा विमर्शे कृते—

" प्रासादशिखरस्थोऽपि काको न गरुडायते । "

किंवा " नृत्यति पिनाकपाणौ नृत्यंत्यन्येऽपि भूतवेतालाः । "

अथवा—" आबद्धकृत्रिमसटाजटिलांसभित्तिः
आरोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुंभतटपाटनलंपटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥ "

इत्याद्यर्थकं सुभाषितजातं स्मृतिपथारूढं भवति । अतः कालत्रयाबाध्यसच्चिदाऽऽनंदाद्वैतात्मतत्त्वस्य प्रदर्शनेन जीवाना निरतिशयाऽऽनंदं विदधत अत एव शंकर इत्यन्वर्थाभिधानं बिभ्रतस्त्रिभुवनसद्गुरोश्चरित्रस्य तत्वज्ञानस्य चाहर्निशं सुशांतेन चित्तेनानुसधानं विधेयम् । तदेव निश्चितं श्रेयस्करमिति दृढ विश्वासोऽस्ति ।

" सर्वानर्थसमारंभमूलो मोहादुदेति यः ।
ममतावततेर्मूलमहंकारः स उच्यते ॥
अहकारवशादापदहंकाराद्दुराधयः ।
अहंकारवशादीहा नाहंकारात्परो रिपुः ॥

इति वासिष्ठोक्तेः ।

" अहंकारममकारावेव द्वैतस्याद्यं निदानम् "

इति भगवदुपदेशाच्च ।

" द्वितीयाद्वै भयं भवतीति श्रुतेरुक्तद्वैतभावनैव दुःखस्य बीजम् । अर्थादद्वैतानुभूतिः सुखहेतुरिति पर्यवस्यति । " तत्र को मोहः कः शोक एकत्वमनुपश्यतः " इति श्रुतिरप्यस्ति ।

तत्र दुःखं प्रतिकूलवेदनीयत्वादस्वाभाविकमनारोग्यमेव । सुखं त्वनुकूलवेदनीयत्वात्स्वाभाविकमारोग्य बोध्यम् । इत्येवं व्यष्टिं समष्टिं च भृशं पीडयितुर्भवरोगस्य वास्तविक्या चिकित्सायां सत्या स्थूलदृष्टेर्बहिर्मुखस्य जनसार्थस्य चित्ते सहसा नाविर्भवति सेति साहजिकी भवतो मायैवेति ज्ञायते । यतो

नैकविधानामाधिव्याधीनामुपर्यहंताममयोस्त्यागात्मकं स्वाधीनं सुलभमुपायमकृत्वा तद्भिन्नं कष्टसाध्यं प्रचुरधनव्ययं पराधीनं संदिग्धमुपायं विधातुमेव जनतयाऽह-र्निशं प्रयतितव्यमित्थ दुर्निवारं मोहं प्रेरयितुस्तव मायैवेति न वाच्यं चेदन्यत् किं वक्तव्यं तन्न ज्ञायते।

यद्वत् कस्याचिन्माणवकस्य शरीरे विद्रधिना पामया वा भृशं पीडिते तदुपरि तीक्ष्णमौषधं देयम्। किंवा गोपीचंदनस्य लेपः कार्यः। पुटपाकेन वा (पोटिस) चिकित्सा विधेया! उत गंपलासपट्टिकया प्रतिक्रिया कर्तव्या। तद्रोगबीजमन्यत्र संक्रांतं यथा न स्यात्तथा किं विधेयम्। कंड्वाधिक्ये किं कार्य-मित्याद्यायां बाह्यचिकित्सायां तथा—अपथ्यवर्जनम्। कोष्ठशुद्धिः। शोधनग्रहणम्। रोगबीजस्य निःशेषमुच्छित्त्यै शोणितशुद्धिकरस्यौषधस्य प्राशनम्। इत्याद्या-तरचिकित्सायां च यथा पार्थक्यमस्ति तद्वदेव व्यष्टिसमष्ट्योराधिव्याधिचि-कित्सायां पृथक्त्वं वर्तत इति प्रथमं कस्यापि मनसि नायाति।

कंड्वाधिक्यं नूतनशोणितसंचारस्यापि चिन्हं भवितुमर्हति। सेष्टाप-त्तिरेवेति मत्त्वा निर्दिष्टः कुमारो यदि नैजैककरांगुलीनामंतराऽपरकरांगुलीः प्रवेशयित्वा तासां दंतोष्ठखादनपुरःसरं कौरवपांडवयोः संकुलसंग्रामवत्त्वेषाति-रेकेण संघर्षणं कुर्यात्तर्ह्यादौ क्षणमात्रं सुखाभासमनुभवेत्। किंतु पश्चात्प्रज्वलि-ताग्निप्रखरज्वालासंपर्कोत्थासह्यवेदनावच्चंडतरवेदनाभिस्तुंडं प्रसार्योच्चै रोदनं विद-ध्यादित्येवाततस्तत्र पर्यवस्यति।

सांप्रतमस्मिञ्जगति परस्परेर्ष्याकलुषितस्वान्तैर्युध्यमानराष्ट्रैस्तुच्छतरमहत्त्वा-कांक्षायाः कंडोः प्रशमनाय सर्वानर्थकरस्य हिंसात्मकस्य वन्हेः प्रखरतरः प्रतापो हठात्सर्वत्रैव प्रसारितः। यत्र प्रत्यहं परःसहस्राण्याकाशयानानि निर्मीयंते। लक्षावध्यग्निगोलकाः समुत्पाद्यते। असंख्याः शतघ्न्या नलिका-यंत्राणि चोत्पाद्यंते। तथा स्फोटकद्रव्याणां पर्वततुल्या राशयः प्रकटी-क्रियंते। छिंद्धि भिंद्धि ताडय मारय विदारय विपोथयेत्येवमतिभीषणः कर्णयो-र्बाधिर्यप्रदानशौंडः कोलाहलोऽहर्निशं प्रचलति। तादृशे मृत्योः प्रसारित-विकटतुंडसदृक्षे सूनास्थाने 'अहंताममतयोस्त्यागो विधेयः' इत्थं शांत्युपायं

श्रोतुं मनस्यानेतुं च कस्यावसरोऽस्ति । कुत्र वा तत् कुटिलतरमहत्त्वाकांक्षायाश्चंडतमं वाग्जालम् । कुत्र चैकतंतिकावाद्यवादनपूर्वकं भृशं दुर्बलमहंताममतयोस्त्यागस्य मंदगानम् । नूनमित्थमेव विकृतभावनया भ्रांतं सांप्रतिकं जगद् ब्रूयात् । पुराकाले युध्यमानराष्ट्राधिपाः साम्राजोऽपि जगद्गुरोश्चरणारविंदेष्वात्मनः किरीटं विनम्रं कुर्वंति स्म । इदानीं तादृशः प्रकारः प्रायः कुत्रापि नोर्वरितः ।

जगद्गुरुणा श्रीकृष्णेनापि रणधुरंधराय पार्थाय विश्वरूपाविष्करणमिषेण स्वीयमायायाः प्रख्यापनं यावन्न विहितं तावत्तेन क्रियमाणतत्सारप्यस्य वास्तवज्ञानमर्जुनस्य नासीदेव । तदनंतरं तु ' शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ' इत्येवं विज्ञप्तिस्तस्या रणभुवि तेन नरवीरेण कृता । एकतश्चंडतररणवाद्यानां गगनभेदिनि ध्वनौ भृश संप्रवृत्तेऽपि तस्माज्जगद्गुरोः सकाशात् स्वधर्मः सम्यगधिगतश्च । दैववशतः प्राप्तात्संकटात्केनापि लौकिकेनोपायेन निर्मुक्तिरशक्येति प्रसंगे सत्येवाऽलौकिकमुपायं विधातुं मानवस्य बुद्धिः स्फुरति । किंतु तादृशप्रसंगात्प्रागेव विवेकेन यो जागृतो भवति स एव तत्वतो मतिमानित्यवगंतव्यम् ।

हे महात्मञ्जगद्गुरो, पंचजनः कोऽप्यसाध्यरोगेणाक्रांतः, किंवाऽपरिहार्यया जरया ग्रस्तः, अथवाऽत्यर्थं क्रुद्धेन विशालतुंडेन ललज्जिव्हेन व्याघ्रेण शोणितपिपासया तीक्ष्णतरदंष्ट्राकराले स्वीयाऽऽननगर्ते प्रक्षिप्तः, यद्वा निःशस्त्रायामसहाय्यावस्थायां खरतरकृपाणहस्तैः शत्रुभिर्वेष्टितः, किंवा सुंदराया कस्याचिच्छीलवत्या कुलयोषित्यधमेन केनचिन्नरपशुना बलात्कारः कृतः, अथवा कस्यचिज्जरठस्य संसारभारनिर्वोढा एकः पुत्रः सहसा दिवंगतः, किंवा कस्यापि कुबेरकल्पस्य लक्ष्मीपुत्रस्य निःशेष धनं भूपसैनिकैर्मदमत्तैर्लुंठितम् ।

एवमाद्यापदि दुरदृष्टवशतः प्राप्तायां तत्र लौकिकः कोऽप्युपायः किं कुर्यात् । कृतांतकटकामलध्वजतुल्यजरायाः परिवर्तनकर्ता कोऽस्त्यस्मिञ्जगत्यगदकारः । हिंस्रेण शार्दूलेन तीक्ष्णतरनखरैर्वक्षसि विदारिते तत्र केन किं

विधेयम् । शिरोपर्यग्निगोलकानां करकावृष्टिवद्वृष्टौ प्रवृत्तायां तत्र जीविनाशाकरणं व्यर्थमेव न किम् । भ्रष्टकुलयोषितः पुत्रे पावित्र्यं कथमाप्नुयात् । स्वर्गतं सुतं को वा मर्त्यः पुनरानयेत् । राजपुरुषैरेव सर्वस्वे लुंठिते दुर्बलया प्रजया किं विधेयम् ।

तात्पर्यम्–सर्वथा मानुषप्रयत्नाऽसाध्ये दारुणतरप्रसंगे सति परमेशकृपया सदसद्विवेकेन जागरितो भूत्वा स्वात्मनो वास्तवं स्वरूपमेवाऽलौकिकं चेत्सर्वमिदं स्वप्नतुल्यमिति निश्चयो भवेद्यदि तर्हि तज्जन्यानंदो निरुपम एवेति सद्गुरुपदेऽहंताममतासमर्पकस्य धीरनरोत्तमस्यानुभवो विद्यते । तथा कोऽप्यापत्प्रसंगः परमेश्वरकृपया निरस्तो भवतीत्यपि समनुभवोऽस्ति ।

हे सद्गुरो, इत्थं बोधात्मकं तव वास्तवं स्वरूपं सुप्रसन्नं शंकरं चास्तीति भवरोगग्रस्तोऽहमन्यत्र कुत्राप्यगत्वा भिषक्सार्वभौमं त्वामेव शरणं प्रपन्नोऽस्मि । अतोऽनुकंपया तव यथार्थस्वरूपाधिगमात्मिकां स्वधर्मजागृतिं मयि प्रकटय्य दीनमिमं जनं कृतार्थं कुर्वित्यभ्यर्थये । मदीयं मनस्त्वदभिमुखं [ अंतर्मुखं ] कृत्वा साक्षाद्भवता साकमेवेत्थं संवदामि । पुनरपि भगवदवतारो भाव्य इत्यनन्यभावनया संततं भवदंघ्रिसरोजचिंतनं कुर्वे । यथा बहिस्तथांऽतरपि बोधात्मनाऽवतीर्णो भूत्वा भ्रातं जगदभ्रातं निर्भयं च कर्तव्यमित्यभीक्ष्णं प्रार्थयामि ।

हे जगद्गुरो उमापते, "इंद्रो मायाभिः पुरुरूप ईयते ।" इति श्रुतेः, तथा—

"निरुपमनित्यचिदंशकेऽप्यखंडे
मयि चिति सर्वविकल्पनादिशून्ये ।
घटयति जगदीश जीवभेद
अघटितघटनापटीयसी माया ॥"

इति त्वदुक्तेश्च सच्चिदानंदाद्वयब्रह्मात्मिका त्वमेव—

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेर्विशुद्धसत्त्वप्रधानायां स्वविषयायां स्वाश्रयायामनाद्यनिर्वच्यायां स्वानुभवगम्यायां

मायाया प्रतिबिंबिना तदुपहिना तदवच्छिन्ना वा स्वतंत्रः सर्वज्ञो जगदीश्वर इत्यभिधीयते । तस्यामेव पूर्वोक्तायां मलिनसत्त्वाधिक्यवत्यामविद्येति नाम्ना व्यवह्रियमाणायां प्रतिबिंबिता तदुपहिना तदवच्छिन्ना वा सा दृगेव किंचिज्ज्ञः परतन्त्रः प्रायो दु खमनुभवित्रिना जीव इत्युच्यते । अर्थात्—स्वगतसजातीयविजातीयेति भेदत्रयरहिताया एव प्रागुक्ताया दृशः स्वरूप ईशजीवेति विभेदापादके मायाविद्ये । तयोर्महदतरमस्तीत्यन्यदेतत् । तथा हि—

त्व मायातर्गतोऽप्यध्यात्मज्ञाननिष्ठः पूर्णः पुरुष । अर्थान्नित्यमुक्त एवासि । वयं जीवास्त्वाचारविचारयोरुच्चै: स्वातंत्र्यमुद्घोषयंतः स्वैरमुच्छास्त्र वर्तयंतो भौतिकविज्ञानवादिन इति नामधारिणः कर्मचीरज्जुवाश्चिराय बद्धा एव तिष्ठामः । पाश्चात्त्यविद्यावारुण्या भ्रातानामस्माकं तु मदिरापानमत्तवृश्चिकदष्टाऽथ पिशाचग्रस्तमर्कटवद् दुरवस्था संवृत्ता दृश्यते ।

हे भगवन् सद्गुरो, मायया सह तव सगतिरध्यारोपापवादात्मिकाऽस्ति । जीवानामविद्यया सह संगमस्त्वावरणविक्षेपात्मको विद्यते । विशुद्धसत्वप्रधाना तव माया त्वदधीना सत्येवात्यर्थं शोभते । मलिनसत्त्वाधिक्यवत्यस्माकमविद्या त्वस्मान् प्रति सारमेयवत्स्वैरं नर्तयति । परमपावित्र्यतस्त्वयि सत्त्वगुणस्याप्यभिनिवेशो नास्ति । चिरायाऽविद्याग्रस्तैरस्माभिस्तु क्षुद्रतराहंताममताभ्या जघन्यस्तमोगुणोऽपि दुष्टतमः कृतः ।

हे सद्गुरो, युष्मत्संस्कृतिर्निस्त्रैगुण्या विराजते । जीवानामस्माकं नूतना कुसंस्कृतिर्विषमगुणसंकरोत्था सती स्वैरमटति । कुत्र तव पवित्राणामपि पावयितृ ब्रह्मचर्यम् । कुत्र चाधुनिकाना जीवाना परसंस्कृतिसगमोत्सुका पासुला लालसा ।

हे गुणातीतभूमन्, मिथो विरुद्धानां नैकविधाना गुणादीनामेकत्र मिश्रणमिदमेवास्य विचित्रस्य जगतः प्रत्यक्षं स्वरूपम् । तादृशेऽस्मिन् मायिके राज्ये सर्वाधिष्ठातुस्तव चरणारविंदयोरवलंबनमेव द्वंद्वातीत निर्भय स्थानम् । तदेव शातिप्रदम् । तदेव च सुखास्पदम् । यतः परस्परेर्ष्यामत्सरग्रस्ता वीरवृत्तेः पुरस्कर्तारो जनाः सर्वथा जगदुपकारकर्त्री वीरवृत्तिः संयमेऽस्तीति

वास्तवीं ता नैव जानन्ति । जीवनकलहमारभ्याऽऽसाम्राज्यकलहं सर्वदा सर्वत्र कलहप्रचुरेऽस्मिन् कलियुगे " तस्माद्युद्धस्व भारत " इत्यस्य गीतावाक्यस्य वीरवृत्तिं वर्धयितुं पुनः पुनरुद्घोषः क्रियते । किं त्विदं वाक्यं यस्मिन् श्लोकेऽस्ति सः—

" अंतवत इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युद्धस्व भारत ॥ "

इति श्लोकः पूर्वोत्तरसंदर्भपूर्वकं समालोचितश्चेत्तस्य वास्तवोऽर्थः पृथगेव दृश्येत । तथा हि— स्वधर्मे युद्धे स्वयं प्रवृत्तोऽप्यर्जुनो भीष्मद्रोणादीन् गुरून् दृष्ट्वैते मया हंतव्या मदर्थं चैते मरिष्यंतीति भ्रांतिप्रयुक्तशोकेन तस्माद्युद्धादुपरराम । सा तस्य भ्रांतिस्तत्प्रयुक्तशोकश्च भगवता निराक्रियत आत्मनो नित्यत्वं देहादेश्च विनाशित्वं ब्रुवता । यत आत्मा नित्यो देहस्तु स्वभावतो विनाशी । अत. स्वधर्मे युद्धे जातायाः स्वीयप्रवृत्तेरुपरमं मा कार्षीरिति तस्य सा प्रवृत्तिरभ्यनुज्ञायते भगवता । न तु विधीयते । अप्रवृत्तप्रवर्तकत्वाद्विधेः । किंचाग्रे भोगैश्वर्ययोरत्यंतासक्तस्य पुंसः कर्तव्याकर्तव्ययोर्विवेकसमर्था स्थिरा बुद्धिर्नैवोदेति । अतस्त्वमादावात्मवान् भवेत्यर्जुनं प्रति भगवाननुपदिशति । अत आदौ शरीरिणाऽऽत्मवता भवितव्यम् । ततः प्रवाहप्राप्तः स्वधर्मो नैव हातव्य इति भगवदाशयः सुव्यक्तो भवति ।

हे सद्गुरो, निरपेक्ष तव पदमहमभिलषामि । ममाहंताममते त्वयि विलयं याताम् । ईशकृपयोदेता स एव निःसंगातरः संयोगो मम यत्नसाध्यो देवः " साक्षी चेता केवलो निर्गुणश्चेतिश्रुते । " यतस्त्वां विस्मृत्य केनापि क्षणमात्रमपि स्थातु न शक्यते । चिद्रूपस्याऽऽत्मनो भानमंतरा काष्ठलोष्ठवज्जडेन देहादिना किमपि कर्तुं न पार्यते ।

हे व्यष्टिसमष्ट्यधिष्ठातृमूर्तेश्वर, तावकेन निरंकुशैश्वर्येण सहैकीभाव इदमेव मामकं परम ध्येयम् । यतस्त्वमेवाखिलस्य जगतो नियंताऽसि । यद्यपि त्वं सर्वविद्यानामीशानोऽसि । तथापि " अध्यात्मविद्या विद्यानाम् " इति त्वदुक्तेर्भवदन्वेषणाऽध्यात्मविद्यायामेव कार्या नान्यविद्यायामिति सुव्यक्तम् । किंत्वस्माकं

समनस्कानींद्रियाणि निसर्गतो बहिर्मुखानीत्यानदकंदस्त्वं कुत्रान्वेषणीयस्तद्भ्रांतैर्नैव ज्ञायते ।

भो जगद्गुरो, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतेर्निरवधिकानुकंपाशीलस्य तव पदपाथोजयुगसान्निध्यमहं प्रार्थये । यतो निःशेषं सगत्यंतरं विहाय तत्रभवदीया संगतिरेवानुष्ठेया । सैव द्वैतजं भयं निरासिष्यतीति तत्त्वदर्शिनो ब्रुवंति । अतो बहिरंतश्चावतीर्णं त्वत्स्वरूपं मुदा कदा पश्येयमित्युत्कंठा मन्मनसि सदा जागर्ति ।

हे पूर्णपुरुषोत्तम, अनेकेषामपूर्णाना यः सग्रहः स कदापि सर्वथा निरपेक्ष पूर्णं वस्तु भवितुं नार्हति । द्वयोः संयोगः प्रकृतमैक्य नैव भवति । आधुनिको य उच्छास्त्रः साम्यवादस्तदेव निःश्रेयसकर सम्यग्दर्शनं मंतव्यं किम् । हिंस्रत्वमसहिष्णुत्वमेव मानधनं ज्ञेय किम । यत्र चद्रसूर्ययोरदर्शनं न संभवति तादृशं विस्तीर्णं स्वायत्तं यद्भूखंडं तदेव स्वाराज्यं भवति किम्।

भिन्नदेशीयाना या विभिन्ना संस्कृतिः । तथा पृथक्जातीयानां स्त्रीपुरुषाणा यः सकरस्तदेव सार्वत्रिकं धर्मकार्यं किम् ।

हे तुरीयाश्रमीश, बुद्धवैदिकसंस्कृत्योः सगनात्तव जनिर्जाता किम् । तथा बुद्धयात्रिकसंस्कृत्योः सगमेनैव जगदुद्धारो भविष्यति किम् । निरर्गला बुद्धिरेव सर्वश्रेष्ठ प्रमाण किम् । तदेव च मर्त्यानामैश्वर्यं किम् । राष्ट्रस्य तत्रापि भारतवर्षस्य समुन्नत्यर्थं सर्वेषामेतेषामपेक्षा वर्तते किम् ।

हे जगत्प्रभो, नैकान्स्फटिकखंडानेकत्र सयुज्यैकोऽखंडः स्फटिकः कथं भवेत् । नैकभित्तानि सयुज्यैकोऽखंडः काकलः स्यात् किम् । प्रत्युत नीलनरचूर्णकुंतलपुंजैर्निसर्गतोऽखंडे स्फटिके भेदानामाभासः कृतोऽस्ति । भ्रामकानां तेषा भेदकाना निःशेषतो बाधस्त्वदीयेनासंगशस्त्रेणैव विधातुं शक्यः । इदमेव भेदेष्वभेदावलोकनम् ।

हे शिवगुरो, द्वयोरनेकेषां वा संयोगे भेदासहिष्ण्वैक्यं कदापि न संभवति । अधिष्ठानस्यात्यंताभिन्नतायामेव तच्छक्यम् । आभिन्नाधिष्ठानमेवात्म-

देवः । तस्याद्ध्यात्मदेवस्य सम्यग्दर्शनमेव प्रकृतः श्रेयस्करश्च साम्यवादः । सोपाध्यवस्थायां परमं साम्यं नैव संभवति । हिंसाऽसहिष्णुते मनसो दौर्बल्यं वा दरिद्रते स्तः । पर्याप्तकामस्य नव न उभेऽप्यतमपरिचिते एव । निःसीमा सत्तैव साम्राज्यशब्देनाभिधीयते । भूम्न्येव सुखम् । नाल्पे । अनेकैः केंद्रैर-नेकैर्वर्तुलैश्च स्वानंदसाम्राज्यं नैव सिध्यति । चतुर्णां पंचानां वा ग्राव्णामेकत्र मेलन नैव प्रकृतमैक्यम् । ऐक्य निसर्गतो निरपेक्षमेव । यद्वैतसापेक्षमैक्यं प्रलप्यते । तन्न वास्तवमिति ज्ञेयं विज्ञैः ।

भोः शंकर कर्मंदिन्, कोऽप्यास्ताम् । यः संकरः स नूनं सहारस्य मूलमेव । संकरसततिः सर्वाधमा दुष्टा च जायत इति जगदनुभवोऽस्ति । अत एव— "संकरो नरकायैव कुलघ्नाना कुलस्य च ।" इत्येवं भगवता तीव्रतया तस्य निषेधः कृतः । 'संगम' इति भद्रशब्देन संबोधितोऽपि संकरः स्वीयजातिदोषं न जहात्येव । संगमः शबलस्वरूपं बोध्यम् ।

हे आचार्यचूडामणे, कुत्सिताष्टीकाकृतो भ्रातमतय पंडितंमन्याश्च त्वां 'प्रच्छन्नबौद्ध' इति प्रलपंतु नाम । अथापि हे मातृभक्तोत्तम, या बौद्ध-संस्कृतिः सा नैव तव माता । नाप्युपमातेति दिव्यवाङ्मयं त्वच्चरित्रमेव कथयति । वेदपुरुष एव पिता शिवगुरुः । श्रुतिरेव माताऽम्बिका । इतीमावेव तव पितरौ स्तः । इतः परमप्यमृतः सुमंत्रः सुविशुद्धा प्रमाणपूता प्रज्ञैव च जगदुद्धारसाधनं भवेत् । नैव कुमंत्रः शुष्कतर्को दुःशीला च बुद्धिरिति विश्वासोऽस्माकम् ।

हे शिवगुरो, यद्धि सिद्धस्य लक्षण तदेव साधकस्य तत्वतः साधनं भवतीति यस्यावतारो भाव्य इत्यहमिच्छामि । तस्य महापुरुषस्य तव लक्षणं त्वदवतारात्मकप्रधानकार्यस्य प्राक् पूर्वांग भवन्विति संदेहनिरसनपुरः-सरं त्वत्पुरत उपन्यस्तम् । तस्यैव चिंतनमहं प्रत्यहं सुविशुद्धेन चेतसा करो-मीति ज्ञेयं करुणोदधिना त्वया ।

भोः शंकरपाराशरिन्, 'आचार्यदेवो भव' इत्येवं श्रुतिमातुः संदे-शोऽस्ति । किंतु देशकालादिपरिस्थितिमनुसृत्य साम्प्रतिकांगलविद्यापीठजातं

विभूषयंत ऐदानींतना त आचार्या एवाम्माकं भूदेवा इत्यधिगतं चेत्तेषां मायाऽस्मानित्थं कथयति । अद्य सर्वत्र सर्वैः समाश्रिता लौकिकमानवप्रयत्नैकनिष्ठां राजकीयादोलनप्रणालीं विहाय यद्यस्माकं राष्ट्रं भगवदनुग्रहसिध्यर्थं धार्मिकं पंथानमाश्रयेत्तर्हि सा प्रणाली यशस्विनी नैव स्यात् । ईशस्यामूर्तस्वरूपोपासनापेक्षया तस्य मूर्तस्वरूपा या सृष्टिस्तस्या रहस्यं विशदयितुं यतमानानि यान्यधुनातनानि भौतिकशास्त्राणि तेषामुपासनमेव देशकल्याणकरं ज्ञेयमिति ।

हे कर्मंदिन् प्रभो, त्वं जानास्येव यदाधुनिकस्य जगतः स्वभावतः प्रवाह इत्थमेवास्तीति । प्रायस्तत्तद्देशीयाः समाजधुरीणाः पुरुषाः स्वीयजनताया एवमेवोपदिशति किल । " सत्ताया वृद्धिः । भौतिकविज्ञानवृद्धिः । वैषयिकसुखवृद्धिः स्वातंत्र्यवृद्धिः । परकीयस्वातंत्र्योपजीविन्याधिपत्यवृद्धिश्च । ' इति वृद्धयात्मकविकटपचतुंडाया महत्त्वाकाक्षारूपचामुंडादेव्यास्तृप्त्यर्थं सांप्रतं पृथिव्यामभूतपूर्वो घोरतरो नरयज्ञः प्रवृत्तोऽस्ति । आधुनिकैर्मर्त्यसमाजैरस्या उपास्यत्वेन कल्पितायाश्चामुंडायाः स्वरूपं प्रकामं विस्तृतं कल्पितम् । किंतु वस्तुतस्तत्स्वरूपं क्षुद्रं निंद्यं च विद्यते । पामरैरेतैर्जीवैर्नानाविधैहिकोन्नतिलिप्सया सर्वंकषकर्मवीराणामुत्पत्तिर्भाव्येति स्वस्वपक्षे दुरंतेर्ष्यात्मिका सरघा राज्ञी संपोषिता खलु । क्रूरतरया तया राक्षस्या स्वगोचरं प्रत्येकं दंशं विधाय मानवसमाजे दारुणो वैराग्निरत्यर्थं प्रज्वालितोऽस्ति । किं च—ऐहिकैश्वर्यरूपमधुनः प्राप्त्यै इदं सर्वं महता धैर्येण सोढव्यमेवेति शिक्षणं प्रागुक्ता नूतना आचार्याः स्वीयशिष्येभ्यः प्रत्यहं साग्रहं ददति । तत्रापि सखेदाश्चर्यास्पदमिदम् । यत्स्वभावतो धर्मप्रवणेषु निवृत्तिप्रधानेषु च भारतीयमानुषेष्वपि निर्दिष्टस्यास्य शिक्षणस्य सर्वनाशकरः परिणामो भवतीति ।

अथापीत्थं व्यक्तं वक्तुमशक्यमेवेति भृशं चित्रम् । अद्य कोऽपि मनुष्यः कुत्रापि कस्मिन्नपि व्यवसाये व्यवधाने वाऽऽस्ताम् । तस्य श्वासोच्छ्वासा राजकारणसंबंधिवातावरणेन संपूरिताः समवलोक्यंते ।

शिक्षकाणां शिष्याणा च काष्ठासनानि (खुर्च्या टेबले) व्याख्यानपीठानि व्यासपीठानि नित्यनैमित्तिकधर्मकर्मानुष्ठातॄणां दर्भासनानि सभास्थानस्थितान्यास्तरणानि स्वर्णमौक्तिकवस्त्रादिक्रयविक्रयकर्तॄणां मृदून्यासनानि हरिकीर्तनकृता नारदीयपीठानि यंत्रतत्रादीना समस्तान्यपि स्थानानि राजकारणेन संव्याप्तान्युपलभ्यंते। किं बहुना—विरक्तैः साधुभिः संन्यासिभिश्च निसर्गतः कुटिलराजकारणतंत्रानभूतैर्भाव्यमित्याधुनिकाना समाजाग्रेसराणा बलवत्याकांक्षा विद्यते।

हे सद्गुरो नीलकठ, इत्थमुपक्रांतं लौकिकव्यावहारिकं मर्त्यप्रयत्नैकपरायण राजकीयादोलनं प्रति भगवदधिष्ठान मूलत एव नास्तीत्येव केवलं न। अपि तु—

"तेथे भगवंताचे अधिष्ठान पाहिजे"

इति समर्थवचने 'भगवंताचें' इति षष्ठयतशब्दस्थाने 'भौतिककलायाः परस्परेर्ष्यायाः अहंताममतयोश्च शब्दयोरादेशः कृतः समुपलभ्यते। इयमप्यघटितघटनापटीयसी तव मायैवेति जाने। अत एव स्वैरवृत्ताया दुरोदर्काया अस्या आक्रमणमस्मत्सदृक्षैः सोढुमशक्यमिति तामुपेक्ष्य रहसि त्वया सह संलापं कुर्वे। उच्छास्त्रवर्तनशीलेभ्यो बाह्यांतःशत्रुभ्यः संरक्षणं भाव्यमिति तवपदपाथोजयुगं समाश्रये। तदन्यत्सर्वमाश्रयस्थानत्वेन भासमानमपि वस्तुतो न निर्भयमाश्रयस्थानम्। किंत्वगाधमंधकूपजातं तदिति तस्माद्बिभेम्यहम्।

हे प्रभो, असमर्थेन मया किं विधेयम्। दुःसहवासनारूपं षड्रिपूणां भीषणं सैन्यं धर्मजरायाः पांडरं ध्वजं दृष्ट्वाऽपि दुराक्रमणान्न विरमति। नृशंसेन तेन सैन्येन धर्मक्षेत्रसंबंधीनि स्थानानि मंदिराणि च भस्मसात्कर्तुमुपक्रमः कृतोऽस्ति। इद सपत्नानीककृतं दुराक्रमणमवलोक्य ममापि चित्तमीर्ष्यया विजिगीषु संवृत्तम्। बलवत्त्या च महत्त्वाकांक्षयोत्सुकं जातमस्ति। मदीया महत्त्वाकांक्षा त्वाधुनिकानामाचार्याणा महत्त्वाकांक्षातः किंचिदपि न न्यूना। प्रत्युत तदपेक्षयाऽतीव महत्युदात्ता च विद्यते।

हे अद्वैतभास्कर, अत्रभवता साकमेकांतकरणमियमेव तस्या महत्वाकांक्षायाः साधनसरणिः। एवं भवदीयं पदपद्मैव मत्कृतांदोलनस्य सुस्थिरं स्वप्रकाशं चाधिष्ठानम्।

हे विश्वसृण्महेश्वर, तवैश्वर्यं तु न सोपाधिकसत्ताया वृद्ध्यात्मकम्। न परिच्छिन्नभ्रामकभौतिकविज्ञानोत्कर्षस्वरूपम्। न विनश्वरवैषयिकसुखोन्नतिरूपम्। न चित्तविकारायत्तस्वल्पस्वातंत्र्याभासरूपम्। नापि पारतंत्र्योपजीव्येनाधिपत्येनाढ्यम्। अपि तु निरुपाधिकनिःसीमसत्त्वाभिन्नम्। अतलस्पर्शापरोक्षाद्वितीयचित्सागरात्मकम्। सर्वथा दुःखासंभिन्नशाश्वतानंदैकरूपम्। बंधगंधेनाप्यसस्पृष्टम्। द्वैतत्रैविध्यरहितस्वानदसाम्राज्यात्मकम्। परिपूर्णमुक्तिस्वरूपम्। इत्थमनाद्यनंताऽद्वितीयसच्चिदानंदब्रह्मस्वरूपं तत्समुज्जृंभते। एवमात्मकेन तवैश्वर्येण सहात्यंततादात्म्यापेक्षया पृथङ्महत्त्वाकांक्षा मम काऽपि नास्ति। एतद्दिव्यैश्वर्यविषयकं प्रगाढमज्ञानमविश्वासश्चायमेवेदानींतनाशिक्षणपद्धत्यंतर्गतो बलवत्तरो दोषः।

हे जगदेकस्वामिन्, अन्योऽन्यस्योपरि हठादाक्रमणकर्त्री चाधुनिकी मात्स्यन्यायावलंबिनी या संस्कृतिः साऽस्मदीया वैदिकसंस्कृतिं प्रति ' दुर्बला दुर्मुखी कूपमंडूकायितेत्यज्ञानतो ब्रवीतु नाम। अथापि समष्टेरुत्पत्तिस्थितिलयान् व्यष्टेर्जागृतिस्वप्नसुषुप्तीश्च ग्रसित्वाऽप्युर्वरिष्यमाणचिदानंदमयब्रह्माकाराखंडवृत्तिप्रदा सा सनातनी संस्कृतिस्नामसाऽशांतिस्तनसंलग्नशोणितपानलोलुपकीटनिर्विशेषपरकीयरक्ताकर्षणकर्त्र्यन्यदेशीयाऽसुरसंस्कृत्यपेक्षया जघन्येतिमतं भावनं वा महामोहजन्यं साहसमेव ज्ञेयम्। नूनं चित्तदुर्विलासः सः।

हे विद्याधिपते सर्वेश्वर, समूलाज्ञानोच्छेदसामर्थ्यं केवलं त्वय्येव वर्तते। जगदुत्पादको ब्रह्मा पालको विष्णुः संहारकश्च रुद्रस्त्वमेवेत्येव न। अपि त्वेतेभ्योऽतीतं परं ब्रह्म त्वमेवासि। सर्वथाऽबाध्यसत्ताज्ञानसुखस्वातंत्र्यादीनां त्वमेव परमावधिरसि। नूनमस्यां जगत्यां त्वदपेक्षयाऽभ्यर्हिततमं मर्त्यैरुपास्यं पृथक्किमपि न वर्तते।

हे चराचरजगन्नियंतः, अपूर्वंयैदानींतन्या नव्यसंस्कृत्याऽऽधिदैविकमाध्यात्मिकं च जगद्विस्मृत्य विनश्वरस्याधिभौतिकस्यैव जगतो जयजयकारः क्रियते। एवममूर्तां तात्त्विकीं सत्ता भ्रामकां मत्त्वा प्रातिभासिकीमापातरमणीयां परिणतिविरसामत एव दुःखप्रदां सत्तां प्रति व्यवहारोपयोगिनीति नाम्ना संबोध्य सैव वास्तवी कल्याणकर्त्रीति चाभिधीयते। इयं भवतो मायैवेत्यसंदिग्धम्। 'अतस्मिंस्तद्बुद्धि' रित्यध्यास एव सर्वदुःखाना मूलमिति युष्मदीयं शिक्षणमस्ति। दुःखस्यात्यंतिकी निवृत्तिरेव स्वयंसिद्धस्य निरतिशयसुखस्य तात्त्विकस्वरूपपरिचायकोपायः। अन्यथाभास एव प्राणिनामाद्यः शत्रुः। तस्य समूलमुच्छेदको भवानेवैको सद्गुरुर्विराजते। तस्मात्त्वयं साक्षाद्ब्रह्मैव सञ्जगदुद्धारार्थं त्रिमूर्त्यात्मना व्यक्ततामापन्नः सत्वसंशोधकनिष्कामधर्मस्य स्वगतादिद्वैतशून्यब्रह्मज्ञानस्य च सम्यगुपदेष्टा बोधात्माऽऽचार्यस्त्वमेव। स त्वं पुनरप्यस्मिन् भारते वर्षे सगुणरूपेणावतीर्णो भूत्वाऽभिनवसंस्कृत्यात्मकं मोहजालं दूरमुत्सारय। जनमिमं कृतार्थं कुर्वित्यभीक्ष्णं प्रार्थयामि। नैकविधव्यवहाराणामैकात्म्यज्ञानस्य च सम्यङ्मेलनं त्वामतरेणान्यः कः कर्तुं शक्नुयात्। यद्वदुपमन्योर्जनन्या दारिद्र्यतस्तोये पिष्टं संमिश्र्यैतदेव दुग्धमिति किंचित्कालमुपमन्युर्बोधितः। तद्वदनया नव्यसंस्कृत्या स्वदेशीयान् विदेशीयांश्च कांश्चिल्लोकानंगुल्या निर्दिश्यैत एव युष्माकं पथप्रदर्शकाऽऽचार्या इत्यस्माकं मनसि भावना समुत्पादिता। तैनैतेषामभिनवानामाचार्यनामधारिणा मायया ऽस्मदीयाः केचन लीलयैव मोहिता जाताः। अस्मद्देशे प्रथमत एव पाश्चात्यांग्लसत्ताया उपक्रमसमये नव्यानामेतेषामाचार्याणामेकस्मिन् करे ब्राह्मधर्मसंबंधिलिखितमपरस्मिन् पाणौ तु बायूबलमासीत्। त आचार्याः संप्रति दिवंगता एव। इदानींतनानां तादृशानामाचार्याणा हस्ते तु स्पेन्सरटिंडालडार्विन्कार्लमार्क्सप्रभृतेर्यथासंभवं तत्वज्ञानपुस्तकम्। इतरकरे च गीता दासबोधो वा कदाचिद्दृश्यते। किंतु—

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः।"

इति भगवद्वचने—

"उदंड जाहले पाणी। स्नानसंध्या करावया"

इति समर्थवाक्ये च राजकारण विना नान्यत् किमपि महनीयं तत्वं तैराचार्यैरुपलभ्यते । एतादृशास्त आधुनिकाऽऽचार्याः स्वस्य स्वानुयायिना च मतेन विद्वांसः प्रामाणिकाश्च स्युः कदाचित् । किंतु येषां स्वीयशास्त्रप्रामाण्यमनभिमतम् । स्वीया संस्कृतिर्नाभिमता वा । अर्धजरतीयन्यायो मान्यः । तेभ्य आधुनिकेभ्यो लोकशिक्षकेभ्यः ' कुलगुरुः कुलपतिः आचार्यः प्राध्यापकः महर्षिः महात्मा वाचस्पतिः इत्यादि भव्यं नाम कैश्चित्प्रदत्तं वा स्वय गृहीतमपि तथा तेष्वाग्लविद्यापारंगतत्वे सत्यपि त आधुनिका जनाः " आचार्यदेवो भव " इति श्रौताऽऽचार्यादिपदवाच्याः कदापि भवितुमनर्हा एव। तथा—

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

इत्याप्तवचनोपदिष्टगुरुपदाभिधेया अपि ते न भवंतीति भगवत्पूज्यपादाना पुनरवतारस्याहमत्यौत्सुक्येन प्रतीक्षा कुर्वे ।

हे मायाविन् विश्वगुरो, अस्मदीयं चित्तं सत असतः सदसतो वा वस्तुनो यथा विकल्पनां कुरुते । यथा तस्य पुरतस्तद्वस्तु मूर्तस्वरूपेणावातिष्ठत इति चित्तमेव जगत्कर्तृ इति सप्रमाणं सोपपत्तिकं च योगवासिष्ठादिग्रंथेषु—

चित्तमेव जगत्कर्तृ संकल्पयति यद्यथा ।
असत्सत्सदसच्चैव तत्तथा तस्य तिष्ठति ॥

इत्यादिना वचनजातेन सिद्धांतितम । किंत्वस्मदनुभवस्त्वेतद्विपरीत एवास्ति ।

" मनसा चिंतितं कार्यं दैवेनान्यत्र चिंत्यते । "

इत्येवं नैराश्यप्रदप्रतीत्यैव प्रायः समस्तं जगत्संव्याप्तं परिदृश्यते । तत्र बीजं तु भवतो माया नास्मदायत्ताऽपि तु वयमेव तदधीना स्म इति । अपुत्रं दांपत्यं पुत्रो भाव्य इति चिंतयति । अकिंचनो मनुष्यो

द्रव्यप्राप्त्यै यथा तथा प्रयतते । अस्माकं स्वराज्यप्राप्तिर्भाव्येति वयं चिरकालमारभ्य कंठशोषफलकमाक्रोशं कुर्मः । स्वस्य भगवद्दर्शनं भाव्यमित्यास्तिको मानवः सदा सद्भावनां कुरुत एव । तथापि येन येन यद्यत्प्रार्थ्यते तत्तत्तेन लभ्यत एवेति न नियमः। सनातनधर्मस्योद्धारार्थं पुनरपि युष्माकमवतारो भाव्य इति ममेवान्येषां केषाचिदास्तिकाना मनसि स्यादेव । किंतु तदद्यापि न सिध्यति । तस्य यत्किमपि कारणं स्यात्तथैवास्तां नाम । परं " स्वयं हि तत् " इत्यस्या वास्तविक्या स्थितौ सत्यामपि यावज्जीवं नैव संमेलनमित्येव प्रायः साधकानां नैराश्यप्रदोऽनुभवो विद्यते । तत्र प्रतिबधयित्री याऽविद्या सा वस्तुतो नास्त्येव । अतस्तस्या निरासाय कमपि यत्नं कुर्विति श्रीरामचंद्राय वसिष्ठर्षिः कथयति । युक्तमेव तत्कथनम् । यद्धि नास्त्येव तस्य निरासः कथं कार्यः । न हि वंध्यासुतस्य शशशृंगस्य वा निरासाय कश्चन यतते । तयोरसत्वादेव । चेदेवं महात्मना वसिष्ठर्षिणा योगवासिष्ठसद्दक्षोऽस्यर्थं विस्तृतो गंभीरार्थो ग्रंथो रामचंद्राय कुतः कथितः । तं कथयित्वापि पुनः शिवगीता उपदेष्टव्याऽऽसीदेव । भगवद्गीता श्रुत्वा निःसंदिग्धो भूत्वाऽपि पुनरनुगीतायास्तृष्णा भगवतोऽत्यर्थं प्रियस्य श्वेतवाहनस्योर्वरितैव । एतावताऽऽशुतरगतिमतो वाय्वादेरप्यधिकरंहसो मनसः शुभसंकल्पावधिरेव गतिः । फलसिद्धिर्न तदधीनेत्येतानतः सिध्यति ।

चित्तमेव जगत्कर्तृ चेत् तच्चित्तं यद्यत्संकल्पयति तस्य तस्य सिद्धिः कुतो न जायत इति रामचंद्रकृतप्रश्नस्योत्तरं तत्कुलगुरुणा वसिष्ठेनेत्थं प्रदत्तम्—संकल्पानुसारेण फलसिध्यर्थं संकल्पायेतुश्चित्तं नितरां शुद्धमपेक्षितम् । तस्मिन् संकल्पे च तीव्रया सद्भावनयाऽपि भाव्यम् ।

दृढभावनया चेतो यद्यथा भावयत्यलम् ।
तत्तत्फलं तदाकारं तावत्कालं प्रपश्यति ॥ इति ॥

हे जद्गुरो शंकरस्वामिन्, धर्मोद्धाराय भवतोऽवतारसिध्यर्थमसत्कृतदृढोभ्यासस्य नितांतभावनाबलयस्य चावश्यकता स्याच्चेत् तदर्थमस्माभिर्भवदीय-

जन्मकर्मणस्तत्त्वज्ञानस्य च वाङ्मनोभ्यामखंडं चिंतनमेवाप्रमादेन विधेयम्। अनेन संवादमिषेण ममापि स एव प्रयत्नः प्रचलितोऽस्ति। तेन युष्मद्विषयकान्तरिकविशुद्धप्रेम्णः संवर्धनतो मम चित्तं परिपूतं भवतु। पवित्रे भवदाभिमुखे च तस्मिन् भवतः पूज्यं प्रतिबिंब चिरायावलोक्य मनसा संपूज्य च कृतकृत्यो भवेयम्। अयमेवास्मिन् संवादानुष्ठाने ममांतरिको हेतुः। जगदुद्धारार्थं भवतः पुनरवतारो भाव्य इत्यस्य महतः कार्यस्य दृष्ट्या विमर्शः कृतश्चेन्ममाय यत्नोऽतीव स्वल्प इत्यहं जाने। अथापि वटबीजस्य तदुत्थपरमहत्त्वावधिपथिकेभ्यो युगपच्छीतलच्छायाप्रदानेन तत्तापहर्तुर्महतो वटवृक्षस्य च बाह्याकारयोस्तुलनाया नैव निर्भरं कार्यः। तस्मादणोर्वटबीजादेव स उत्पन्न इत्यत्रैव विशेषतो दृष्टिर्देया। किं च सौनिकात्स्वसंरक्षणं भाव्यम्। तदर्थं च मनुष्यैर्गोरक्षणसंस्था स्थापनीया। एतदर्थं गवां प्रयत्नस्य यथा नैवावश्यकता। भगवत्प्रेरणया हि गोभक्ता एव तत्कार्यं कुर्वंति। तथा युष्मदवतारस्य योग्योऽयं समय इत्यालोच्य स्वर्गौकसो देवा एवास्मन्मंगलाय पुनरवतारग्रहणार्थं युष्मान् प्रति सादरमतिशयेनाग्रहं करिष्यति। यतोऽस्माभिरनुष्ठितानि धर्मकर्माण्येव देवानामुपजीविकायाः साधनानि। अद्यास्मिञ्जगति सर्वत्र देवताविषयकं धर्मसंबंधि च नैव केवलमौदासीन्यम्। अपि तु भृशं तिरस्कारः प्रवृद्ध एतावान् परिदृश्यते यद्बाह्यं शरीराद्याकारं विहायान्यत्पार्थक्यं बालेयादिषु पशुषु मनुष्येषु च नैवोपलभ्यत इति वक्तुं प्रायो न कोऽप्यंतरायः। 'यत् पिंडे तद् ब्रह्मांडे' 'यत्तत्र तदत्र' 'यद्बहिस्तदंतः' इत्येते सिद्धांताः सर्वलोकप्रसिद्धा एव। अत एव बाह्यवीणाया गानकर्ता गायको यथा स्वदेहान्तर्गतं पृष्ठवंशं वीणां प्रकल्प्य तस्य परापश्यंतीमध्यमावैखरीसंज्ञकैर्मार्गैर्ज्ञानतोऽज्ञानतो वा षड्जऋषभगांधारादीन् स्वरान् बहिः प्रकटयति। तद्वदहमपि ममांतःस्थितं भावत्कं निजबोधात्मकं वास्तवं स्वरूपं भवतो जन्मकर्मादेः सम्यक्चिंतनेन जागरितमपरोक्षं च कर्तुं सदा यत्नं विधास्यामि। विवेकशीला भाविकाश्च मद्विधाः केचनाऽन्ये मानवा इत्थं यत्नं कुर्युश्चेत् स शिवंकरः समष्टिभावः शीघ्रमेव फलात्मना परिणतो भवेत्। अथ कदाचिदे-

चमपि स्यात् । यदिमं संवादं श्रोतारो वाचका वा भाग्यवंतो नराः पौरुषेण प्रयत्नेन समुत्कटभावनया स्वीयभाग्येन चाऽस्मिन् भारते वर्षे भवतः पुनरवतारात्प्रागेव निर्मलाया चित्तभित्तौ ज्ञानदृष्ट्या भवंतं पश्येयुस्तेन कृतार्थाश्च स्युरिति ।

हे जगदाचार्यवर्य, पाचकेन यः पाकोऽनुष्ठीयते । न स केवल स्वोदरभरणार्थमेव क्रियते । अपि तु तेन यत्नतः पाचितं भक्ष्यभोज्यलेह्यपेयादिपदार्थजातमास्वादयंतो भाग्यशालिनो नराः पृथक् संत्येव ।

हे भगवत्पूज्यपाद सद्गुरो, इतः प्रागनेकशो विदुषां वैदुष्यप्रचुराणि प्रवचनानि हरिदासवर्याणा च शांतकरुणादिरससदृब्धानि कीर्तनान्यपि मया सादर श्रुतानि । परमत्युत्कटजिज्ञासामूलकन्याकुलभावेन भृशं परिदेवन जात्वपि न श्रुतम । तदद्य समाकर्ण्य ममापि स्वांत नितात विव्हलं संवृत्तमस्ति । को वा बत पुमानस्यास्स्पृहणीयायास्तदीयजिज्ञासायाः समुचितोत्तरप्रदानेनोपशम करिष्यति । इत्येव दृढतरा भावना मदीयेऽपि मनसि समुद्भूता । नूनं नेदं वितथम् । यदघटितघटनापटीयस्यन एवाचिंत्या भगवन्माया न केनाप्यधिगंतु शक्येति । यतस्तदानीं महदेकमद्भुतं साहस कर्तुं ममांतःकरणे स्फूर्तिः प्रादुर्भूता ।

तत्समकालमेवाहं यथा तस्य जिज्ञासोर्दृगध्वनीनो न स्यां तथा झटित्यत्यंतरंहसा तस्य मंदिरस्य गर्भागारे प्रवेशमकरवम् । विस्मयैकनिदाने तस्मिन् क्षणे मद्धस्ताच्च्युतायाः शोधन्या रिक्तपुटपात्रोपरिपतनेन महान् ध्वनिर्जातः । तावदहं गुरुपादुकासिंहासनस्य पश्चाद्भागे सुगुप्ततयोपाविशम् । स च साधकस्तेन संमार्जनीपतनध्वनिना यावत्तस्माद्ध्यानादुत्थितस्तावदतिगंभीरभावेन मन्मुखाद्वक्ष्यमाण आदेश उच्चैर्बहिर्निःसृतः । तदानीं निष्प्रतिबंधं सर्वतः प्रसृताघनमसः साम्राज्येन सर्वत्र निःस्तब्धताऽऽसीत् । तेन मदीयं भाषितमाकाशवागिव तेन जिज्ञासुना साधकेन प्रतीतं स्यात् । अहमब्रवम्—

भो जिज्ञासो साधक, तवात्युत्कटं भावमधिगत्य त्वदुपर्यहं सुप्रसन्नोऽस्मि । आयुष्मन्, 'तार्किको ह्यनागमज्ञः स्वबुद्ध्यभ्यूहितं किमपि प्रल-

पति । तदुपेक्ष्येयमागमप्रभूता सन्मतिस्तार्किकादन्येनैवाऽऽगमाभिज्ञेनाचार्येण प्रोक्ता सती सुज्ञानाय प्रभवति । त्वया तु तत्वतः शास्त्राधिगमाय भृशमपेक्षितं साधुशीलागमाभिज्ञाचार्याणा संप्रदायशुद्ध पारंपरीक शास्त्राध्ययनं न कृतम् । केवलं स्वीयमत्योदरभरिभिः स्वार्थांधैर्मुद्रणादिना विपुलं प्रकाशितानां सर्वसुलभानां भाषांतरितपुस्तकाना सामान्यतोऽवलोकन कृतम् । तेन विभ्रांतमतिर्भूत्वा महारण्ये पथानभिज्ञाधपथिकवदसंभावनाविपरीतभावनादिभिर्ग्रहैर्ग्रस्तोऽसीति विभाव्यते । किंचान्यत्— कस्यापि ग्रंथस्य सादरमनेकवारमामूलाग्रं निरीक्षणमंतरा सहसा दोषोद्भावनमनुचितमेव ।

किं च—इदमप्येक मनसि दृढं धारय, यच्छास्त्रग्रंथाना समन्वयेनैव विमर्शः कार्यः । नैव तत्र भेदबुद्धिर्विधेयेति । अविद्याकल्पितभेदबुद्धिनिवृत्तिपरत्वाच्छास्त्रस्य । अपि तु—

उपक्रमोपसंहारादिभिः शास्त्रतात्पर्यनिर्णायकैः षड्भिर्मीमांसोक्तलिंगैः संयुज्य तदविरोधेन शास्त्रार्थः प्रतिपत्तव्य. । आस्तामिदम । इतःपर नैकविधाना तव तत्तदाशंकाना समाधान विधास्यामः । तत्सावधानेन मनसा शृणु । ' प्राचां ज्ञातॄणां चमत्कारा अनशद्वागमेलप्या ' इत्यस्या उक्तेस्तात्पर्यं तु— ते चमत्कारा न तैः कृताः । अपि तु भगवल्लीलैव सा । प्राचां तत्वज्ञाः सगुणोपासका निर्गुणोपासकाश्चेति द्विविधा ज्ञातव्या । तत्र सगुणोपासकाः क्रममुक्तिभाज इति तेषां व्यष्टिभाव किंचित्काल तथैव तिष्ठति । तथा ज्ञानिनां मध्ये येऽधिकारिका जीवा सन्ति त ईशकार्यसिध्यर्थं स्वेच्छया नत्तदेह बिभ्रतीति श्रूयते । " यावदधिकारमवस्थितिराधिकारिकाणाम् ।"

ब्र. सू. ३ । ३ । ३२ इत्यत्र ।

एकं सृष्टिकर्तृत्व पर विहायाऽन्यानखिलानीश्वराकारान्सोऽधिकारिकास्तत्वज्ञा जीवाः प्राप्नुवंतीति ब्रह्मसूत्रतो ( ४।४।१७ ) ऽवगम्यते ।

• जीवन्मुक्ता निरुपाधिकब्रह्मतादात्म्य गता अप्यन्येषा जीवानां सर्वज्ञसर्वशक्तिमद्व्यष्टित्त्वेनापि प्रतीयंते । किंतु तथाविधोऽहंकारस्तेषु नावशिष्यते ।

ब्र. सू. ४।४।५–७।

भगवद्व्यासवसिष्ठप्रमुखाना महर्षीणा श्रीरामकृष्णाद्यवतारिपुरुषाणाम-न्येषा च साधूनां लोकोद्धारार्थमनेकानि जन्मानि सभवंतीश्वरेच्छया । तथा भाविकाना समुत्कटभावनानुसारेण विविधशक्तिनिधिर्भगवांस्तेषां तत्तदिष्ट-मूर्तात्मना तान् साक्षात्कारभाज. कारयतीति प्रसिद्धमेव । जीवन्मुक्तान पुंसामिदमलौकिकमैश्वर्यमियमप्येका समष्ट्यात्मन ईश्वरस्य मायैव विद्यते ।

" स एव लक्षणो विद्वाञ्जीवन्नेव स्वाराज्येऽभिषिक्तः पतिते देहे स्वराडेव भवति । यत एवं भवति तत एव तस्य सर्वेषु लोकेषु कामचारो भवति । " छादोग्योपनिषद् ।

जीवन्मुक्ताः शरीरिणोऽपि सतस्तत्त्वतस्तेऽशरीरिण एवावगतव्याः ।

तस्मान्मिथ्याप्रत्ययानिमित्तत्वात्सशरीरित्वस्य सिद्धं जीवतोऽपि विदुषोऽशरीरित्वम् ।

आशीविषेण त्यक्तायां जीर्णत्वचि तया सह तस्य सबन्धो यथा निवर्तते । यथा वा गृहस्वामिना विक्रीते निजगृहे कदाचिद्विपन्नेऽपि तस्मिन् सद्मनि तन्निमित्त सुखदुःखादिक तद्विक्रेतुर्न सभवति । तद्वज्जीवन्मुक्तस्य पुंसः प्राग्विद्यमान शरीरेण साकं संबंधो– विद्यया समूलं निवृत्त इति परमार्थतः स जीवन्मुक्तोऽशरीर्येव ।

यस्य जीवस्य व्यष्ट्यभिमानः समूल चिरायास्त गच्छति । तस्याणुमात्रमपि ब्रह्मण. पार्थक्येनावस्थान नैव तिष्ठतीत्ययं सच्चिदानंदानुभवः केवलया बुद्ध्या तर्कादिना वाऽनुमातु सुतरामशक्यः । अत एव जीवन्मुक्तावस्थायाः शास्त्रादौ यद्वर्णनमुपलभ्यते । तत्सर्वं परोक्षमव-गंतव्यम् । तत्साधकस्योत्तेजनार्थं सुपथप्रदर्शनार्थं च स्थूलदृष्टांतैः सोपपत्तिक गंभीरशब्दैर्वा कृतमित्यवधेयम् । यथा नटो नाटककर्तुरिच्छामनुसृत्य नायकनायिकाद्यनेकभूमिकाः क्रमशो धृत्वा तत्वतोऽसक्ततया सक्त इव क्रीडति । तद्व-ज्जगत्सूत्रधारो भगवाञ्जीवन्मुक्तानां तत्तद्देहेन विविधानि कार्याणि करोति ।

सूर्यचंद्रगृहपृथिवीभूधरब्रह्माविष्णुरुद्रइंद्रवरुणयमकुबेरप्रभृतयः परमेश्वरनियमित-तत्तत्कार्यकर्तार आधिकारिका मुक्तजीवा एवावगंतव्याः ।

" आभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् । "

ब्र. सू. २।१।५।

अतो देवतानामशरीरव्यक्तिमत्त्वं निष्प्रत्यूहं मंतव्यमापतति । ताभिर्व्य-क्तिभिरीशकार्यं सिध्यति । अथ प्रत्येकेन जीवन्मुक्तेन लोकसंग्रहादिकं कार्यं न कृतमपि शरीरधारणपोषणकार्यं स्वभावतो भवत्येव । किंतु भवदपि तत्स-मस्तं कार्यं तस्य कार्यस्य तस्य विदुषो विषयैः सह ग्राह्यग्राहकसंबंधो न वर्तत इत्यवगतव्यम् ।

" सोऽयमेवं चलाचलनिकेतो विद्वान्न बाह्यविषयाश्रयः "

मा. का. भा. २।३७।

वस्तुतो विमृश्यमाणे सर्वे एव जीवाः परमार्थतो निःसंगा एव । तेन देहगेहादिभिस्तेषा संबधो मूलत एव न वर्तते । परं तत्त्वस्याग्रहणमन्यथाग्रहणं चेति यः सामान्यजनेषु भ्रमः समुल्लसति । स जीवन्मुक्तेषु नैवास्ति । तस्य स्थितिरेकजीववादवदवधेया । तत्र समष्टिव्यष्टिभेदो नैवावशिष्यते । समस्तं विश्व-मेव तस्य प्रकृत स्वरूपम् । आत्मभिन्नं किमपि नास्तीत्येव तद्दृष्ट्या सिध्यति ।

अथ " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । " " इंद्रो मायाभिः पुरुरूप ईयते " इत्यादिश्रुतेर्महेश्वरस्य समष्ट्युपाधिभूतायाः सुविशुद्ध-सत्त्वप्रधानमायाया एवांशभूता जीवाना मलिनसत्त्वप्रधाना अविद्यापदाभिधेया व्यष्ट्युपाधयो बोद्धव्याः । सामान्यजीवेभ्यो जीवन्मुक्तस्यायमेव विशेषो यज्जीव-न्मुक्तः स्वातस्य धिषणायां धिषणायाः समष्ट्यहंकारे समष्ट्यहंकारस्य चाव्यक्ते लयमकृत्वा योगेन प्रत्यगात्मन्येव मनसो लयं कुरुते । तेन स ईशसाक्षिणा साकमगौण तादात्म्यं प्राप्नोति । सामीप्यं सारूप्यं सालोक्यं सायुज्य कैवल्य चेत्येवं मुक्तेर्नाना विधाः संति । तत्र जीवब्रह्मणोः स्वरसत ऐक्यात्मिकायां कैवल्यमुक्तौ निरतिशयभूमब्रह्मानंदः सन्नपि तदानीं तद्भोक्तुरन्यस्य तत्रानवशि-ष्टत्वात् स आनंदः कस्यचिदिंद्रियारामस्याऽऽत्मनाशवद्भाति । तथा न भातव्य

इति कृपया जीवन्मुक्तेरैश्वर्यं क्रमश उपवर्णितं शास्त्रेण । मायापदाभिलप्याऽनादिनिधना माहेश्वरी शक्तिः परब्रह्मणः स्वाभाविकी विभूतिरिति तस्या मुक्तजीवेऽपि सूक्ष्मतराहकारात्मनाऽवस्थानमपरिहार्यम् ।

किं च मुक्तिसुखमनुभवितुं लोकसंग्रहार्थं च तस्यास्तत्रावस्थानमिष्टमप्यस्तीति कस्यचित्स्वभावतो मतिः स्यात् । किं तु यत्र ज्ञातृज्ञानज्ञेयध्यातृध्यानध्येयमंतृमंतव्यमननद्रष्टृद्रष्टव्यदर्शनश्रोतृश्रोतव्यश्रवणघ्रातृघ्रातव्यघ्राणेत्यादिकमनुभवत्रैपुट्यं कालत्रयेऽपि स्थातुमसमर्थम् । तस्याखंडाऽऽनंदैकरसस्याऽद्वयब्रह्मपदस्य विमर्शोऽवाङ्मनसगोचर एवेति विश्वासः कार्यः । यतः परमार्थदृष्ट्या विचार्यमाणे जीवन्मुक्तिर्विदेहमुक्तिरित्यादिकं सर्वं भ्रमान्नातिरिच्यते । तत्त्वतो न कोऽपि बद्धो मुक्तो वा । "न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता" मा. का. २।३२। "आत्मैवेदं सर्वम् । इदं सर्वं यदयमात्मा । एकमेवाद्वितीयं ब्रह्म" इत्यादिश्रुतिस्मृतिभ्यः ।

इत्थं निश्चिताः शास्त्रार्था वक्त्रा कथिताः श्रोत्रा च श्रुता अपि किंवाऽध्यारोपापवादन्यायेनाध्यस्तविशेषाणां निवृत्तिरसकृच्छ्रुतिपथातिथिर्जाताऽपि श्रोत्रियस्य ब्रह्मनिष्ठस्य च सद्गुरोः कृपाकटाक्षमंतरा विशुद्धचित्तसाधकं प्रति निःसंदिग्धं कुर्वाणाऽपरोक्षानुभूतिरशक्यैव ।

"विगतदोषैरेव पंडितैर्वेदांतार्थतत्परैरेषणात्रयत्यागिभिः परमात्मा संद्रष्टुं शक्यो नान्यैरिति ।" मा. का. भा. २।३५।

अथ या याऽचेतनप्रवृत्तिः सा सा चेतनप्रेरणाधीनेति लोके सुप्रसिद्धम् । जीवन्मुक्तस्य तु निखिलप्रपञ्चैकनिदानभूताऽविद्या विद्ययाऽत्यंतं निवृत्ता । तथा सति कारणाभावात् कार्याभाव इति नियमेनाऽविद्याकार्यस्य प्रेरणादेः स्थूलसूक्ष्मप्रपंचस्योच्छिन्नतया मुक्तात्मन्यसत्वाज्जीवन्मुक्तस्याचेतनाभ्यां द्वाभ्यां शरीराभ्यां घुणाक्षरन्यायेन भाव्यमाना निर्मूलाः क्रिया लोकसंग्रहकारिण्योऽपि कथं प्रमाणं मंतव्या इतीयं तवाऽऽशंका व्यर्थैव । यतो जीवन्मुक्तस्य सर्वा एव क्रियाः सामान्यजनैरादर्श इत्यनुसरणीया इत्थं

शास्त्रस्य नैवाभिप्रायः । शास्त्रं तु " स यत्प्रमाण कुरुते लोकस्तदनुवर्तते । " " यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि नो इतराणि " इत्युपदिशति ।

किंच विना चित्तशुद्धिं जीवन्मुक्तेरसंभव एवेति जीवन्मुक्तस्याचरणमादरणीयमेव ज्ञेयम् । अन्यदपीत्थमवगंतव्यं यत्तस्माज्जीवन्मुक्ताद्भवित्र्यौ शास्त्ररचनोपदेशप्रणाड्यौ इतराणि च लोकसंग्रहकारीणि कर्माणि भगवत्प्रेरणयैव भवतः भवंति च । इति तत्सर्वं प्रमाणमेवेति निष्प्रत्यूहं सिध्यति ।

अथाऽऽत्मनो याथात्म्याधिगमाय मानुषशरीरधारिणः सद्गुरोरेवापेक्षेति न नियमः । यस्माद्धीमता मानवेन निपुणं शास्त्रावलोकनादिनाऽपि तद्यथार्थज्ञानं प्राप्तुं शक्यमिति यदाधुनिकाना मत तन्न सम्यक् ।

तथा हि—यद्यपि च शास्त्राणि समुद्बोधकानि । तथापि केवलया स्वीयबुद्ध्या शास्त्रावलोकनेन तद्बोधस्वरूपमपरोक्षं भवेदित्यभिमानो न युक्तः । एतस्यासाधारणं बीजं तु तर्कनायामाशंकायामेव विद्यते । यतः—श्रुतय स्मृतयश्च तथाऽनेकेषामृषीणा मतानि तत्र परस्परं विभिन्नानि भासंते । एकस्यैव चाऽऽचार्यस्य मते तत्र विरोधो दृश्यते । अस्या दुःस्थितौ साधकस्याधिकारानुसारेण तस्मै श्रेयस्कर शास्त्ररहस्यं बोधयितुं श्रोत्रियस्य ब्रह्मनिष्ठस्य च सद्गुरोरावश्यकताऽऽपरिहार्यैवेति बोध्यम् । शास्त्राणि योग्यान्यप्यचेतनानि । चेतनस्य सद्गुरोर्दिव्यवाण्या शक्तिपात विधातुं सामर्थ्यं विद्यते । लौकिक्यपि विद्या गुरुं विना न प्राप्यते यदि तर्ह्यलौकिवयद्वयब्रह्मविद्या गुरूपदेशमतेण कथ प्राप्ता स्यादिति त्वमेव शांतेन मनसाऽऽलोचयेति । अधिकारी साधकः सम्यक्साधनैः सम्यक्समय आत्मयाथात्म्यज्ञानं लभत इति वर्णनं ग्रंथादिषु विद्यमानमपि सद्गुरोस्तत्र नाऽऽवश्यकतेति नैव तस्यार्थः । अपि तु सद्ग्रंथानामध्ययनपठनचिंतनादिना सम्यगधिकारप्राप्तावीश्वरः समर्थसद्गुरुस्वरूपेणाविर्भूय सच्छिष्यं कृपया कृतार्थयतीति तस्यार्थो बोध्यः ।

अथ शास्त्रविरोधो दृश्यत इति त्वं ब्रूषे । शृणु तस्योत्तरं समासतः । महाभारते यक्षप्रश्नप्रकरणे श्रीमद्व्यासमहर्षिणा शास्त्रविरोधमुद्भाव्य ' महाजनो

येन गतः स पंथाः ' इत्युक्तम् । स च पंथा नाम सद्व्यवहारस्य मार्गो ज्ञेयः । अध्यात्मशास्त्ररहस्यात्मिकाया अद्वैतब्रह्मविद्यायास्तत्र न कोऽपि प्रश्नः ।

अथ भिन्नभिन्नधर्मसंस्थापकेषु भिन्नभिन्नदर्शनकारेषु सूत्रकारेषु भाष्यकारेषु टीकाकारेषु च यो मतभेदो दृश्यते । स क्षणिक एव । शास्त्रकारादयो हि जगतः कल्याणार्थं सत्यशोधनमार्गसंबंधिनोऽनेकानुपपथः संसाधयंति । तत्र कारणं तु परिस्थितेर्भेदः प्रकरणभेदोऽधिकारिभेद इत्यादिकमूह्यम् । सर्वाणि शास्त्राणि सर्वे च वादाः सापेक्षज्ञाना एव । एकस्मिन्नपि शास्त्रग्रंथे व्यतिरेकदृष्ट्या प्रदर्शितात्सिद्धातादन्वयदृष्ट्या प्रतिपादितः सिद्धातः पृथग् दृश्यते ।

" विवेकिना तु रज्वामिव कल्पिताः सर्पादयो । नाऽऽत्मव्यतिरेकेण प्राणादयः सतीत्यभिप्राय. । "

" इद सर्वं यदयमात्मा इति श्रुतेः । "

सृष्टेरत्यंताभावोऽस्ति । आत्मा अज एव विद्यते । व्यवहारतः प्रपंचोऽस्त्येव । परमार्थतः प्रपंचो नास्ति । सर्वमिदमद्वैतं ब्रह्मैव । द्वैतं वाच्योऽर्थः । ब्रह्म तु लक्ष्यार्थः । जगद् भ्रमरूपम् । तच्च प्रतीतिमात्रसत्ताकम् । सर्वनिषेधावधि ब्रह्म । इत्याद्यर्थकानि केवलाद्वैतवचनानि सापेक्षमतान्येव । विचारस्य ताउक्तय पृथक् पृथक् प्रक्रियामात्रम् । स एकोऽद्वयब्रह्माभ्यासो न ब्रह्मस्वरूपम् । न कूलंकषः सिद्धांतः । व्यतिरेकोऽप्येका प्रक्रियैव । चंद्ररश्मि प्रति तिमिरागिरितिकथनं प्राणिस्वभावः । न वस्तुस्वरूपं तत् । द्वैताद्वैतं सर्वमप्यात्मसत्तैव केवला । इत्येवं द्वैतनिरपेक्षोऽन्वयबोध एव परमः सिद्धातः । निर्विकल्पसमाधिरपि प्रक्रियैव । अन्वयबोध एव निर्विकल्पस्वरुपोऽस्ति । तस्याऽऽदिमध्याता नैव संति । ब्रह्माभ्यासोऽन्यः । ब्रह्मस्वरूपं चान्यत् । अंतर्मुखवृत्त्या ब्रह्म सर्वातीतम् ।

बहिर्मुखवृत्त्या तु सर्वस्वरूपम् । सृष्टेः सकाशाद्दृष्टेर्निवर्तनमियं समीचीना प्रक्रिया । प्रतीतिमात्रसत्ताका सृष्टिरित्ययं दृष्टिसृष्टिवादः । एतस्या दृष्टेर्निःस्वानिवृत्तिरेव मोक्षः । इत्ययं सर्वो विमर्शः समक्चित्तारूढश्चेदेव मांडूक्यकारिका-

भाष्यशारीरकमीमांसाभाष्ययोर्दृश्यमानान्— विज्ञानवादवस्तुवादशून्यवादजागृत्स्वप्नविवेकजगन्मिथ्यात्ववादमायावादादीनुद्दिश्य कृतेषु विवेचनेषु प्रतीयमानो विरोधाभासः सुतरां निवर्तेत। विचारप्रक्रियापार्थक्येन रहस्योद्भेदः सर्वथाऽसंभवी। प्रस्थानत्रयभाष्य उपदेशसाहस्र्यादिप्रकरणग्रंथेषु चाचार्यैरद्वैतवादसंबंधिनीनां सर्वासां प्रक्रियाणां तत्र तत्र समुचितो विनिवेशः कृतोऽस्ति। तत्र व्यतिरेकप्रक्रियाया व्यावहारिकसत्तायां च कुत्रचित्समधिको भरः प्रतीयाच्चेत् स व्यावहारिकसाधकदृष्ट्या युक्त एव। देवतागुरुशास्त्रपरमार्थसाधनानि तथाऽध्यात्माधिभौतिकाधिदैविकभेदजाग्रत्स्वप्नसुषुप्तिविचारव्यवहारसदाचाराश्च सर्वाण्येतानि व्यावहारिकसत्तायामंतर्भूतानि तत्त्वानि प्रक्रियाश्च संति। यत्र तु पारमार्थिकप्रातिभासिकाविति द्वावेव सत्तायाः प्रकारावंगीक्रियेते, तत्रत्या प्रक्रियाऽर्थादेव भिन्ना यद्यपि दृश्यते तथापि तत्त्वतो न विरोधः कुत्राऽपीत्येवं बोध्यम्।

किमविद्या जीवाश्रिता। आहोस्विदीशाश्रिता। यद्यपीयं सृष्टिः कल्पनामात्रम्। अथापि जीवस्येयं कल्पना, उत ईश्वरस्य। इत्येवं विचारप्रक्रियापार्थक्येन दृष्टिसृष्टिवादो विज्ञानवादः सृष्टिदृष्टिवादो वस्तुवादश्चेत्यादयो वादाः पृथक् पृथक् समुद्भवंति। अथापि परमार्थतो जीवेश्वरौ नामाऽद्वितीयाऽऽत्मैव। इति तादृगात्मस्वरूपेऽज्ञानाविद्ययोस्तद्भुत्थकल्पनातरंगाणां च कालत्रयेऽप्यसंभव इत्युक्तविचारप्रक्रियाभेदैरात्मस्वरूपं नैव विक्रियते। अपि तु व्यावहारिकी विमर्शदिक् परं भिद्यत इत्येव।

मायावादाऽज्ञानवादाऽजातवादशून्यवादादिषु दृश्यस्य पृथगस्तित्वं नास्तीत्युक्त्वाऽद्वैतसिद्धिः क्रियते। विज्ञानवादस्पष्टिसृष्टिवादस्फूर्तिवादादिषु तु द्रष्टैवाऽर्थादाऽऽत्मैव सर्वत्रास्तीति श्रावयित्वाऽद्वैतसिद्धिर्विधीयते। किंतु परब्रह्मणि द्रष्टृदृश्ययोर्वस्तुनः सर्वदाऽभाव एवेति व्यतिरेकान्वयकल्पने सापेक्ष एवेति निर्विचिकित्सं सिध्यति।

अथ ब्रह्मसूत्रभाष्यमांडूक्यकारिकाभाष्ययोस्तत्र प्रतीयमानस्य विरोधाभासस्य क्रियमाणं निराकरणं सावधानं शृणु—

सूत्रभाष्ये द्वितीयाध्यायस्य द्वितीयपादे परपक्षाणां तत्तत्पक्षांतर्गत-दोषप्रदर्शनपुरःसरं निराकरणमयमेव मुख्यो विषयः । इतरदप्रधानम् । विशेषोऽयं तत्पादीयसूत्रभाष्यस्याध्ययनाभ्यासकाले विशेषतो बौद्धानां बाह्यार्थ-वादविज्ञानवादशून्यवादानां खंडनाय बद्धपरिकरसमुदायाधिकरणोपलब्ध्यधि-करणभाष्यस्यालोचनवेलायां चित्ते दृढं संस्थाप्यः । अन्यथा समुदायाधिकरण-भाष्ये बाह्याऽऽतरेत्युभयपदार्थास्तित्ववादिनो बौद्धस्य मतखडनानंतरमेवाग्रिमा-धिकरणभाष्ये विज्ञानातिरिक्तं बाह्यं वस्तु नास्त्येवेति विज्ञानैकास्तित्ववादिनो बौद्धस्य मतखंडनं विरुद्धमिव प्रतीयेत ।

अतोऽस्मिन्नधिकरणद्वयसबंधिनि भाष्ये बाह्यपदार्थाः संति न वेत्यय विषयो न भाष्यतात्पर्यगोचरः । गौण एव सः । किंतु तत्संबधिनी बौद्धाना युक्तिः प्रक्रिया च न प्रमाणमूला । भ्रांतिमूलैव सेत्येव प्राधान्येन तत्र विशदीकृतम् । अर्थाद्बौद्धाना नैरात्म्यवादे परमाणुपुंजात्मकबाह्यपदार्थकर्तुः, विज्ञानवादे विज्ञा-नस्य विज्ञातुः, शून्यवादे च शून्यस्य साक्षिणोऽधिष्ठातुर्वा चेतनस्य स्थिरस्यै-कस्यात्मनोऽभावः । अयमेव मुख्यो दुरुद्धरो दोष. प्रदर्शितस्तत्र । इत्थमस्या-धिकरणद्वयभाष्यस्य तात्पर्याज्ञानेन केषाचिदन्यथाग्रहो जात इव दृश्यते । अतः प्रकृतभाष्यद्वयार्थस्य सुस्पष्टावबोधाय प्रथमं विज्ञानवादिना युक्तिवादं समासतः प्रदर्शयामि । तत्सम्यक् चित्ते गृहाण ।

बाह्यार्थविज्ञानाय बाह्यपदार्थास्तित्वस्य नावश्यकता । स्वप्ने यथा बाह्य-पदार्थं विनैव बाह्यार्थोऽस्तीति कल्पना संभवति । तथा जागरेऽप्यनादि-वासनासंस्कारेण बाह्यवस्तुकल्पना निरालंबा । अर्थाद्बाह्यवस्त्वभावेऽपि कल्पना संभवति । अतो बाह्यवस्त्वत्यंताभावेऽपि प्रवाहात्मना निरंतरं भासमानं क्षणिक-विज्ञानमेव बाह्यवस्तुसारूप्येण प्रतीयते । तत्त्वतो बहिः सर्वं शून्यमेवेत्यस्य मतस्य खंडनं भाष्य इत्थं ममवलोक्यते—

१ बाह्यवस्त्वभावो निश्चेतुमशक्यः । यतस्तद्बाह्यवस्तु साक्षादुपलभ्यते । तस्यानुभवः समागच्छति ।

२ मानसिकाः कल्पना एव बाह्यवस्तुवत्प्रतीयंत इत्युक्तावपि बाह्यवस्तुनोऽस्तित्वं दृष्टांतार्थं वाऽऽस्ता सत्यं मंतव्यमेव प्राप्नोति ।

३ ज्ञानविषयभूतो बाह्यपदार्थो न चेत् तस्मिन् ज्ञाने विषयसारूप्यमेव न संभवेत् ।

४ ज्ञानविषययोर्विषयविषयिभावसंबंधस्य सत्वात् ज्ञानात्पृथक् तस्य विषयेण भाव्यमेव ।

५ ज्ञानस्य क्षणिकत्वे (स्वोत्पत्तिक्षणाव्यवहितोत्तरक्षणीयध्वसप्रतियोगित्वे) स्वीकृते पूर्वक्षणीयज्ञानस्योत्तरक्षणीयज्ञानेन साकं वास्यवासकसंबंधो नावतिष्ठेत ।

६ विज्ञानस्य प्रतिक्षणं जायमानजन्मन अवलोकयिता स्थिरः कोऽपि नास्तीत्यतो न सिध्यति तादृशं जन्म ।

७ भृशमनित्यं विज्ञानं जडमेवेति स्वय स्वस्याऽऽकलनमशक्यमेव ।

८ विज्ञानं प्रदीपवदंगीकृतमपि तत्सिध्यर्थं स्थायी चेतनः साक्षी आवश्यकः । तादृशस्य साक्षिणो निःसारे त्वद्दर्शनेऽभाव एवेत्येवंरीत्या "नाभाव उपलब्धेः" इति पंचमाधिकरणस्यादिमसूत्रे बौद्धमतं कथं न प्रमाणमूलकं युक्त्युपेतं चेति प्रदर्शितम् ।

तदनंतरं स्वप्नादौ जायमानं ज्ञानं यथा बाह्यपदार्थं विनैव जायते तथा जागृत्प्रतीतिरपि निरालंबैवेति समधिकवादप्रस्नं विज्ञानवादिबौद्धमतमुद्दिश्य "वैधर्म्याच्च न स्वप्नादिवत्" एतत्सूत्रभाष्ये तन्मतस्य निर्युक्तिकत्वप्रदर्शनार्थमित्थं समभिहितम्—

१ स्वप्नेऽनुभूताना पदार्थानां जागरे बाधः परिदृश्यते । किंतु जागरे प्रमाणतोऽधिगताना पदार्थाना कदापि बाधो न भवति ।

२ स्वप्नानुभवः स्मृतिरूपः । तत्र वस्तुवियोगोऽस्ति । जागृदनुभवे वस्तुनः संयोगो वर्तते ।

३ मनोरथीयवस्तुसंबंधिन्यः कल्पनाः कल्पकः कुर्याच्चेदेव भवंति। तदधीना एव ताः। जागरे बाह्यवस्तुज्ञानं न ज्ञात्रधीनम्। अपि तु प्रमाणप्रमेयाधीनं तत्।

४ किं च बाह्यपदार्थज्ञान विना तत्संस्कारः स्मृतिः कल्पना वा न संभवति।

५ बौद्धानामालयविज्ञानस्य क्षणिकत्वात्तस्मिन् वासनाप्रत्यभिज्ञा च न संभवति। तेषामहप्रत्ययः प्रतिक्षणं नूतन एवोत्पद्यते। अतस्तस्मिन् पूर्वापरसंबंधो न तिष्ठति। इत्येवं विज्ञानवादिनो बौद्धस्य मतखंडनं विहितम्।

अनेन बौद्धीयविज्ञानवादेन साक वेदांतिना कल्पनावादस्य दृष्टि_सृष्टिवादस्य च साम्यं विद्यते। किंतु कल्पनावादीयकल्पनाया दृष्टिसृष्टिवादीयदृक्प्रत्ययस्य च वेदांतिमत आत्मवस्तुनो नित्यमेवाऽऽधारोऽस्ति। स बौद्धमते नेति पार्थक्यम्। स्थिरस्यात्मस्वरूपाधारस्याभावे केवलेन क्षणिकजडविज्ञानेन बाह्यजगतोऽत्यंताभाव· कदापि न सिध्येत्। इत्येवं क्षणिकविज्ञानवादस्य भृशमयुक्तता सूत्रभाष्ये प्रदर्शिता।

स्वप्नसृष्टिर्नेशकृता। सा व्यष्टिमनसः कल्पनामात्रम्। तस्यां उपलब्धिर्येन सा सृष्टा तस्यैव नान्येषाम्। अथ सर्वैश्चिराय समानतयोपलभ्यमाना व्यावहारिकी जागृत्सृष्टिस्तु समष्ट्यात्मनेश्वरेण कल्पितेति सा स्वाप्नसृष्टिवत् क्षणिकव्यष्टिविज्ञानात्मिकेति केनापि मंतुमशक्या। व्यष्टिजीवो हि जागृत्या स्वप्ने सुषुप्तौ समाधौ मूर्च्छाया वा कस्यामप्यवस्थायामास्ताम्। ईशसृष्टिः स्वीयस्वातंत्र्येण सुचिरं तिष्ठत्येव। जीवोऽयं सुप्तो मूर्च्छितः किंवा समाधिस्थश्चेदपि तावतेशसृष्टेर्लोपो न जायते। समष्टिकल्पितसृष्टेर्व्यावहारिकी व्यष्टिकल्पितसृष्टेश्च प्रातिभासिकी सत्ता विज्ञेया। देवता गुरुः शास्त्रं धर्मः अधर्मः सुकृत दुष्कृतं स्वर्गः नरकः साधनानि सदाचारः उद्योगः विषयभोगः इत्यादय. सर्वे व्यावहारिकसत्तांतर्भूताः प्रकाराः समवगंतव्याः। इत्थमस्य जगतो व्यावहारिकसत्ताया असाधारणं वैशिष्ट्यं विद्यत इति स्वप्नवद्भ्रमत्वमेव तस्या

इति कथनं मतं वा नैव समंजसम् । तेन शास्त्रादेर्वैयर्थ्यमापद्येत । तच्च तवैवानिष्टम् ।

अतोऽद्वैतवेदांतशास्त्रे येऽजातवाददृष्टिसृष्टिवादकल्पनावादाश्चेत्यादयो वादाः संति ते निर्गुणोपासकाधिकारिसाधकमंतरेणतरैर्याथार्थ्येनाधिगंतुं सुतरामशक्या इति भृशमव्यवहार्यास्ते वादाः सूत्रभाष्ये भाष्यकारैर्न पुरस्कृता इति स्वैरमत्या कथंचिन्निश्चेतुं तदेव च स्वकपोलकल्पितं मतं दृढीकर्तुं साप्रतिकाना लोकाग्रणीना धोरणं परिदृश्यते । परं त्वेतादृशेन व्यावहारिकोपयुक्ततोपजीव्यक्षुद्रमोहेन नैव प्रणीतं सूत्रभाष्यं भगवत्पादैः श्रीमच्छंकरमस्करींद्रैः । अपि तु— पारमार्थिकदृष्ट्या बौद्धीयबाह्यार्थवादस्य विज्ञानवादस्य च खडनं माडूक्यकारिकाभाष्ये यथा कृतं, सूत्रभाष्ये तथा करणमप्रस्तुतमेवेत्यालोच्य नानुष्ठितम् । यतो बौद्धा यथाऽऽत्मनः पारमार्थिकीं सत्तां नैव मन्वते । तर्हि यस्य जगतः पारमार्थिकसत्तास्वरूपस्य विवेचनं— तदीयप्रक्रियांतर्गतदोषप्रदर्शनप्रकरणेऽसंगतमेव । किं च सूत्रकारमांडूक्यकारिकाकारयोः पृथग्विचारसरण्योपरिप्रणीतं भाष्यं मूलानुसार्येव युक्तम् । न मूलाननुसारि । अतस्तस्मिन् प्रभिन्नताऽपरिहार्येव । मांडूक्यकारिकासु बाह्यार्थवादविज्ञानवादयोः खंडनं व्यावहारिकदृष्ट्याऽविधाय पारमार्थिकदृष्ट्यैव विहितम् । यतस्तत्र प्रदर्शिते बाह्यार्थवादीयपूर्वपक्षे—

"समुदाय उभयहेतुकेऽपि तदप्राप्तिः"

२।२।१८

इति सूत्रप्रदर्शितसमुदायासिद्ध्यधिकरणवद्बाह्यार्थवादस्य केवलं स्वरूपमनुक्त्वा बाह्यार्थस्य पृथक् सत्तापि संसाधिता । प्रत्ययवैचित्र्यस्य दुःखाद्युपलब्धेश्च हेतुभूतं बाह्यार्थास्तित्वमकामेनाप्यंगीकार्यमेव । यतो विज्ञानं सौरप्रकाशवद्वैचित्र्यहीनम् । अतः प्रत्ययवैचित्र्यादेः केवलं तादृशं विज्ञानं केवला मनोभावना वा हेतुरिति कथनं रंभास्तंभवन्निःसारम् । अतस्तत्कारणं बाह्यार्थजालं मंतव्यमेव । सत्येवं बाह्यार्थाः सत्या इति वस्तुवादः पुरतः समुल्लसति । किंतु तत्वतो विचार्यमाणे स चिराय नैवावस्थातुं प्रभवति । तथा हि—

घट इति विज्ञानं प्रति हेतुभूतो बाह्यो घटरूपोऽर्थो यद्यप्यावश्यकः। तथापि स घटः किमात्मक इत्यालोचने कृते छांदोग्योपनिषदुपदिष्टः—

"वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यारुणेयः सिद्धांतः पुरतः समुज्जृंभते। अर्थाद्घट इति नामरूपं च मिथ्यैव। मृत्तिकैव सत्या। यतो मृत्तिकां विहाय घटस्य पृथगस्तित्वमणुमात्रमपि न विद्यते। घटस्योपादानं मृत्तिका। तां विहाय घटाख्यकार्यस्य पृथक् सत्ता नैवास्तीति रीत्या मूलकरणान्वेषणे कृते मृत्कारणजलादिभ्यः पृथङ् मृदोऽपि सत्ता नास्तीति क्रमेण शब्दस्य प्रत्ययस्य च पर्यवसानं यावत् कारणस्य निश्चयो न जायत इति बाह्यार्थस्य स्थिरं स्वरूपमेव न सिध्यति। अर्थात्—अजातिरेवांततः परिशिष्यते जगतः। "एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते" इति।

मा. का. ४।७१।

किं च- रज्जुसर्पमृगजलशुक्तिरूप्यादिभ्रमेषु विज्ञानविषयः सत्यः सर्पः, सत्यं तोयं, सत्यं रूप्यं किमपि नास्ति। तथा स्वाप्नविज्ञानस्यापि बाह्यार्थावलंबनं न विद्यते। एवं सत्यस्य बाह्यनिमित्तस्याभावेऽपि स्वप्ने सुखाद्यनुभवः समागच्छति। जीवो हि स्वाज्ञानवशतस्तादृशप्रतीतेस्तत्र बाह्यं निमित्तमन्विष्यति बाह्यार्थं कल्पयति चेत्येव। एवमपि बाह्यार्थस्य सत्यत्वं नायाति। वस्तुतस्त्वात्मनः पृथक्किमपि कदापि कुत्रापि नास्तीत्येतत् "नेति नेति-अतोऽन्यदार्तम्" इत्यादिश्रुत्यनुसारिबाह्यार्थवादखंडनं पारमार्थिकदृष्ट्या कृतम्। न तु तद्बौद्धमतनिरासमात्रैकपरमिति ज्ञेयम्।

अथ बहिर्यदि घटपटादयः परमार्थतोऽसंतोऽपि चित्तदृश्या इति मिथ्यैव भासंते। तर्हि तेषां कल्पकं चित्तं यद्भासते तदपि तथैव मिथ्यादृश्यमिति वक्तव्यम्। इत्थं कालत्रयेऽपि बाह्यार्थस्यासिद्धौ सत्यां चित्तस्य बाह्यविषयेण साकं स्पर्शस्याप्यसंभव एव। तथा सति चित्तदृश्यरूपं चित्तमेव नोत्पद्यते। निमित्ताभावादित्येव परमार्थतः सिध्यति।

निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु।
अनिमित्तो विपर्यासः कथं तस्य भविष्यति॥

तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।
तस्य पश्यंति ये जातिं खे वै पश्यंति ते पदम् ॥
मां. का. ४।२७,२८।

तस्मात्—

“ तस्यापि चित्तस्य जायमानावभासताऽसत्येव जन्मनि युक्ता भवितुमित्यतो न जायते चित्तम् । यथा चित्तदृश्यं न जायते ” इति ।
मा. का. भाष्यम् ।

बौद्धास्तु—चित्तमुत्पद्यते क्षणिकं दुःखि शून्यमनात्मं चेति चित्तस्य जनिमत्वं क्षणिकत्वं दुःखित्वं शून्यत्वमनात्मत्व चेत्यादयो धर्मा मन्वते । तदयुक्तम् । यतः—

‘ धर्मिज्ञानं विना धर्मज्ञानासंभवः ’

इति नियमाद्धर्मिणश्चित्तस्य ज्ञानमादौ भाव्यम् । तच्च न संभवति । स्वस्य स्वविषयकत्वासंभवात् । अन्यथा जात्वप्यदृष्टस्वस्कंधारोहणस्य स्वस्मिन् प्रसंगापत्तिः । ततश्चित्तस्य दृश्यत्वाभावात् तद्वृत्तिधर्माणां सुतरां दृश्यत्वस्याऽसंभवः । तदसंभवे तेषामस्तित्व दूरापेतमेव । सति दर्शने सत्यं मिथ्या वा सिध्यत्यस्तित्वं कस्यापि । अतस्तत्सिध्यर्थं चित्तादन्यो द्रष्टा काममपेक्षितः । किंतु तादृशं सुस्थिरं द्रष्टारं ते बौद्धा नांगीकुर्वंति । अतो निष्प्रमाणं निर्युक्तिकं ततो निःसारं तेषां तन्मतमिति विवेकिभिरवगंतव्यम् ।

परमार्थतस्तु—नित्यश्चिद्रूप आत्मैव सर्वं न ततोऽन्यत् किमपि । “ सर्वं खल्विदं ब्रह्म । आत्मैवेदं सर्वम् ” इति श्रुतेः । तस्मात्— सर्वाः कल्पनाश्चित्तस्पंदनानि वाऽऽत्ममायाविलासा एवेति कारिकाकारकृतविज्ञानवादिखंडनस्य तदनुसारिकारिकाभाष्यस्य च तात्पर्यं सुधीभिरवगंतव्यम् । बाह्यार्थश्चित्तं च नोत्पद्यते । तदुत्पादकं हि कारणं नोपलभ्यते समन्विष्यापि । इत्थं चित्तदृश्यचित्तयोरजातिमुपदिश्य परमार्थतश्चिद्रूपस्यैकस्यात्मनः सत्तां वस्तुतः प्रतिपादयंति कारिका इति सिद्धम् । अथ जागृत्प्रपंचस्य भ्रमभिन्नत्वेन ज्ञातस्य

व्यावहारिकी सत्ता सूत्रकारैर्यथोक्ता तथा कारिकाकृद्भिरपि तल्लौकिकं ज्ञेयमित्युक्त्वा सा स्वीकृतैव ।

"सवस्तु सोपलंभं च द्वयं लौकिकमिष्यते"

मा. का. ४।८७।

"सता वस्तुना सह वर्तत इति सवस्तु । उपलंभेन सह वर्तत इति सोपलंभम् । शास्त्रादिसर्वव्यवहारास्पदं ग्राह्यग्राहकलक्षणं द्वयं द्वैतम् । लौकिकं लोकप्रसिद्धम् । एवंलक्षणं 'जागरितमिष्यते वेदान्तेष्वपीति । मा. का. भा."

इत्यनेन ग्रंथेन ।

अथापि बाह्यार्थतत्त्वविवेचनवज्जागृदवस्थातत्वे विविच्यमान उभयत्रापि तत्वस्याऽग्रहणमज्ञानावरणरूपा निद्रा वा । तथा रज्जुसर्पवत्—अन्यथाग्रहणरूपः स्वप्नो विक्षेपो वा । इदं दोषद्वयं समानमेव ।

"स्वप्ननिद्रायुतावाद्यौ"

मा. का. १।१४।

स्वप्नोऽन्यथाग्रहण सर्प इय रज्वाम् । निद्रा तत्त्वाप्रबोधलक्षण तमः । ताभ्या स्वप्ननिद्राभ्या युक्तौ विश्वतैजसौ । अतस्तौ कार्यकारणबद्धावित्युक्तौ । इति भाष्याच्च ।

किंच "आदावंते च यन्नास्ति वर्तमानेऽपि तत्तथा"

मां. का. २।६।

यत् आदौ अंते च नास्ति । तद्वर्तमानसमयेऽपि नास्त्येवेति नियमाज्जागृत्स्वप्नयोः साधर्म्यं विद्यते । अतो व्यवहारमपेक्ष्य सूत्रकारोक्तिः—

"वैधर्म्याच्च न स्वप्नादिवत्"

ब्र. शा. भाष्यम् २।२।२९।

सत्यपि वैधर्म्ये परमार्थतो जागृत् स्वप्नवन्मिथ्यैवेति निश्चीयते ।

जागृदवस्थासंबंधिपदार्थानां ये ये विशेषास्ते स्वप्नकाले स्वाप्नपदार्थसंबंधित्वेनापि प्रतीयंते । न तत्र विशेषः । उभेऽप्यवस्थे मिथः समानमेव

मिथ्यात्व सूचयतः । इत्थमिय कारिकाकृता स्वप्नजाग्रदवस्थाविषयिणगतिमा पारमार्थिकी दृष्टिरस्ति ।

" तस्माज्जागरिते स्मृतम् । यथा तत्र तथा स्वप्ने. " २।४।

जाग्रद्वृत्तावपि त्वंतश्चेतसा कल्पितं त्वसत् ।
बहिश्चेतोगृहीत सत् दृष्ट वैतथ्यमेतयोः ॥ २।९।

सर्वे धर्मा मृषा स्वप्ने कायस्यार्तनिदर्शनात् ।
सवृतेऽस्मिन् प्रदेशै वै भूताना दर्शनं कुतः ॥ ४।३३।

विपर्यासाद्यथा जाग्रदचिंत्यान् भूतवत्स्पृशेत् ।
तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥ इति । ४।४१

मा. का.

एवमपि—ईश्वरस्तस्य च मायामयी सृष्टिरित्येतयोर्व्यवहारतः सत्यत्व मत्त्वा यथायथ लौकिकशास्त्रीयव्यवहारकरणमेतत् परमार्थमार्गसंबध्यत्यावश्यकमेकं सोपान विद्यते । तदुपेक्ष्य समस्तस्य जगतः प्रातिभासिकसत्वागीकारोऽजातिस्वीकारो वेयं निर्गुणोपासकस्य ज्ञानप्रतिक्रियाऽत्यतं दुर्घटा । नैव सामान्यजनसुलभा । " तच्च तेषा वर्त्म येषा विदितं परमार्थतत्त्वम् । सामान्यबुद्धिरन्यो लोको न गाहते—न विषयी करोतीत्यर्थः । "

मा. का. भा. ४।९५।

अनयोर्द्वयोर्भिन्नप्रक्रिययोः संकरकरणमयमेत्र विचारातर्गतो महान् दोषः ।

अथ बौद्धतत्त्वदर्शने यद्यपि बाह्यार्थनिरासो ज्ञानस्य च केवलस्य कल्पनेत्येवमद्वैततत्त्वसान्निध्यं प्रदर्शितम् । तथाप्यद्वय परमार्थतत्त्वं नोपवर्णितम् । तत्तु वेदात एव सम्यगुपदिष्टम् ।

" ज्ञानज्ञेयज्ञातृभेदरहितं परमार्थतत्त्वमद्वयमेतन्न बुद्धेन भाषितम् । यद्यपि बाह्यार्थनिरासकरणं ज्ञानमात्रकल्पन चाद्वयवस्तुसामीप्यमुक्तम् । इद तु परमार्थतत्त्वमद्वैतं वेदातेष्वेव विज्ञेयमित्यर्थः " मा. का. भाष्यम् ४।९९।

इत्येवं बौद्धाना क्षणिकविज्ञानवादो व्यावहारिकदृष्ट्या पारमार्थिक-दृष्ट्या चाऽसमर्थनीय एवेति सूत्रभाष्ये कारिकाभाष्ये च प्रतिपादितम् । न तत्र वस्तुतो विरोधो विसंगतिर्वा किंचिदपीति निःसंदिग्धमधिगंतव्य सुधीभिरिति।

इत्येवं संवादात्मना तदुत्तरस्वरूपेण च सद्गुरुपदानुसंधानात्मकं यदुपासनं श्रद्धापुरःसर यथामति मयानुष्ठितं तज्जगद्गुरुश्रीमदाद्यशकराचार्यचरणारविंदयोः समर्पितमस्त्विति सादरमभिधायालं करोमीति सर्वं शिवम् ॥ श्रीः ॥

शास्त्र शारीरमीमासा देवः साबसदाशिवः ।
आचार्याः शंकराचार्याः संतु मे जन्मजन्मनि ॥

इति श्रीशंकरोपास्तिविमर्शः ॥

---

॥ श्रीः ॥

कृष्णासरित्तीरपूतवेणेग्रामनिवासिना ।
पूर्वजार्जिनतत्रत्यावनिस्थानाल्पवृत्तिना ॥१॥
मारुलकरेत्यन्ववायनाम्ना नृहरिशर्मणा ।
अधीततर्कमीमासाद्वयश्रीरागनाथिना ॥२॥
नागेषुवस्वींदुमिते (१८५९) शाके ईश्वरवत्सरे ।
जगद्गुरुश्रीशंकरार्यपदपद्मविभूषितम् ॥३॥
करवीरलसत्पीठ वंद्य समधितिष्ठता ।
विद्याशंकरभारतीत्याह्वन यतिना मया ॥४॥
नागांगदंतींदुमिते (१८६९) सर्वजिन्नाम्नि वत्सरे ।
समुच्चयो धार्मिकाणा विमर्शाना सुशोभनः ॥५॥
दर्पणः श्रौतधर्मस्य कृतो जनहितैषिणा ।
सोऽयमीशप्रसादेन चिर तिष्ठतु भूतले ॥६॥

॥ अशेषप्राणिना शुभं भूयात् ॥

इति धार्मिकविमर्शसमुच्चयस्य द्वितीयविभागः समाप्तिमगात् ॥

॥ संपूर्णश्चायं धार्मिकविमर्शसमुच्चयग्रंथः ॥

# अशुद्धिसंशोधनम् ।

| पृष्ठांकः । | पंक्तिः । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ४ | ७ | स्यामंगलमूर्ते | स्या मंगलमूर्ते |
| ४ | ९ | प्रहर्तास्ते | प्रहर्तारस्ते |
| ४ | १० | ताद्दशामानुषापसदाः | ताद्दशा मानुषापसदाः |
| ४ | १७ | रध्यात्मिक | राध्यात्मिक |
| ४ | २२ | मनोभृशमुदात्तं | मनो भृशमुदात्तं |
| ६ | २४ | वाक्यस्थ किंशब्द | वाक्यस्थकिंशब्द |
| ७ | १९ | किं शब्दात् | किंशब्दात् |
| ८ | ८ | इच्छाचाज्ञाते | इच्छा चाज्ञाते |
| ९ | ११ | शृणु | शृणु |
| १३ | ४ | शृणोति | शृणोति |
| १३ | २६ | धिःकरोति | धिक्करोति |
| १५ | १९ | विमर्ह | विगर्हण-- |
| १६ | ६ | युतेन । | युतेन |
| १६ | १७ | संबधे, | सबंध |
| १७ | २ | लबनेन | लंबनेन |
| १७ | २ | विरोथि | विरोधि |
| १७ | ६ | धिाष्ठत | धिष्ठित |
| १७ | १९ | पुरत. | पुरतः |
| १८ | १४ | तेऽऽत्येवं | त एव |
| १९ | १ | रचतीति | रचयतीति |
| २० | ३ | धयि . | धायि |

| पृष्ठाङ्कः। | पंक्तिः। | अशुद्धम्। | शुद्धम्। |
| --- | --- | --- | --- |
| २० | १६ | चापासना | चोपासना |
| २१ | १ | द्वैत श्रुतीनां | द्वैतश्रुतीनां |
| २५ | ४ | परमार्थिकी | पारमार्थिकी |
| २७ | २२ | जुहुया दव | जुहुयादेव |
| २८ | २० | वेदात ना | वेदांतानां |
| २९ | ७ | कल्पन | कल्पनं |
| ३१ | २३ | परेशत्यस्य | परेशत्वस्य |
| ३२ | २४ | तन्वत्र | नन्वत्र |
| ३४ | ९ | योगिक भेदाश्रय | योगिकभेदाश्रय |
| ३८ | २० | रापतत: | रापातत: |
| ४० | २१ | १ व. ३।१ | क. ३।१ |
| ४२ | १७ | तदज्ञान | तदज्ञानं |
| ४८ | २० | मा।हात्मान | महात्मान |
| ५३ | ३ | साधरणा | साधारणा |
| ५९ | ७ | साकाशाज्जन्म | सकाशाज्जन्म |
| ६५ | ४ | मूर्तय: | मूर्ती: |
| ६७ | १४ | प्रत्यक्ष | प्रत्यक्षं |
| ६७ | १९ | परिणामोयद्वन्नोत्पद्यते | परिणामो यद्वन्नोत्पद्यते |
| ६९ | ६ | द्वयाख्यातृभि: | द्व्याख्यातृभि: |
| ७० | १ | शरीरादन्यं | शरीरादन्यत् |
| ७५ | ६ | उत्पन्नतयाकार्यत्वात् | उत्पन्नतया कार्यत्वात् |
| ७६ | १ | जन्मपर- | जन्मपरं- |
| ७८ | १५ | रेकैस्यै | रेकैकस्यै |
| ८१ | २१ | अहमेवेत्थ | अहमेवेत्थं |